प्राह—“भो गुरो ! प्रसद्य मह्यं विद्यां देहि” । गुरोरग्रे धनुर्हस्ते लात्वा बाणं तत्र संयोज्य चिन्तितानि वृक्षपत्राणि विध्यति । एवं बाणैः पत्रेषु हस्त्यश्वादिरूपाण्युत्कीर्तयति ( किरति ) । एकदा वनेऽर्जुनेन तादृंशि पत्राण्युत्कीर्णानि दृष्ट्वा दध्ये—“नूनं गुरुणा प्रतिज्ञां विस्मृत्य कस्यापीयं विद्या दत्ता, नो चेदेवं कः करोति ?” । ततोऽर्जुनो गुरुं पप्रच्छ—“भगवन् ! त्वया प्रतिज्ञा भिन्ना ?” । द्रोणः प्राह—“मत्प्रतिज्ञा पाषाणरेखावदचलाऽस्ति” । ततः संशयपरौ द्वौ वने गतौ । ताभ्यां दृषन्मयी ( मृण्मयी ) द्रोणाचार्यप्रतिमा दृष्टा । स च भिल्लः प्रातरिति गुरुं नत्वा प्राह—“अर्जुनवन्मह्यं धनुर्विद्यां वितर” एवं प्रोच्य स वृक्षस्थानि पत्राणि भिनत्ति । ततस्ताभ्यां भिल्लः पृष्टः—“तव को गुरुः ?” । स प्राह—“मम गुरुर्द्रोणाचार्यः” । इत्युक्त्वा तेन गुरुमूर्तिर्दर्शिता, उक्तं च—“अनयाऽहं शिक्षितो विद्यां” । भक्त्या किं किं न स्यात् ? । ततोऽर्जुनः खिन्नोऽभूत् । ततो द्रोणो भिल्लं जगौ—“मत्प्रसादात्तव विद्यासिद्धिरभूत्, अथ मम मार्गितं देहि” । सोऽवक्—“इदं वपुस्तवैव, यद्रोचते तद्याचनीयं” । द्रोणेन दक्षिणहस्ताङ्गुष्ठो याचितः, भिल्लेन स दत्तः । ततः पार्थतः किञ्चिदूना विद्याऽभूत्, परं भिल्लो द्रोणोपरि न मनाग् द्विष्टोऽभूत् । इति स्थापनातः कार्यसिद्धिः प्रोक्ता । लोकोत्तरग्रन्थेऽपि प्रोक्तमस्ति ज्ञातासूत्रे—मल्लिजिनकारितकाञ्चनस्त्रीमूर्त्या षण्नराः पूर्वभवसुहृदो वैराग्यं प्रापुः । तथाऽभयकुमारनिष्पादितकयवन्नामूर्तिं वीक्ष्य तत्पुत्रा मोहं गता भूयो भूयस्तदङ्के तस्थुः । इति सर्वं दृष्टान्ततो ज्ञेयं । तथा श्रीजिनप्रतिमा दृष्टाऽपि गुणकर्त्री स्यात् । तथाहि—पृथ्वीपुरे जिनदासश्रेष्ठी परमार्हतः । तस्य पुत्रो देवदत्तः,

स सप्तव्यसनपरः । तं प्रति पिता प्रत्यहं धर्मशिक्षां प्रयच्छति, परं स शठत्वान्न गृह्णाति प्रकृतिवक्रत्वेन च । एकदा पित्रा कृपया गृहप्रवेशद्वाराभिमुखे शुभस्थले श्रीमज्जिनमूर्तिः स्थापिता । ततः प्रत्यहं श्रेष्ठी पूजां विधाय स्तौति—"हे जगत्त्रयाधार ! त्वन्मूर्तिस्तु ममात्मस्वरूपदर्शने आदर्शरूपाऽनादिभवभ्रान्तिं निवारयति । यथा कश्चिद्धंसबालो बककुले कथञ्चिद्गत्वा स्थितः, तेन सह वृद्धिं प्राप्तः । एकदा राजहंसं वीक्ष्य स बालो दध्यौ—अहो ! अस्य कान्तिः स्वरूपं वर्णः स्वरो गमनं च मत्तुल्यमेव, अस्य मम च द्वयोर्मध्ये को भेदोऽस्ति ? इत्थं निर्णये क्रियमाणे तस्य स्वस्य च स्वरूपादि अभेदत्वेन निर्णीतं तेन बालेन । तथा स्वबुद्ध्या बककुलं तु स्वज्ञात्याचारतः सर्वथा भिन्नं विज्ञाय तन्मुक्त्वा राजहंसं दृष्ट्वा यत्स्वात्मीयं राजहंसत्वं तदेव स्वीकृतं । एतस्योपनयोऽयं—राजहंसस्थानीयो जिनेशः, हंसबालसमो जीवः, संसाराष्टकर्ममिथ्यात्वगुरुरूपं बकवृन्दं, अनादिभवाभ्यासात्तेन सह वृद्धिं प्राप्तः, लघुकर्मणा श्रीजिनमूर्त्यादिकं वीक्ष्य स्वपरविवेचनेन स्वस्वरूपं स्वधर्मं प्रकटीकरोति, इत्यादि स्वबुद्ध्या योज्यं । अतो हे वीतराग ! हंसबालवन्ममुद्धरणाय त्वत्स्थापना भवान्तकर्त्र्येव" । स श्रेष्ठी एवं नित्यं तं जिनं स्तौति । तस्य पुत्रस्तु जिनं पश्यति परं न स्तौति न च वन्दते । तदा श्रेष्ठिना गृहद्वारं ह्रस्वीकृतं । ततः स पुत्रो गृहमध्ये नीचैर्भूत्वैति, अभिमुखं जिनबिम्बं पश्यति । एवं पित्रा द्रव्यतो वन्दनां कारितः । भावस्त्वात्माधीन एव । ततः स श्रेष्ठिसूनुरायुःक्षयेण मृत्वाऽन्तिमोदधौ मत्स्यत्वं प्राप । तत्र भ्रमन् सन् एकं

जिनप्रतिमाकारधरं मत्स्यं ददर्श । यतो नादियवलयाकारं मुक्त्वाऽनेकनरादिरूपेण मत्स्या भवन्तीति वृद्धवाक्यं । अतस्तत्र जिनबिम्बाकृतितुल्यरूपं वीक्ष्य जातिस्मृत्या पूर्वभवं विज्ञाय पश्चात्तापपरो दध्यौ—"अहो ! मत्पित्राऽनेकधा बोधितोऽप्यहं न बोधं गतः, धिङ्मां, अहो ! अनेकदोषमुक्तो जिनोऽपि नाराधितः । अधुनाऽहं तिर्यङ् किं कुर्वे ?। पुनर्दध्यौ—"अद्याप्यत्र भवे धर्मं करोमि" इति ध्यात्वा सूक्ष्ममत्स्यसचित्तजलहिंसानियमं जग्राह । शनैः शनैर्जलतो बहिर्निःसृत्यानशनं त्रीन् दिवसान् यावत्सम्यक् प्रपाल्य स्वर्गे देवपदं प्राप । तत्रापि शाश्वतीं जिनप्रतिमां पूजयन्नवधिज्ञानेन सर्वस्वरूपं विदन् "जिनबिम्बोपकारो महान्" इति लोकानां ज्ञापनाय भावजिनाग्रे एत्य द्वादशपर्षत्समक्षं प्राह—"हे वीतराग ! त्वन्मूर्तिरपि साक्षात्प्रभुरिवोपकर्त्री निर्धारिता मयाऽनुभूता चेत्युक्त्वा नृत्यं विधाय स्वर्गमलंचकार । तदनु सभ्यैः पृष्टं तत्स्वरूपं यथाजातं प्रभुणा निगदितं । सर्वेऽपि जिनमूर्तिवन्दनादिषु तत्परा बभूवुः ॥

दृष्टाऽपि मूर्तिर्जिननायकानां, यत्रापि तत्रापि शुभायतिस्था ।
स्यात्सौख्यकर्त्री जिनदेवतुल्या, तस्याश्च युक्तिर्गदिता स्तुताऽत्र ॥ १ ॥

॥ इत्यब्ददिनपरिमितहितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थस्य वृत्तौ त्रयोदशस्तम्भे व्याख्यानम् ॥ १८७ ॥

## ॥ व्याख्यानम् ॥ २७७ ॥

अथ नवरात्रिदिनेषु अष्टम्यां वहुचराचण्डिकादुर्गाशक्त्यादिपूजार्थं वहुप्राणिवधोऽनेकैर्निष्पाद्यते तन्निवारणार्थं यशोधरदृष्टान्तमाह—

मेषादिघातैस्तनुते कृपाघ्नो, दुर्गादिपूजां नवरात्र्यहस्सु ।
मात्राज्ञया पिष्टककुर्कुटं घ्नन्, यशोधरः साम्ब दधौ (इतो) भवौघम् ॥ १ ॥

स्पष्टः । अत्रार्थे ज्ञातं चेदम्—राजपुरे मारीदत्तनृपोऽभूत् । तस्य चन्द्रमारीनामा गोत्रदेवी । प्रत्यहं तस्याः स्तवनं पुष्पादिभिरर्चनं च नृपः करोति । आश्विनशुक्लप्रतिपद्दिनादारभ्य नवमीं यावत् कन्द-मूलदुग्धघृतफलाद्याहारं विधाय तदग्रे तिष्ठति । लौकिकपर्वनवरात्रव्रतेन तामाराधयति । तदा गोत्रदेवी-तृप्त्यर्थं होमवलिदानार्थं छागादिलक्षजीवान् हन्ति मनुष्ययुगलं च । अष्टमीदिने तु विशेषेण होमं जी-वानां वितनोति । तत्पुरेऽन्यदा गुणधराचार्याश्चतुर्मासीं स्थिताः । तद्विनेयोऽभयरुचिर्महात्माऽस्ति । तच्छिष्याऽभयमती साध्वी संयमतपःक्रियातत्परा विद्यते । अथाभयरुचिर्धृतशीलशुचिस्तपोधनश्चतुरोऽभि-ग्रहान् कृत्वाऽऽहाराय नगरमध्येऽटति । तदा राजपुरुषैस्तं मुनिमाकृष्य नृपान्तिकमानीतः सः । राजा तमाह—"हे शास्त्रोपदेशक ! त्वच्छास्त्रे नवरात्रदिनेषु गोत्रदेवीपूजनफलं कीदृशं वर्णितं होमादिकं च ?" । इति नृपेण पृष्टः संयमी स्माह—"हे राजेन्द्र ! मया प्राग्भवे एकः पिष्टकुर्कुटो हतस्तेन सप्तसु भवेषु भ्रान्तः, तव च का गतिर्भविष्यति ?" । ततो नृपः सप्तभवस्वरूपं पप्रच्छ । मुनिवरोऽवक्—

अवन्त्यां पुर्यां यशोधरो नृपः। तस्य जननी चन्द्रवत्याह्वाऽभवत्। तस्य स्त्री नयनावली। तस्यास्तनुजो गुणधरो जातः। एकदा संसारोद्विग्नो वैराग्यपरो नयनावलीं प्राह—"अहं दीक्षां ग्रहीष्यामि"। रात्रौ तेनेदं स्वप्नं लब्धं—'सप्तमगवाक्षस्थितो मात्रा भूमौ पातितः'। प्रभाते मातुरग्रे तेन तन्निवेदितं। ततो जननी यशोधरं प्राह—"हे वत्स! त्वं चामुण्डादेव्यै छागादिजीवैर्बलिदानं कुरु"। नृपः प्राह—"नाहं कुर्वे प्राणात्ययेऽपि"। ततो जनन्याऽनेकोपालम्भान् दत्त्वा सलज्जः कृतः। मात्रा पिष्टकुर्कुटः पुत्राय बलात्कारेण दत्तः। पुत्रेण पिष्टकुर्कुटो हतः शक्तिदेव्यग्रे। अथ राज्ञः स्त्री सुगीतं गायन्तमेकं कुब्जं नरं वीक्ष्य मोहिता प्रपञ्चं विधाय नृपाज्ञां लात्वा निजावासान्तिके ररक्ष। नृपे सुप्तेऽवसरं प्राप्य तेन सह स्वैरं राजस्त्री विलसति स्म। तच्चरित्रं राज्ञैकदा ज्ञातं दृष्टं च, तथापि क्षमापरो मौनं चचार। प्रभाते गुणधरे पुत्रे राज्यं दातुं सोद्यमी नृपो जातः। ततः स्त्रियाऽपि चिन्तितं—"मम चरित्रं स्वामिना ज्ञातं, अतोऽहं भोजने विषं दत्त्वा मारयामि, अन्यथा कुब्जसौख्यभ्रष्टां मां विधास्यति"। इति ध्यात्वा तया भोजने विषं क्षिप्तं। ततो नृपे व्याकुले जाते तया कण्ठेऽङ्गुष्ठं दत्त्वा मारितः। ततस्तन्माताप्यचिरान्मृता। नृपो मयूरो जातः, माता तु सारमेयत्वेनोत्पन्ना। दैवात्तौ द्वावपि धृत्वा वनेचराभ्यां क्रीडार्थं गुणधरनृपस्य उपायनीकृतौ। नृपो हृष्टः मयूरं पञ्जरे क्षिप्त्वा श्वानं बबन्ध। ततो मयूरेण नयनावलीकुब्जौ दृष्टौ। तस्य जातिस्मरणं जातं। यदा नयनावली तं शिखण्डिनं हस्ते गृह्णाति तदाऽयं चञ्चुप्रहारं बहुधा द्वेषेण नित्यं करोति, ततो नृपमात्राऽऽभरणैर्हतो मूर्छां गतो मयूरो गवाक्षात् पतितः। नृपसमीपे

शुना झटिति स गृहीतः। तं न मुञ्चति। ततो नृपेण सारीपट्टेन श्वा हतः। द्वावपि मृतौ १। ततो मयूरो मृत्वा नकुलो जातः, श्वा च सर्पः। तत्रापि युद्धं कृत्वा विनष्टौ २। ततः सिप्रायां मत्स्यौ जातौ। चन्द्रवतीमत्स्यजीवो मात्स्यिकैर्हतः। यशोधरमत्स्यो नयनावलीगुणधरयोरर्पितः। तया पाचितः। जातिस्मरणं प्राप्य मृतः ३। चन्द्रवती गुणधरपशुपालगृहेऽजात्वेनोत्पन्ना, यशोधरस्तत्पुत्रोऽजो जातः। स मातरमजां कामयन् पशुपालेन मारितः, मृत्वा तत्रैव स्ववीर्ये समुत्पन्नः। गर्भिणी अजा गुणधरेण सेवकहस्ताभ्यामानाय्य हता, गर्भादजः कर्षितः, गृहे पालितः। एकदा गुणधरेण पूर्वजदिने पञ्चदश महिषा मारिताः। ब्राह्मणा भोजिताः। तैराशीर्वादो दत्तः—"तव पिता स्वर्गे क्रीडां करोतु"। तन्निशम्याजस्य जातिस्मरणं जातं। नयनावल्याः कुष्ठव्याधिः पापोदये समुत्पन्नः। तां दुःखार्त्तां वीक्ष्य सोऽजो हृष्यति। एकदा राज्ञो भोजनावसरे तमजं पुष्टत्वप्राप्तं मत्वा सूपकारेण हत्वा पक्त्वा च राज्ञः परिवेषितः। चन्द्रवतीजीवः कलिङ्गदेशे महिषो जातः। सार्थवाहसार्थेन उज्जयिन्यां समागतः। महिषेण राजतुरगो नद्यां पानार्थमागतो मारितः। ततो राज्ञा क्रोधेन महिषो बद्धः। अग्नौ प्रज्वालितः ५। ततः षष्ठभवे द्वावपि कुर्कुटावभूतां। केनापि गुणधरायार्पितौ। नित्यं परस्परं युद्धं ताभ्यां कारयति। राज्ञस्तौ वल्लभौ जातौ। एकदा राजा वने क्रीडार्थं गतः। कालदण्डतलारक्षोऽपि तौ ताम्रचूडौ लात्वा कानने गतः। तत्रैकं मुनिं नत्वा प्राहतुः—"हे स्वामिन्! अज्ञानविहितकर्मफलमावाभ्यां बहुधाऽनुभूतं, इदानीं भवदुःखपरम्पराविच्छेदकृद्व्रतादिकं प्रयच्छ, त्वां दृष्ट्वाऽऽवां भवोद्विग्नौ जातौ स्वः"। मुनिना कुर्कुटयोरनशनं दत्तं।

गुणधरेणान्तःपुरमध्यस्थेन शब्दवेधिना बाणेन द्वावपि हतौ ६। सप्तमे भवे गुणधरभार्याजयावलीकुक्षौ उत्पन्नौ, यशोधरस्य जीवो तनुजो जातः, चन्द्रवत्या जीवोऽभयमती नाम पुत्री जाता। परस्परं स्नेहपरौ विरहमसहन्तौ अष्टवार्षिकौ जातौ। अथ नृपो गुणधरस्ताभ्यां सहारण्ये आखेटकार्थं गतः। शशकादिजीववधार्थं श्वानो मुक्ताः। तेऽरण्यसंस्थितं ध्यानपरं मुनिं दृष्ट्वा मुनिप्रभावाद्धतशक्तयो बभूवुः, अनेकशः प्रेरिता अपि व्याघुट्य पश्चादायान्ति। ततो राजा लज्जितः "अहो! पशुभ्योऽप्यहं पापात्मा, वधमनिच्छतामप्येनाभ्भुनोऽहं भूयो भूयः प्रेरयामि"। इतश्चार्हद्दत्तः श्रावको मुनिवन्दनार्थं गच्छन्नृपेण दृष्ट्वा पृष्टः—"क्व गच्छसि?"। स प्राह—"धर्मश्रवणार्थं"। राजाऽवक्—तर्ह्यहमप्येमि"। ततः स श्राद्धः पञ्चाभिगमान् विधाय तिखुत्तो आयाहिणं पयाहिणं करित्ता० वन्दित्ता० मुन्यन्तिके स्थितः। नृपोऽपि श्राद्धानुसारेण विधिं विधायेति देशनामशृणोत्—

"अहो दैवं मित्रमिव कदाचिदनुकम्पते। कदाचित् परिपन्थीव निःशङ्कं प्रणिहन्ति च ॥ १ ॥"

इत्यादिदेशनान्ते नृपः स्वपितृगतिं पप्रच्छ। मुनिः प्राह—"किं पृच्छसि? लज्जाकरमिदं चरित्रं, यतस्त्वयैव पितामही पिता चानेकशः पूर्वजदिनेषु भक्षितौ। शृणु" इत्युक्त्वा मुनिना यशोधरचन्द्रवत्योः सप्तापि भवाः प्रागुदिता एव प्रोक्ताः। श्रुत्वेति नृपो मूर्छां महादुःखं च प्राप्य पश्चात्तापं चकार। अभयरुचिरभयमतिश्च जातिस्मरणं प्राप्य स्वानुभूतं सर्वं प्रत्यक्षं ज्ञात्वा गुणधरं प्राहतुः—"आवां दीक्षां ग्रहीष्यावः"। नृपोऽपि प्राप्तवैराग्यः पुत्रीपुत्राभ्यां युतः साम्बयशोधरचरितं निशम्य भवोद्विग्नैरन्यैः पञ्च-

शतीसामन्तादिभिः परिवृतः पुत्रं राज्ये न्यस्य तद्विहितनिष्क्रमणोत्सवपूर्वं संयमं बभार । सर्वेऽपि महातपः कुर्वन्ति । साम्प्रतमत्र पुरे ते गुणधराचार्याः समागताः ।

इति मुनिमुखाच्छ्रुत्वा मारदत्तनृपः प्राह—"हे अनगार ! गुणधरो मम भगिनीपतिः, त्वं च भागिनेयः । मया पापिना तादृशगुरुयोगाभावतो लक्षशो जीवा नवरात्रदिनेषु गोत्रदेव्याः पुरो निहताः ।" तत एकलक्षजीवा बलिदानार्थं समूहीकृतास्ते गुरुवचनान्मुक्ताः । पुरेऽमारिपटहो नृपेण दापितः । अभयरुचिगुरूपदेशाच्चण्डमारी देव्यपि श्राविकाऽभूत् ।

कन्दमद्याशनात्तीव्रं[1], नवरात्रदिनेष्वथ । शाक्ता देवीबलिं भुक्त्वा, वदन्त्यहो उपोषिताः ॥ १ ॥

द्वादश वासरानस्वाध्यायस्ततः साधोः श्रुतपाठो न तेषु ।

महामिथ्यात्वपर्वाणि, ज्ञात्वा त्यक्तानि जैनिभिः । मारदत्तादयः पश्चात्स्वात्मधर्मं प्रपेदिरे ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ त्रयोदशे स्तम्भे १८८ व्याख्यानम् ॥

---

१ "कन्दमूलमद्याहाराः" इति वा पाठो ज्ञेयः ।

## ॥ व्याख्यानम् ॥ १७ए ॥

अथ चैत्यशब्दार्थं प्राह—

प्राहुर्जिनौकस्तद्बिम्बं चैत्यशब्देन सूरयः । अतस्तद्भावतो वन्द्यं बह्वात्मगुणदायकम् ॥ १ ॥

स्पष्टः । नवरं चैत्यशब्देन स्वपरशास्त्रशब्दार्थमजानानाः केचिद्वदन्ति ज्ञानं वनं मुनिं चेत्यादि स्वकल्पनया, तदसत्यं, यतः कोशादिशास्त्रेषु चैत्यशब्देन प्रतिमैव। तद्यथा—व्याकरणे चिति संज्ञाने (चिन्त्यते) संज्ञा उत्पाद्यते काष्ठकर्मादिषु प्रतिकृतिं वीक्ष्य, यथा एषाऽर्हत्प्रतिमा । तथा धातुपाठवृत्तौ च–चित्र चयने इत्यस्य धातोः प्रयोगश्चैत्यमिति । तथा नाममालायां–चैत्यं विहारे जिनसद्मनि, अस्या एव स्वोपज्ञवृत्तौ चीयत इति चितिस्तस्य भावश्चैत्यं, भावे यण् । तथाऽमरकोशे–चैत्यमायतनं प्रोक्तमिति । (तथा) हैमानेकार्थसङ्ग्रहे–चैत्यं जिनौकस्तद्बिम्बं चैत्यमुद्देशपादप इत्यर्थत्रयं प्रोक्तमस्ति । आगमेऽपि–"चेइ अट्ठ निज्जरट्ठिय अणिस्सिहं (यं) बहुविहं करेइ" चैत्यानि जिनप्रतिमा एतासां योऽर्थः प्रयोजनं स तथा तत्र निर्जरार्थः कर्मक्षयकामो वैयावृत्त्ययोग्यक्रियया उपष्टम्भनं अनिश्रितं कीर्त्यादिनिरपेक्षं इति प्रश्नवृत्तौ । तथाऽऽश्रवद्वारे तथैव सूत्रे चैत्यशब्दः प्रोक्तः, सोऽप्येवं योज्यः–कीर्त्यादिसंसारहेतुभिर्यच्चैत्यादिकार्यं तदाश्रव एवान्तर्भवति, अथवा कुदेवचैत्यादिकरणं चेति । तथा सर्वत्र सूत्रे श्रावको जिनादिवन्दनोत्सुक एवं स्वान्ते दधाति, यतोऽहं कल्लाणं मंगलं देवयं चेइयं विणएणं पज्जुवासामि, एतस्मिन् सूत्रपाठे

केचिद्बाला वदन्ति—देवो धर्मदेवः साधुस्तस्य चैत्यमन्तिमज्ञानं जातं तदा देवास्तं प्रति यथा स्तुवन्ति तथाऽहं स्तवीमि, परं नायमर्थो युक्तिक्षमः, तथाहि—भगवत्यङ्गे तामलिश्रेष्ठिनेत्थं ध्यातं—संबंधिपरियणो अगारसक्कारेइ कल्लाणं मंगलं देवयं चेइयं विणएणं पज्जुवासेमि, अत्र पूर्वोक्तबालार्थः कथं घटते ? अयं श्रेष्ठी मिथ्यात्वित्वात्कथं जैनधर्मिजनप्रशंसनीयवार्तां जानाति ? अत आबालगोपालप्रसिद्ध एवार्थः कार्यः, तमेवाह, तथाहि—देवः स्वाभीष्टेश्वरस्तस्य चैत्यं बिम्बं तद्देव पूजयामि स्तवीमि अयमर्थः समर्थः। तथाऽपरो मिथ्यात्वी एवं वदति, यतः—जीवविराधनां धर्मकरणार्थं यस्तनोति स मन्दबुद्धिः प्रोक्तः प्रश्नोपाङ्गे, अथ प्रतिमाघटनार्चनकाले यो जीवहिंसां करोति स मन्दबुद्धिरेव एवमर्थं पश्यति, परमस्यार्थोऽयमयुक्तः, यतो यज्ञादिकार्ये ये जीवाजीवाद्यज्ञा धर्मबुध्ध्या छागादिवधं वितन्वन्ति त एव ज्ञेयाः। यदि त्वमेतमर्थं जिनचैत्यादौ निदधासि तर्हि त्वं पृष्टव्योऽसि नद्युत्तारे विहारसमये क्रियाकाले गुरुवन्दनार्थगमने उपाश्रयादिधर्मस्थानकरणे इत्यादौ सर्वत्र जीववधो भवति न वा ? यदि भवति तर्हि त्वमपि मन्दबुद्धिरेव जातः। अतः—

"जा जयमाणस्स भवे विराहणा सुत्तविहिसमग्गस्स। सा होइ निज्जरफला अज्झत्थ विसोहिजुत्तस्स ॥१॥"

अस्या अर्थो धार्यः। यस्तु निजकुटुम्बाद्यर्थमपि नारम्भं करोति प्रतिमाप्रपन्नादिस्तस्य मा भूज्जिनबिम्बविधानमपि, प्रतिमा मान्यार्हा श्राद्धोचिता, तत्क्रिया तु द्रव्याधीनैव, सा तु द्वादशव्रतिनां कार्या, द्रव्यार्चादि पञ्चमहाव्रतमध्ये नास्ति शिक्षाव्रतवत्, सम्यक्त्वमध्येऽप्यस्ति। अत्रोपपातसूत्रोक्तोऽम्बडा-

लापकः, स चायं—"अंबडस्स णो कप्पइ अण्णउत्थिए वा अण्णउत्थियदेवयाणि वा अण्णउत्थियपरिगहियाणि अरिहंतचेइयाणि वा वंदित्तए" इति । तथा भगवत्यङ्गे आरम्भेणापि धर्मप्राप्तिरुक्ताऽस्ति, तथाहि—"समणोवासगाणं भंते तहारूवं समणं वा (समणिं वा) अफासुएणं अणेसणिज्जेणं असणं पाणं जाव पडिलाभेमाणस्स किं कज्जंति ? गोयमा ! बहुतरीया से णिज्जरा कज्जति, अप्पतराए से पावकम्मे कज्जइ" इतिसूत्रे ग्लानादौ आधाकर्माहारस्यापि आज्ञा दत्ता, तत्र जीवहिंसां विना तन्न स्यात्, तद्वज्जिनबिम्बादावपि भाव्यं । अथवा कश्चिन्मुनिदेहं कीटजीवैराविद्धं वीक्ष्य श्राद्धोऽनुबन्धहिंसाऽभावेन यथौषधं सावद्यं जीवानन्दवैद्यवत्करोति तद्वदत्रापि चैत्ये ज्ञेयं । अत्र परः प्राह—साधवः स्वयं चैत्यं न कुर्वन्ति, श्राद्धानां क्रियां चानुमोदन्ते, चैत्यक्रियासु प्रेरयन्ति, तदा कृतकारितानुमोदितप्रकारेण सर्वेषां तुल्यफलमिति यस्त्रिकसंयोग उक्तस्तन्मध्ये स न्यूनीकृतः, तस्मात्ते मार्गलुम्पका एवेति । सूरिः प्राह—हे निबिडजाड्यतमसावृत ! चतुर्धाधर्ममध्ये दानं स्वयं न ददाति दातारं चानुमोदते तत्क्रियासु च श्राद्धान् प्रेरयति, तत्कथं त्वयाऽङ्गीकृतं ? तद्वदत्रापि । अथवा कश्चिच्चर्मीमारको मात्सिकश्च मत्स्यादिहिंसापरः पात्रस्थापितभोजनं मुनिं दृष्ट्वा प्राह—"हे मुने ! त्वं मम भोजनं ददासि तदेमे सर्वे जीवा मुक्ता भवन्ति, सर्वान् जीवान् पुनर्जले स्थापयामि, अन्यथाऽहं हनिष्यामि" । इति श्रुत्वा लाभमनेकधा पश्यन्नपि जिनाज्ञालोपभिया न तस्य किञ्चिदपि ददाति, परं श्राद्धान् प्रेरयति, अहिंसां च तत्पुरोऽनुमोदते, तद्वदत्राप्यर्थो योज्यः । ननु पाषाणबिम्बपूजादिकरणेन न कश्चिदुपयोगः, न हि पूजादिभिस्तानि तृप्यन्ति

॥ २० ॥

तुष्यन्ति वा, न चातुष्टाभ्यो देवताभ्यः फलप्राप्तिः । नैवं, चिन्तामण्यादिभ्योऽपि फलप्राप्त्यविरोधात्, यतो वीतरागस्तोत्रे—

"अप्रसन्नात् कथं प्राप्यं फलमेतदसङ्गतम् । चिन्तामण्यादयः किं न फलन्त्यपि विचेतनाः ॥ १ ॥"

जिनप्रतिमायां वीतरागस्वरूपाध्यारोपेण पूजाविधिरुचितः । तथा भगवत्यङ्गे चारणश्रमणाधिकारे–विज्जाचारस्सणं भंते तिरियं केवतिए गतिविसए पण्णत्ते ? गोयमा ! इत्तो एगेण उप्पाएणं माणुसुत्तरे पव्वए समोसरणं करेइ, तहिं चेइयाइं वंदइ, बितिएणं णंदीसरस्स वरदीवे समोसरइ, तहिं चेइयाइं वंदइ, ततो पडिणियत्तए हव्वमागच्छइ, इहं चेइयाइं वंदइ । विज्जाचारस्सणं भंते उड्ढं केवतिए गतिविसए पण्णत्ते ? गोयमा ! से णं एगेणं उप्पाएणं णंदणवणे समोसरइ बितिएणं उप्पाएणं पंडगवणे समोसरइ तहिं चेइयाइं वंदइ, ततो इहमागच्छइ इह चेइयाइं वंदइ" तत्र द्वीपादौ शाश्वतानि अत्र भरतादौ अशाश्वतानि बहुवचनत्वादत्र चैत्यानि जिनबिम्बान्येवेति न तु ज्ञानपदार्थः, इत्याद्यनेकयुक्त्या चैत्यं जिनौकस्तद्बिम्बमिति स्थितं, अलं प्रसङ्गेन । अतो भावतस्तद्बिम्बं वन्द्यं । वन्दनफलं पद्मचरित्रे त्वेवमुक्तं—

मणसा होइ चउत्थं छट्ठफलं उट्ठियस्स संभवइ । गमणस्स यमारंभे होइ फलं अट्ठमोवासो ॥ १ ॥
गमणे दसमं तु भवे तह चेव दुवालसं गए किंचि । मज्झे पक्खुववासो मासुववासं च दिट्ठम्मि ॥ २ ॥
संपत्तो जिणभवणे पावइ छम्मासि फलं पुरिसो । संवच्छरिअं तु फलं दारदेसट्ठिओ लहइ ॥ ३ ॥

पायरिकणेण पावइ वरिससयफलं तउ जिणे महिए । पावइ वरिससहस्सं अणंतपुणं जिणे थुणिए ॥ ४ ॥
सयं पमज्जणे पुणं सहस्सं च विलेवणे । सयसाहस्सिया माला अणंतं गीयवाइए ॥ ५ ॥

एतच्चैत्यदर्शनं बहुजीवानामनेकगुणकारकं मतं । यतो दशवैकालिकनिर्युक्तौ—

सिज्जंभवं गणहरं जिणपडिमादंसणेण पडिबुद्धं । मणगपियरं दसविकालियस्स निज्जुत्तिकहगं वंदे ॥ १ ॥

तत्सम्बन्धस्त्वयं—श्रीजम्बूस्वामिपदे प्रभवसूरिः श्रुतकेवलेन निजपदोचितमुनिं स्वशिष्येषु गच्छेषु (च) वीक्षमाणो नापश्यत् । ततः श्रुतदृष्टिं बहिर्ददौ, तदा राजगृहे पुरे शय्यंभवं विप्रश्रेष्ठं योग्यं ज्ञात्वा तत्र गुरुराययौ । स विप्रोऽनेकविप्रान्मेलयित्वा यज्ञकर्माकारयत् । तद्बोधहेतवे यज्ञस्थले दक्षं साधुद्वयं प्रैषयत् । ताभ्यां "अहो कष्टमहो कष्टं तत्त्वं न ज्ञायते परं" इति पदद्वयं तत्तत्र गत्वोचे, तदुक्त्वा सहसा पश्चाद्वलितौ । ततः शय्यंभवो दध्यौ—"नूनमिमौ साधू मृषाभाषिणौ न भवतः, अतो यज्ञाचार्यांस्तत्त्वं पृच्छामि" । इति विचार्य ताँस्तत्त्वं पृष्टं, तैरुक्तं—"यज्ञमेव तत्त्वं" । ततः संशयपरः साधुपृष्ठे तूर्णं धावन् सूरीशपार्श्वमाजगाम । तं पप्रच्छ । सूरीशः प्राह—"हे भावुक ! तत्त्वं त एव कथयिष्यन्ति यदि त्वं भापयिष्यसि" । ततः सोऽसिमाकृष्य यज्ञाचार्यमभ्येत्याभ्यधात्—"तत्त्वं वद, नो चेदमुनाऽसिना शिरस्ते छेत्स्याम्यहं" । ततो भयं प्राप्तो यज्ञगुरुर्यज्ञस्तम्भादधःस्थापितां श्रीशान्तिजिनमूर्तिं ददौ । तन्मूर्तिं वीक्ष्य दध्यौ—"अहो ! निरुपमेयं मूर्तिः" । ततस्तन्मूर्त्या सह स विप्रः सूरिमेत्य पप्रच्छ देवादिस्वरूपं । एकेनो-

पदेशेन प्रबुद्धः। क्रमागतं मिथ्यात्वं मुक्त्वा निराशातनायां भूमौ मूर्तिं संस्थाप्य ततः प्रव्रज्य क्रमेण स द्वादशाङ्गीमध्यैष्ट तदा सूरिभिः स्वपदे स्थापितः।

इतश्च सगर्भां पत्नीं स प्रव्रजन् जहौ, ततः पूर्णे गर्भे तया मनकाख्यः सुतः सुषुवे। सोऽप्यष्टवार्षिको बालैः सह क्रीडन् तैरपितृकोऽपितृक इति तर्जितः। ह्रिया तेन स्वाम्बा पृष्टा। सा गद्गदवाण्याऽऽह—"हे वत्स! त्वत्पित्रा गुरुसन्निधौ दीक्षाऽऽदत्ता, किं करोम्यहं? श्वेताम्बरेण किञ्चिदुक्त्वा धूर्तितः, अधुना स मुनीशो जातः पाटलीपुत्रपुरे विहरति"। ततः स बालो जननीमनुज्ञाप्य जनकं द्रष्टुमुत्सुकस्तत्पुरे जगाम। मुनीनां समूहे एत्य पप्रच्छ—"क्वास्ति शय्यम्भवो मुनिः?" तेऽपि श्रुतोपयोगेन निजाङ्गजं विजज्ञुः। ततो वसतिमानीय तैर्दीक्षितः। तस्य षाण्मासिकं शेषमायुर्ज्ञात्वा द्वादशाङ्ग्याः समुद्धृत्य दशवैकालिकं नाम सूत्रमपाठयत्। सोऽधितसूत्रः पूर्णायुर्मृत्वा सुरोऽभूत्। ततस्ते सूरयोऽप्यश्रुपातं चक्रुः।

ताँश्च तन्मुनयः प्रोचुर्यदि स्वामिन् भवादृशाः। विमोहरक्षसा ग्रस्तास्तत्क्व स्थास्यति धीरता॥ १॥

सूरीशः प्राह—"न मोहवशंगतोऽहमश्रुपातं विदधामि, किंत्वयं मत्सूनुरचिरात्स्वर्गं प्राप्तः। यदि महदायुस्तदेतोऽप्यधिकं पदं प्राप्स्यत् इतिहेतुतो विस्मयविषादावभूतां। सर्वेऽपि प्राहुः—("यदि भवत्सूनुः स तदा किमस्मान्न कथितं पूज्यैः? अस्माकं वैयावृत्त्यं च किं कारितः?"। सूरिरुवाच—) "ज्ञापने तस्यात्मनः कार्यं न सिध्यति"। ततः स युगप्रधानसूरीशो भुवि चिरं भव्यावलीं प्रबोध्य दिवं ययौ।

यच्चैत्यशब्देन जिनेन्द्रमूर्तिस्तत्कथ्यते प्राज्ञवरेण सत्यम् ।
शश्यम्नवश्चैत्यसमीक्षणेन, तच्छब्दधात्वर्थमियाय चित्ते ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रंथस्य वृत्तौ त्रयोदशस्तम्भे व्याख्यानम् ॥ १८९ ॥

## ॥ व्याख्यानम् ॥ १९० ॥

अथ पूजाविधिं प्राह—

कल्याणकानि पञ्चापि स्मर्तव्यान्यर्चनक्षणे । पञ्चैवाभिगमा धार्या त्रिधिमनुलङ्घ्य पूजनम् ॥ १ ॥

स्पष्टः । नवरं पञ्च कल्याणकानि यथा पूजायां स्मर्तव्यानि तथोच्यते—प्रथमं पूजातोऽर्वाक् हस्तौ संयोज्य मनसीत्थमधिकृतजिनसम्बन्धि च्यवनकल्याणकं धार्यं–हे जिनेन्द्र ! अमुकविमानतस्त्वं च्युत्वाऽमुकजननीकुक्षाववतरितः, अस्मादृशां जीवानां तारणाय त्वया स्वरूपं धृतं, अहो ! अस्माकं महद्भाग्यं ! इति कृत्वा जिनदेहतो निर्माल्यादि दूरे करणीयं, तदपि यत्र कुन्थ्वादिजीवोत्पत्तिर्न स्यात्तत्र स्थाप्यं १ । ततो लोमहस्तेन जिनाङ्गं परामृश्य सुगन्धजलभृङ्गारं करे कृत्वा जिनं स्नपयेत्, तत्रैव सर्वं जन्मकल्याणकस्वरूपं भावनीयं २ । ततः शुभ्रांशुकैरङ्गरूक्षणं कार्यं, तत्स्नात्रजलमपि यत्र जीवहिंसाऽऽ-

शातना न स्यात्तत्रैव निक्षेप्यं । अङ्गरूक्षणानन्तरं जिनाभिमुखः सन् भावयति अपगतश्मश्रुकूर्चादि-जिनाङ्गं वीक्ष्य—अहो ! अनेन जिनेनैतावद्भिः साधुभिः सह दीक्षा गृहीता, इत्यादिना दीक्षाकल्याणकं भाव्यं ३ । ततोऽङ्गपूजां सर्वां विधाय छत्रासनादिसर्वार्द्धि वीक्ष्य हृदयेऽष्टप्रातिहार्ययुक्तं केवलज्ञानकल्याणकं ध्येयं ४ । ततश्चैत्यवन्दनादिसमये पद्मासनकायोत्सर्गाद्यवस्थां प्रतिमां वीक्ष्य धार्यं—अहो ! अयं जिनः पर्यङ्कासनश्चिदानन्दमयः सिद्धिप्रदः प्राप्त इति मोक्षकल्याणकं स्वयं भाव्यं ५ । इत्थं कल्याणकानि स्मर्तव्यानि । तथा पञ्चैवाभिगमा जिनाग्रे धार्याः, तथाहि—जिनायतने गमनं पुष्पताम्बूलपूगीफलवं[1]कारभीक्षुरिकाकटारिकासूक्ष्मिकाकिरीटवाहनादिसचित्ताचित्तद्रव्यपरिहारेण १, मुकुटवर्जशेषाभरणाद्यचित्तद्रव्याणामपरिहारेण २, कृतैकपृथुलपटवस्त्रोत्तरासङ्गः ३, दृष्टे प्रभौ शिरस्यञ्जलिमारोपयन् "नमो जिणाणं" इति भणन्नमति ४, मनस ऐकाग्र्यं कुर्वन् ५ इति । तथा विधिमनुल्लङ्घ्य पूजनं विधिस्तु पूर्वसूरिनिगदितोऽयम्—

गृहचैत्यान्तिके गत्वा भूमिसंमार्जनादनु । परिधायोचितं वस्त्रं मुखकोशं दधात्यथ ॥ १ ॥
पुमान् परिदधेन्न स्त्रीवस्त्रं पूजाविधौ क्वचित् । न नारी नरवस्त्रं तु कामरागविवर्धनम् ॥ २ ॥
विशाल्ये शुचिप्रदेशे कुर्याद्देवालयं सुधीः । सौधे यातां वामभागे सार्धहस्ते च भूमिके ॥ ३ ॥
विदिग्भिः सह प्रतीचीं दक्षिणां वर्जयेद्दिशम् । पूर्वाशाभिमुखः स्थेयादुत्तराभिमुखोऽथवा ॥ ४ ॥

---

१ "बदाम" इति भाषायाम् ।

पूर्वस्यां लभते लक्ष्मीमग्नौ संतापसंभवः । दक्षिणस्यां भवेन्मृत्युर्नैर्ऋते स्यादुपद्रवः ॥ ५ ॥
पश्चिमायां पुत्रदुःखं वायव्यां स्यादसन्ततिः । उत्तरस्यां महालाभ ईशान्यां धर्मवासना ॥ ६ ॥
अंह्रिजानुकरांसेषु मस्तकेषु यथाक्रमम् । विधेया प्रथमं पूजा जिनेन्द्रस्य विवेकिभिः ॥ ७ ॥
सचन्दनं सकाश्मीर विनाऽर्चा न विरच्यते । ललाटकण्ठहृदये जठरे तिलकं पुनः ॥ ८ ॥
प्रभाते च सुवासेन मध्याह्ने कुसुमैस्तथा । सन्ध्यायां दीपधूपाभ्यां विधेयार्चा विवेकिभिः ॥ ९ ॥

यद्यप्येवं त्रिकालं पूजा न स्यात्तदाऽपि त्रिसन्ध्यं देवा वन्द्याः श्राद्धेन । यदागमे—"भो भो देवाणुप्पिया अज्जप्पभिए जावज्जीवं तिकालं एगग्गचित्तेणं चिइए वंदिअव्वे, इणमेव भो मणुअत्ताओ असुइअसासयखणभंगुराओ सारं ति । तत्थ पुव्वण्हे ताव उदगपाणं न कायव्वं जाव चेइए साहु अ न वंदीए । तहा मज्झण्हे ताव असणकिरियं न कायव्वं जाव चेइए न वंदिए । तहा अवरण्हेऽवि" इति ।

अर्हतो दक्षिणे भागे दीपस्य विनिवेशनम् । ध्यानं तु दक्षिणे भागे चैत्यानां वन्दनं तथा ॥ १ ॥
जिनस्य पूजनं हन्ति प्रातः पापं निशाभवम् । आजन्म विहितं मध्ये सप्तजन्मकृतं निशि ॥ २ ॥
जिणपूअणं तिसंझं कुणमाणो सोहए य सम्मत्तं । तित्थयरनामगुत्तं पावइ सेणिअनरिंदु व्व ॥ ३ ॥

अत्र जिनपूजाविधिर्द्रव्यभावभेदेन द्विविधोऽपि सम्यग्रीत्या कृतः स्याद्यदि भाष्यप्रवचनसारोद्धारवृत्त्युक्तः "दहतिगाहिगमपणगं" इत्यादिना चतुर्विंशतिमूलद्वारचतुःसप्तत्यधिकसहस्रद्वयोत्तरद्वारप्रमाणः पूजाविधिः प्रयुक्तः स्यात् । उत्तरभेदाश्च यदि स्वनामवत् कण्ठे कृता भवन्ति तदा पूजकस्य पूजाया

महत्फलं स्यादित्यादि विधिपूर्वकं विधीयमानं सर्वं देवपूजादिकमनुष्ठानं प्रशस्यतरं। सातिचारतया च कृतं तदा प्रत्यपायादेरप्यापत्तिः। चैत्यवन्दनादेश्चाविधिना विधाने प्रायश्चित्तमप्युक्तमागमे महानिशीथसप्तमाध्ययने सूत्रं—"अविहिचेइआइ वंदिज्जा तस्स णं पायच्छित्तं उवइसिज्जा, जओ अविहीए चेइआइ वंदमाणो अन्नेसिं असद्धं जणेइ" अत एव देवपूजाक्षणे मुख्यवृत्त्या विधिनैव मौनं विधेयं, तदशक्तौ पापहेतुवचः सर्वथा त्याज्यं, नैषेधिकीकरणेन गृहादिव्यापारनिषेधात्, तत एव पापहेतुसंज्ञाऽपि न कार्या। यथा धवलकवासी जिणहा श्रेष्ठी निःस्वो घृतकुतपकर्पासादिभारवहनेन खिन्नो भक्तामरस्तोत्रस्मरणेन तुष्टशासनसुरीदत्तवश्यकृद्रत्नमहिम्ना मार्गे एकदा दुष्टकर्मणा विख्यातं चौरत्रयं वीक्ष्यान्यान् सर्वान् वाणान् भङ्क्त्वा चौरसङ्ख्यामितान् त्रीनेव रक्षित्वा स्वात्मानमुपद्रोतुं समागतान् तान् त्रीनपि चौरांस्त्रिभिर्बाणैर्हतवान्। ततः पत्तने भीमदेवनृपोऽद्भुतं तदुदन्तं श्रुत्वा बहुमानपूर्वं तस्मै देशरक्षार्थं खड्गं ददौ। तदा शत्रुशल्यः सेनानीः सेर्ष्यमाख्यत्—

"खांडो तास समप्पिइ जसु खांडइ अब्भास। जिणहाइक्कु समप्पिइ तुल चेल्ल ज कपास॥ १॥"

श्रेष्ठी तं प्रत्याह—

"असिधर धणुधर कुंतधर सत्तिधराऽवि बहुअ। सत्तुसल्ल जे रणसूरनर जणणि ते विरल पसुअ॥ १॥

अश्वः शस्त्रं शास्त्रं वाणी वीणा नरश्च नारी च। पुरुषविशेषं प्राप्ता भवन्ति योग्या अयोग्याश्च॥ २॥"

---

१ खड्गः।

तदुक्त्या हृष्टो नृपस्तं तलारक्षकं चक्रे । तेन चौराश्चौर्यं मुक्त्वा स्थिताः । अन्येद्युः कश्चिज्जैनी सौराष्ट्रवासी चारणः "पूजायां श्रेष्ठिमनः कीदृग्वर्तते ?" इति परीक्षार्थं कृतवानुष्ट्रीचौर्यं । तत आरक्षकभटैर्गवेषयद्भिर्वैतालिकगृहे क्रमेलको दृष्टः, ततो भटैर्बद्धो वैतालिकः, प्रातर्देवपूजाक्षणे जिणहाग्रे नीतः । श्रेष्ठिना भृत्येभ्यः पुष्पवृन्तत्रोटनसंज्ञाकरणेन स्वाभिप्रायो ज्ञापितः । तदाऽवसरं प्राप्य चारणः प्राह—

"जिणहानइं जिणवरह, न मिलें तारोतार । जिण करें जिणवर पूजिइं, सो किम मारणहार ॥ १ ॥"

पुनः प्राह—

"चारण चोरि किम करें, जा खोलरू न माय । तुं तो चोरि ते करे जे त्रिभुवनमांहि न माय ॥ १ ॥"

इत्यादिचारणवाक्यतो लज्जां प्राप्य दध्यौ—"अहो ! मया जिनाज्ञा लुप्ता, एतावत्कालं यावन्मयाऽन्यतः पूजा कृता, परमनेनोक्तं यत्तत्त्वं तत्कदापि नादृतं, धिग्धिङ्मां" । ततश्चारणं गुरुमिव महामान्यं कृत्वाऽऽह—"त्वया सम्यग्भवकूपादुद्धृतोऽहं" । तदनु यदा पूजां विदधाति तदा विधिनैव भावेन च । अविधिकृतपूजाप्रायश्चित्तं साधोरुपान्ते गृहीत्वा निर्मलीबभूवेति ॥

प्रायश्चित्तं यथा नैति तथा सुधीः प्रवर्तते । आज्ञापूर्वं विधेर्भक्तिर्भव्यानामेव संभवेत् ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ त्रयोदश-
स्तम्भे १९० व्याख्यानम् ॥

—०:०:०—

अथाविधिनाकरणादकरणं वरमिति ये वदन्ति तान्प्रति शिक्षामाह—

अविधि विधेर्विधानाद्धि अकृतमेव वरं वदन्ति ये चात्र। एतदुत्सूत्रं ज्ञेयं यतोऽकृते गुरुता कृते लघुता ॥१॥

स्पष्टः। सूत्रेऽपीत्थमुक्तं, यतः—

अविहिकया वरमकयं उस्सुयवयणं भणंति समयन्नू। पायच्छित्तं अकए गुरुअं वितहकए लहुअं ॥ १ ॥

तस्माद्धर्मानुष्ठानं सर्वदा कार्यमेव, किंतु तत्कुर्वता सर्वशक्त्या विधिविधाने यतनीयं, यतः—

धन्नाणं विहिजोगो विहिपरकाराहगा सया धन्ना। विहिबहुमाणी धन्ना विहिपरकाऽदूसगा धन्ना ॥ १ ॥

कृषिवाणिज्याशनौषधदेवताद्यासेवनमपि विधिनाऽऽराधितमेव फलं ददाति। तथाहि—साकेतपुरपत्तने सुरप्रियनामा यक्षोऽस्ति, स सप्रत्ययः, प्रत्यब्दं यात्रादिने विचित्रं चित्र्यते। ततश्चित्रितो यक्षस्तं चित्रकं हन्ति, अचित्रितः पुनर्लोकं हन्ति। एवं बहवश्चित्रकरास्तेन यक्षेण निधनं नीताः। ततस्ते साकेतपुरीयचित्रकराः सर्वे पलायिताः, अन्यग्रामे ययुः। ततो राज्ञा प्रजामारीभीरुणा ते सर्वेऽपि चित्रकरा भटैर्धृत्वाऽऽनायिताः। ततस्तेषां नामानि पत्रेषु लिखितानि, तैर्नामपत्रैर्घटो भृत्वा मुक्तः। प्रत्यब्दं काचित्कन्या कुम्भात् पत्रकमेकं कर्षति, तस्मिन् पत्रके यस्य नाम निर्याति स यक्षस्य चित्रं करोति, इति तत्र व्यतिकरे जाते एकदा कौशाम्ब्याः कश्चिच्चित्रकरदारकश्चित्रकौशलसिद्ध्यै समायातः, तत्र काचिदेकपुत्रका

चित्रकरी स्थविरा वर्तते तस्या गृहे तस्थौ। तस्मिन् वर्षे तस्याः पुत्रस्य पत्रे निर्गते कृतान्ताह्वानलेखवत्सा वृद्धा कराघातैरुरो घ्नन्ती भृशं रुरोद। तदानीं प्राघूर्णकश्चित्रकारकस्तां वृद्धां पृच्छति—"हे मातस्त्वं किं रोदिषि?"। तया सत्य उक्ते कौशाम्बीचित्रकारदारकोऽवक्—"हे मातस्त्वं स्वस्था भव, तवाहमपि पुत्रोऽस्मि, तव पुत्रस्थानेऽहमेव यास्यामि"। तयोक्तं—"त्वं मम प्राघूर्णकः, त्वामहं कथं प्रेषयामि मृत्युहेतवे?" एवमुक्तिप्रत्युक्त्या बहु बोधितोऽपि स नाबुधत्। ततः स स्थविरापुत्रवारके गतः। तत्र गत्वा तेन चित्रकृद्दारकेण षष्ठं तपो विहितं, ततः कृतस्नानः कृताङ्गविलेपनो भूत्वा धौतवाससी परिदधे ततश्चारुचन्दनकस्तूरिकर्पूरागरुसंमिश्रवर्णककच्चोलकानि नवीनानि भृत्वा तथा नवकूर्चकानि कृत्वा तथाऽष्टपुटं मुखकोशं विधाय स चित्रकरो निर्भयः स्वस्थचित्तो यक्षं चित्रयामास। ततस्तं यक्षं चित्रयित्वा कृतानतिः स तत्पादयोर्लगितो विनयपूर्वमेवमवोचत्—"हे यक्ष! त्वद्योग्यं चित्रं कर्तुं कोऽपि न क्षमः, तन्मया यदयुक्तं कृतं भवति तत्त्वं क्षमस्व" इत्याद्युक्त्वा यक्षपादे निपतितः। ततस्तुष्टो यक्षः प्रीत्याऽवदत्—"भोः चित्रकरदारक! तुभ्यं यद्रोचते तद्याचस्व"। स जगाद—"हे तात! अस्यां पुर्यां मारीं निवारय, तथा चित्रकराणामभयं देहि, एतावतैव परप्रियेणाहं प्रीतोऽस्मि"। यक्षः प्राह—"हे परोपकारिन्! अद्य प्रभृति सर्वेषां लोकानां चित्रकराणां च कल्याणं भविष्यति, अथ स्वविषये किञ्चिद्याचस्व"। चित्रकृदूचे—"हे नाथ! यदि मयि तुष्टोऽसि तर्हि यद्रूपस्यैकदेशे दृष्टे तत्सर्वरूपं यथास्थितं चित्रयामि इति वरो दीयतां"। यक्षेण वरो दत्तः "एवमस्तु"। ततो यक्षस्तिरोदधे। स चित्रकारदारको

वरप्राप्त्या मुदितमानसः पुनः कौशाम्बीं समाययौ। एकस्मिन् दिने कश्चिद्दूतः शतानीकराजसदसि समागतो दूरदेशसंदेशानकथयत्। तदा स दूतो राज्ञा पृष्टः—"भो दूत! अन्यराज्येभ्यो मम राज्ये किं न्यूनमस्ति?"। तेनोक्तं—"स्वामिन्! तव राज्ये सर्वमप्यस्ति, परमेका चित्रसभा नास्ति, तत एकां देवसभानुकारिणीं चित्रसभां कारय"। राज्ञा तद्वचनं श्रुत्वा सौधर्मसभासदृश्येका सभा कारिता निजप्रासादसमीपे। सा सभा सर्वेषां चित्रकराणां चित्रकरणाय विभज्य दत्ता, तस्य च चित्रकरस्यान्तःपुरासन्नप्रदेशो भागो दत्तः। ततस्तेन चित्रकरेण जालान्तरेण देव्या मृगावत्या दिव्याकृतिर्दीप्यमानः पादाङ्गुष्ठो दैवाद्विलोकितः, तदङ्गुलि(ष्ठ)दर्शनात्तेन चित्रकरेण तस्या मृगावत्याः सर्वं रूपं यथास्थितं लिखितं। तदानीं तद्रूपलिखनावसरे करौ मषीलवोऽपतत्, तं लवं स ममार्ज, पुनर्लवः पतितः, एवं त्रिन्वारान् ममार्ज, ततस्तेन ज्ञातं—"अत्र देव्या लाञ्छनं भविष्यति"। ततस्तेन तत्र लाञ्छनं कृतं, यादृग्मृगावती वर्तते तादृशी तेन लिखिता, दिव्यानुभावतः किञ्चिन्न्यूनाधिक्यं तत्र नाभूत्। स चित्रकरस्तां लिखित्वा द्विप्रहरान्ते भोजनाय गृहं गतः, तावद्राजा शतानीकस्तां सभां विलोकयितुं तत्रागात्, तां चित्रसभामालोक्य भृशं हृष्टहृदयो यावद्बभूव तावत्तेन राज्ञा सा मृगावती सर्वाङ्गिणी दृष्टा, यावज्जङ्घायुगलं विलोकयति तावत्तत्र तन्मषीलाञ्छनं दृष्ट्वा कुपितो राजा—"अहो! अनेन मम भार्याया जङ्घालाञ्छनं कथं ज्ञातं? तन्नूनमनेन पापिना मम भार्या भुक्ता, अन्यथा जङ्घास्थलाञ्छनं कथं वेत्ति?"। ततः क्रोधात्सेवकानादिशत्—"भोः सेवकाः! एनं चित्रकारकं शूलायामारोपयत"। तच्छ्रुत्वा सर्वेऽपि चित्र-

कारका मिलिता एवमूचुः—"स्वामिन् ! एष केनापराधेन हन्यते ?"। राज्ञोक्तं—"अनेन जङ्घालाञ्छनं मृगावत्याः कथं ज्ञातं ?"। तैरुक्तं—"स्वामिन् ! यक्षप्रसादेनैष चित्रकारो रूपस्यैकदेशे दृष्टे सर्वाङ्गीणं यथास्थितं रूपं लिखति, ततो देव्या मृगावत्या अनेन पादाङ्गुष्ठो दृष्टः, तस्यानुसारेणामुना मृगावत्या रूपं लिखितं"। तत्प्रत्ययार्थं राज्ञा कुब्जिकामुखं गवाक्षे दर्शितं। ततस्तेन चित्रकरेण मुखानुसारेण कुब्जिकारूपं यथास्थितं लिखितं। तथापि राज्ञा स चित्रकृच्छिन्नसंदंशकोऽकारि। पुनस्तेन चित्रकरेण स यक्ष आराधितः, तेन वामपाणिना सा चित्रसिद्धिः दत्ता। तद्दिनादारभ्य चित्रकरो वामपाणिना चित्रं करोति। ततः स चित्रकारश्चेतसि चिन्तयामास—"धिङ्मम ज्ञानं, येनाहं निरपराधोऽपि मुधा संदंशच्छेदनेन विडम्बितः। तदाहं चित्रकारो यदैनं राजानं मूलादुन्मूलयामि। यतः—

"अशक्तः शक्तिसंपन्नमपि तं धामतोऽधुना। मूलादुन्मूलयिष्यामि कियानिन्द्रोऽपि धीमताम् ॥ १ ॥"

इति ध्यात्वा तेन चित्रकरेण पटे मृगावत्या रूपं लिखितं, तदा स्वस्वजनपरिवृतः कौशाम्ब्या निर्ययौ। शतानीकप्रत्यनीकं बलवन्तमवन्त्यधीशं चण्डशासनं चण्डप्रद्योतं ज्ञात्वाऽवन्त्यां गतः तन्मृगावतीरूपं पटे लिखितं पुरो मुक्त्वा राजानं ननाम। चण्डप्रद्योतस्तां पटे लिखितां मृगावतीं दृष्ट्वा मोहितस्तद्रूपं वर्णयति—"अहो ! रम्भातिरेकरूपं ! अहो ! अस्या लावण्यं ! अहो ! सुन्दराकृतिः !"। ततः स चित्रकरमपृच्छत्—"भोश्चित्रकर ! त्वयाऽऽत्मीयकलाकौशलदर्शनार्थमेषा सुन्दरी लिखिता ? किं वा कस्याश्चित्प्रतिरूपं विलिखितं ? सत्यं ब्रूहि"। चित्रकरेणोक्तं—"राजेन्द्र ! मयैतत्कस्याश्चित्प्रतिरूपं लिखितं,

परं यादृग्रूपमस्ति तादृग् ब्रह्मापि लिखितुं न शक्तोऽस्ति तर्हि किंमात्रा वयं मनुजाः ?" । चण्डप्रद्योतेनोक्तं—"तर्हि ब्रूहि, इदं कस्या रूपं ?" । चित्रकारेणोक्तं—"एषा मृगावती पटे लिखिता शतानीकनृपस्य पत्नी सुरराजपत्नीरूपाधिका तव योग्याऽपि विधेर्वैपरीत्यात्तेनाप्ता । अथानुकूले विधौ सा तव पत्नी भविष्यति" । इत्युक्त्वा चित्रकारस्तां पटे लिखितां मृगावतीं दत्त्वा स्वस्थाने गतः । तद्दिनादारभ्य चण्डप्रद्योतोऽचिन्तयत्—"एषा मृगावती शतानीकपत्नी सामवाक्येन बलात्कारेण वा मया ग्राह्या" । इति विचिन्त्य चण्डशासनेन चण्डप्रद्योतेन लेखं लिखित्वा शिक्षां दत्त्वा वज्रजङ्घाख्यो दूतः प्रेषितः । स कौशाम्ब्यां गत्वा शतानीकं नत्वा चण्डप्रद्योतवाचिकं व्याचक्रे—"भो राजेन्द्र ! मम स्वामिवाक्यं श्रूयतां, यथा—

तरुणा च मणिनैव त्वया भाति मृगावती । सा मह्यं प्रेष्यतां नांह्रौ मणिर्मौलौ हि युज्यते ॥ १ ॥

जीवितव्यं च राज्यं च रक्ष प्रेष्य मृगावतीम् । सर्वनाशोंऽशनाशेन रक्षणीयो विचक्षणैः ॥ २ ॥

ततः सकोपाटोपोऽरुणलोचनः शतानीको नृपोऽभ्यधात्—"भो दूत ! तव स्वामी किं विकलो वर्तते ? तथा तव स्वामी किं जीवितादुद्विग्नोऽस्ति ? तथा मम करेण मृत्वा नरकं गन्तुकामो भविता यो मत्तो मृगावतीं याचते" । इत्युक्त्वा भृशं निर्भर्त्स्य "दूतत्वादवध्योऽसि" इत्युक्त्वा च पश्चाद्द्वारेण निरवासयत् । ततस्तेन शतानीकेन निर्वासितो दूतो लोहजङ्घश्चण्डप्रद्योतान्तिके समागतः, शतानीकोक्तं सर्वं सत्यं न्यवेदयत् । ततश्चतुर्दशनृपैरावृतश्चण्डप्रद्योतः कौशाम्बीं प्रति प्रयाणं चक्रे । तस्मिन् सैन्ये प्रचलिते

धूलिधूसरदिग्भिः सूर्यो निस्तेजस्त्वं ययौ, तथा तत्सैन्यभारेण भूवलयं कम्पयामास । एवमविच्छिन्नप्रयाणैर्मार्गे संचरन् चण्डप्रद्योतः स्तोकैरेव दिनैः कौशाम्ब्यासन्ने समागतः । शतानीकस्तं समागतं ज्ञात्वा महाभयाद्भीतोऽतिसारेण महाव्याधिना बाधितो यममन्दिरं ययौ । अहो ! मरणं केनाप्युल्लङ्घितुं न शक्यते, यतः—

दिव्यज्ञानयुता जगत्त्रयनता येऽनन्तवीर्या जिना, देवेन्द्राः सुरवृन्दवन्द्यचरणाः सद्विक्रमाश्चक्रिणः ।
वैकुण्ठा बलशालिनो हलधरा ये रावणाद्याः परे, ते कीनाशमुखं विशन्त्यशरणा यद्वाऽविलङ्घ्यो विधिः ॥१॥
ये पातालनिवासिनः सुरगणा ये स्वैरिणो व्यन्तरा, ये ज्योतिष्कविमानवासिविबुधास्तारान्तचन्द्रादयः ।
सौधर्मादिसुरालयेषु सुखिनो ये चापि वैमानिकास्ते सर्वेऽपि कृतान्तवासमवशा गच्छन्ति किं शुच्यते ? ॥२॥

चण्डप्रद्योतभयाच्छतानीके मृते मृगावती चिन्तयति—"सूनुर्मेऽल्पबलस्तथा बालः, अतः प्रपञ्चबलेन शीलं पुत्रं च रक्षामि" । ततस्तया दूतमुखेनावन्तीशाय ज्ञापितं—"अहं त्वदधीना, परं मत्पुत्रबाल्यत्वात् सीमालशत्रुभूपा राज्यं ग्रहीष्यन्ति अतो मत्पुरे प्राकारं जलान्नपूर्णं कोशं च त्वं कारय" । ततो नृपेणावन्तित इष्टिकौघमानाय्य प्राकारः शीघ्रं कारितः । ततो राज्या प्रोक्तं स्वामात्यान् प्रति—"अयं दुर्गो द्वादश वर्षाणि यावत् केनापि न गृह्यते, ईदृशो जातः, शीलरक्षार्थं दुर्गरोधः कृतः" । इतश्च प्रद्योतेन साऽऽहूता प्राह—"हे नृप ! अहं चेटकराजपुत्रीत्वात्स्वप्नेऽपि एवमकार्यं न करोमि" । तच्छ्रुत्वा नृपो विलक्षः सन् दध्यौ—"अहो ! छलेन मत्सर्वस्वं गृहीतं, इदानीं युद्धसज्जा जाता, अहं पुनः पुरे गत्वा सज्जीभूय

समेमि" । ततस्तत्र गत्वा पुनरेत्य सैन्यभरेण पुरीमवेष्टयत् । तदा सा दध्यौ, यत् "अत्र श्रीवीरः समेति तदा वरं" । प्रभुरपि तत्पुण्यबलेन तत्राययौ । सा सर्वर्द्ध्या वन्दितुमगात् । तदा चण्डोऽपि तत्रैतः । तदाऽवसरं प्राप्य सा भूपाङ्के स्वात्मजं संस्थाप्य दीक्षां जग्राह । तस्मिन्नेव भवे केवलं प्राप्य मुक्तिं गता । इति प्रसङ्गाल्लिखितं, परम्—

दुष्टोऽपि यक्षो विधिनार्चितः सन्, जातः प्रसन्नस्तमिवात्र धर्मे ।
अत्यन्तशुद्धो विधिरेव योज्यः, सर्वज्ञपूज्यैरपि माननीयः ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थस्य वृत्तौ त्रयोदशस्तम्भे १९१ व्याख्यानम् ॥

—→•←—

## ॥ व्याख्यानम् ॥ १९२ ॥

अथ चैत्यद्रव्यापलपने दोषमाह—

अक्षतादेस्तु देवस्य भक्षको दुःखमाप्नुयात् । तत्ततो यत्नतो रक्ष्यं देवद्रव्यं विवेकिभिः ॥ १ ॥

स्पष्टः । भावार्थस्तु शुभङ्करज्ञातेन ज्ञेयः—

काञ्चनपुरे शुभङ्करश्रेष्ठी धनाढ्यो नित्यं जिनार्चावन्दनादिकं तनोति । एकदा जिनमूर्तिं नत्वाऽग्रे

स्थितः, तदा केनचित्सुरेण पूर्वं जिनाग्रे दिव्यतण्डुला बहवः पुञ्जत्रयीकृतास्तेन दृष्टाः। अपक्वानपि तान् सुगन्धीन् वीक्ष्य जिह्वास्वादवशंगतः श्रेष्ठी त्रिगुणाधिकान् स्वगृहादानीय तण्डुलाँस्तत्र मुक्त्वा तान् दिव्यान् जगृहे। स्वगृह एत्य तेषां तण्डुलानां क्षीरमपाचयत्। तेषां सुरभित्वं सर्वत्र प्रसृतं। इतश्च तद्गृह एको मासक्षपणः सुविहितसाधुर्भिक्षार्थं समेतः। श्रेष्ठिना क्षीरमध्यात् किञ्चिद्दत्तं। मुनिस्तु परमार्थमविदन् तमाहारं झोलिकायां मुक्त्वाऽग्रे चचाल। तदा मुनिस्तु सप्तचत्वारिंशद्दोषमुक्ताहारी अत एव शुद्धकोष्ठकधरस्तदयोग्याशनगन्धागतमहिम्ना दध्यौ—“अहो! महेभ्यावतारः श्रेष्ठोऽस्मदपि, यत्रेदं मनोहरमशनं यथेष्टं स्वेच्छया नित्यखाद्यं (भोज्यं)भवति”। एवं तदाहारागतगन्धेन चारित्रध्यानं मुनेर्दूरं गतं। इत्थं गुरुपार्श्वमगात्, तत्र च दध्यौ—“किं गुरुसमक्षमाहारालोचनेन? अद्य रुचिराहारोऽस्ति, लोभेन यदि स्वयमेवाहरेत्तदाऽहं किं कुर्वे? आलोचनयाऽलं”। ततः शीघ्रं स शिष्यो भोजनार्थं स्थितो दध्यौ—“अहो! अस्य स्वादो देवानामपि दुर्लभः, अद्यैव प्राप्तभवस्य सारो दृष्टः, एतावन्तं कालं यावन्मुधा मया देहो दमितः कृशीकृतश्च, एतादृगशनं नित्यं लभ्यते तस्यैव सफलं जन्मेति”। ततस्तदाहारं भुक्त्वा सुखं सुप्तो निद्रां प्राप। आवश्यकादिक्रियाकालेऽपि नोत्थितः। तदा सूरीशो दध्यौ—“नूनं सदा सुविनीतोऽपि अयमद्यैव प्रमादी जातः, तत्कारणमशुद्धाहारकरणमेव भावि”। ततः प्रभाते स श्राद्धः सूरीशं वन्दनाय समेतस्तं मुनिं सुप्तं वीक्ष्य हेतुं पप्रच्छ। सूरिः प्राह—“कल्ये आहारं कृत्वा सुप्तः, उत्थापितोऽपि नोत्तिष्ठति”। तच्छ्रुत्वा श्रेष्ठ्युवाच—“हे पूज्य! आहारस्तु कल्ये मद्गृहाद्गृहीतोऽस्ति”। गुरुः

पप्रच्छ—"त्वया सर्वदोषैर्विमुक्तं आहारं प्रतिलाभितो न वा ?"। स प्राह—"दोषस्तु कोऽपि न ज्ञातः, परं जिनगृहात्तएरुलास्त्रिगुणाधिकानन्यान्मुक्त्वा मया गृहीताः" इति भद्रकत्वात्सर्वं वृत्तान्तं जगाद। श्रुत्वेति गुरुः प्राह—"नार्हं तवेदं करणं, यतः—

जिणपवयणवुड्ढिकरं प्भावगं नाणदंसणगुणाणं। भरकंतो जिणदव्वं अणंतसंसारिओ होइ ॥ १ ॥
जिणपवयणवुड्ढिकरं पभावगं नाणदंसणगुणाणं। रक्खंतो जिणदव्वं परित्तसंसारिओ होइ ॥ २ ॥

तथा शृणु हे श्राद्ध! कस्मिंश्चित्पुरे एक इभ्यः प्रातिवेश्मिकमेकं नरं पीडयति। स निःस्वो दध्यौ—"यथायमिभ्यो मत्तुल्यः स्यात्तथाऽहं कुर्वे"। तत एकदा निष्पद्यमानमिभ्यगृहं दृष्ट्वा चैत्यगृहेष्टिकाखण्डस्तेन भित्त्यां प्रच्छन्नं चायितः। ततः क्रमेण तद्गृहे वसन्निभ्यो निःस्वोऽभवत्। तदा स निःस्वः प्राह—"मद्विडम्बनाफलं त्वयेदं प्राप्तं मत्कृतमवेहि"। ततः स इभ्यः सामवाक्यतस्तं समतोषयत्, ततः स स्वकृत्यं जगौ। तत इभ्येन तमिष्टिकाखण्डं भित्तितो निष्कास्य प्रायश्चित्तपदे नूतनं चैत्यं विदधे, तदा स पुनः सुखी बभूव। तस्मात् हे श्रेष्ठिन्! त्वया त्विदं भक्षितं, अतो महत्पापं लग्नं"। तच्छ्रुत्वा भीतः श्रेष्ठी प्राह—"हे पूज्य! ममापि कष्टे एव बहुद्रव्यहानिर्जाताऽस्ति"। सूरिर्जगौ—"हे श्रेष्ठिन्! तव तु बाह्यं धनं गतं, मुनेः पुनरान्तरं धनं विनष्टं। अत्रालोचनापदेऽधुना तव गृहे यावद्धनं वर्तते तद्व्ययेन चैत्यकरणे तव लाभोऽस्ति"। ततः श्रेष्ठिना तथा कृतं। ततः सूरी रेचकपाचकद्रव्यं पाययित्वा शिष्य-

कोष्ठकं शुद्धं चकार, तदाहारपात्रमपि गोमयरक्षालेपमयं कृत्वा दिनत्रयं यावत्सातपस्थले मुक्तं, ततो ग्राह्यं जातं । सूरिशिष्यस्तत्पापं तपसाऽऽलोच्य संयमेन स्वात्मसाधनं समाराधयत् ॥

श्राद्धो जोगाय देवस्वं मुक्त्वा मूल्यं समाधिकम् । नादद्यान्नैव दातव्यं श्राद्धानां च परस्परम् ॥ १ ॥

अथ तस्यैव दोषमाह—

दीपं विधाय देवानां पुरतो गृहमेधिना । तेन दीपेन नो गेहे कर्तव्यः कर्जलध्वजः ॥ १ ॥

स्पष्टः । अत्रार्थे ज्ञातमिदं—इन्द्रपुरे देवसेन इभ्यः । तस्यौकसि एकोष्ट्रिका प्रत्यहमेति । तां कुट्टयित्वा रबारिकः स्वगृहं नयति, पुनरपि पश्चादायाति । तत इभ्येन गुरवः पृष्टाः—"एषोष्ट्रिका मद्गृह एव रतिं कथं लभते ?" । सूरिः प्राह—"इयं पूर्वभवे जिनस्याग्रे दीपं विधाय तेनैव दीपेन दीपं कृत्वा गृहकार्याणि करोति स्म, धूपाङ्गारेण च चुल्हीं संधुक्षयति स्म, तेनेयमुष्ट्रिका जाता । पूर्वभवे तवेयं माता बभूव, अतस्त्वां पुत्रं गृहं च दृष्ट्वा रतिमेति । अथ त्वं तदग्रे गत्वा पूर्वभवनाम्नाऽऽलाप्यास्याः कर्णयोर्मध्ये देवस्वविनाशनं वृत्तं कथय, तेन सा बोधं जातिस्मृतिं च प्राप्स्यति" ततस्तेन तथा कृतं । सा ज्ञानमवाप्य सचित्तादिनियमं गुरुसाक्षिकं गृहीत्वा मनसोऽनुतापेन प्राक्पापं प्रवाह्य देवभूयं प्राप ।

अत एवोक्तं पूर्वसूरिभिः—

१ दीपः ।

जो जिणवराण हेऊ दीवं धूवं च करिअ निअकज्जं। मोहेण कुणइ मूढो तिरिअत्तं सो लहइ बहुसो ॥१॥

अतो देवदीपे सांसारिका लेखा न वाच्यन्ते, सावद्यं नाणकं न परीक्ष्यते, देवदीपाद्दीपः स्वकार्ये न क्रियते। उपलक्षणाद्देवसत्कचन्दनकाश्मीरजेन स्वललाटादौ तिलकं न कार्यं, देवजलेन करौ न प्रक्षाल्यौ, केनापि स्नानाद्यर्थं चैत्ये जलं मुक्तं स्यात्तदा न दोषः इत्यादिविवेकः कार्यः।

अथ पुनश्चैत्यद्रव्यं शीघ्रं देयमित्याह—

चैत्यायत्तीकृतं द्रव्यं दातव्यं शीघ्रमेव तत्। वृद्धिं च देववित्तस्य निष्पापेन नयेत्सुधीः ॥ १ ॥

स्पष्टः। अत्रेयं भावना—देवद्रव्यं क्षणमपि न स्थाप्यं। अन्यस्यापि ऋणस्य दाने विवेकिभिः सर्वथा न विलम्ब्यते तर्हि किं पुनर्देवस्वस्य? यस्तु सद्योऽर्पयितुमशक्तस्तेन प्रथममेव पक्षार्धपक्षाद्यवधिः स्फुटं कार्यः। अवध्युल्लङ्घने पूर्वोक्तदेवद्रव्योपभोगदोषप्रसङ्गः स्यात्। विलम्बकरणे सुश्राद्धस्यापि दुर्गति-प्रापणं। तथाहि—

महापुरे श्रेष्ठी ऋषभदत्तः परमार्हतः पर्वणि चैत्ये गतः। तत्र श्राद्धाश्चैत्योद्धाराद्यर्थं लखनिकां कुर्वन्ति, तदा पार्श्वे द्रव्याभावादुद्धारके श्रेष्ठिना देयं प्रतिपेदे। सद्यश्च तेनान्यान्यकार्यव्यग्रेण तन्नार्पितं। अन्यदा दैवात्तद्गृहे धाटी प्रविष्टा, सर्वस्वं लुण्टितं। श्रेष्ठी शस्त्रकरो भीतैश्चौरैः शस्त्रघातैर्हतो मृत्वा तत्रैव पुरे निर्दयदरिद्रकृपणमहिषवाहकगृहे महिषो जातः। निरन्तरं नीरादिभारं प्रतिगृहं वहति। तच्च पुरमुच्चै-

स्तरं तेनोच्चैस्तररूचटनाहोरात्रभारवहनबुभुक्षानिरन्तरतर्जनीघातादिभिश्चिरं महाव्यथाः सेहे । सोऽन्यदा नव्यनिष्पद्यमानचैत्यजगतीकृते जलं वहंश्चैत्यार्चादिकं वीक्ष्य जातजातिस्मृतिश्चैत्यभक्तिमकरोत् । ज्ञानिवचसा प्राग्भवपुत्रैर्द्रव्यं दत्त्वा महिषवाहकान्मोचितः प्राग्भवदेवधनं सहस्रगुणं प्रदायानृणीकृतोऽनशनेन स्वर्गं गतः । इति देवधनार्पणविलम्बकरणे ज्ञातम् ।

तथा देवस्ववृद्धिं निरवद्यवृत्त्या सुधीः कुर्यात् । पञ्चदशकर्मादानकुवाणिज्यवर्जं सद्व्यवहारादिविधिनैव तद्वृद्धिः कार्या । यतः—

जिणवरआणारहिअं वद्धारंता वि केवि जिणदवं । बूडंति भवसमुद्दे मूढा मोहेण अन्नाणी ॥ १ ॥

श्रावकेण देवस्वं व्याजेनापि न देयं न ग्राह्यं । केचित्तु श्राद्धव्यतिरिक्तेभ्यः समधिकग्रहणकं गृहीत्वा कलान्तरेणापि तद्वृद्धिरुचितैवेत्याहुः, सम्यक्त्ववृत्त्यादौ शंकाशकथायां तथोक्तेः । तथा जिनद्रव्यं विनश्यमानं[2] वीक्ष्य यो न रक्षति तस्य दोषः, यतः—

भक्खेइ जो उवेक्खेइ जिणदवं तु सावओ । पन्नाहीणो भवे जीवो लिप्पए पावकम्मुणा ॥ १ ॥

तथा देवस्वभक्षणादि तूत्कृष्टाशातनायामन्तर्भवति । तथाहि—जघन्यतो जिनाशातना धूपघट्याद्यास्फालनश्वासवस्त्राञ्चलादिस्पर्शाद्या । अत्राह—ननु तर्हिं कुञ्चिका (कूर्चिका) घर्षणादितोऽप्यवज्ञा स्यात्,

१ नाली कशा । २ विनश्यदिति साधु ।

नैतदेवं, अभिप्रायानभिज्ञानात् लोकप्रसिद्ध्याऽपमानतिरस्कारधिया क्रियाऽऽशातना, सत्कारहितादिधिया प्रसिद्धा उचिताऽनाशातना । अत एवेन्द्रकृतं स्नपनं पूजा, कमठकृतं स्नपनमाशातना । लोकेऽपि पादेन नृपादीनां तैलमर्दनं मुष्टियुद्धादिकं च नाशातना, एवमत्रापि कुञ्चिकाघर्षणवस्त्रमर्दनजलस्पर्शादौ नाशातनासंभवः, तथाविधविधिविशेषात् । एकमप्यनुष्ठानममृतं विषं चेति १ । मध्यमाशातनाऽधौतपोतिकया पूजनं भूमिपातनाद्या २ । उत्कृष्टा चरणघट्टनश्लेष्मादिलवस्पर्शनदेवस्वापलपनबिम्बभञ्जजिनावहीलनाद्या ३ । तथा कदाचित् केनचिच्छ्राद्धेन ज्ञात्यादिसम्बन्धहेतुना निमन्त्रितः, स च देवस्वभक्षकगृहे कथञ्चिद्भुक्तवान् तदा च तेन भोजनमितं द्रव्यं जिनगृहे मोच्यं, तेन निष्पापः स्यात् इति वृद्धवाक्यम् ॥

देवद्रव्यं निजात्मानमिव रक्ष्यं सुयत्नतः । वृद्धिमपि तथा तन्वन् स्याज्जिनाज्ञाऽविराधकः ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ

त्रयोदशस्तम्भे १९२ व्याख्यानम् ॥

---

१ तथाविधाभिप्रायविशेषादेकमप्यनुष्ठानमित्यादि वा ज्ञेयं ।

## व्याख्यानं ॥ १९३ ॥



अथाल्पस्यापि देवस्वस्यादनेऽनल्पदोषमाह—

देवस्वभक्षणे दोषः अहो कोऽपि महात्मनः । सागरश्रेष्ठिनो ज्ञातं धार्यं देवस्वरक्षकैः ॥ १ ॥

स्पष्टः । सम्बन्धस्त्वयं—साकेतपुरे सागरश्रेष्ठी श्राद्धः । तस्मै सुधर्मा इति कृत्वाऽन्यश्राद्धेन चैत्यद्रव्यं दत्तं प्रोक्तं च "चैत्यकर्मकर्तॄणां सूत्रधारादीनां त्वया दातव्यं" इति । सोऽपि लोभाभिभूतः सूत्रधारादीनां न रोकरूं दत्ते, किंतु सुमहर्घ्याणि पिष्टगुडादीनि देवस्वेन संगृह्य तेभ्यो दत्ते, लाभस्तु स्वयं रक्षति । एवं रूपकाशीतितमभागरूपाणां काकिनीनामेकं सहस्रं लाभेन संगृहीतं, एवं संचितं तेन घोरं दुष्कर्म । तच्चानालोच्य मृतो जलमनुष्यत्वं प्राप । तत्रोदधौ जलचरोपद्रववारणार्थं जात्यरत्नग्राहकैर्वज्रघरट्टे मांसादिना प्रलोभ्य पीलितः । तदङ्गान्निःसृतामण्डगोलिकां ते जगृहुः । स तु मृत्वा तृतीयनरके गतः । तत उद्धृत्य पञ्चशतधनुर्मितो महामत्स्योऽभवत्, तत्र मात्सिकादिकृतकदर्थनया मृतश्चतुर्थे नरके गतः । एवमेकद्व्यादिभवान्तरितो नरकसप्तकेऽपि विरुत्पेदे । एकसहस्रदेवस्वकाकिन्युपभोगात् सान्तरनिरन्तरोत्पत्त्या सहस्रवारान् श्वानो जातः । एवं सहस्रं भवान् सूकरः, सहस्रभवान्मेषः, सहस्रभवानेडकः, सहस्रभवान्मृगः, सहस्रभवान् शशकः, सहस्रभवान् शंबरः, एवं सहस्रं सहस्रं भवान् शृगालः मार्जारः मूषकः कोलः गोधा सर्पश्च, एवं सहस्रं सहस्रं भवान् पञ्चस्थावरविकलेन्द्रियादिषु समुत्पद्य लक्षसङ्ख्यभवान्

भ्रान्तः । प्रायः सर्वभवेषु शस्त्रघातादिना पीडां सहमान एव मृतः । ततः क्षीणबहुदुष्कर्मा वसन्तपुरे कोटिध्वजस्य वसुदत्तस्य पुत्रोऽभूत् । तस्मिन् गर्भस्थ एव नष्टं सर्वं द्रव्यं, जन्मदिने जनको विपन्नः, पञ्चमे वर्षे माताऽपि मृता । लोकैर्निष्पुण्यक इति दत्तनामा द्रमकरङ्कवृत्त्या वृद्धिं प्राप । अन्यदा दयया मातुलेनानीतः स्वगृहे । रात्रौ मुषितं चौरैर्मातुलगृहं । एवं यत्र गृहे याति तत्राग्न्याद्युपद्रवः स्यात्, तेन लोके "महानुत्पातोऽयं समेतः" इति निन्दयोद्विग्नमना देशान्तरं गतः, तत्र ताम्रलिप्तीपुर्यां विनयंधर-महेभ्यगृहे भृत्यबुद्ध्या स्थितः, ज्वलितं च तद्दिन एव तद्गृहं, तेन निष्कासितः स्वगृहात् प्राकृकृतं स्वकर्म निनिन्द । यतः—

कम्मं कुणंति सवसा तस्सुदयम्मि परवसा हुंति । रुक्खं रोहति सवसो निवरूइ परवसो तत्तो ॥१॥

ततो महेभ्यप्रवहणे चटितः । इभ्येन सह परद्वीपं क्षेमेण गतः । दध्यौ स एवं—"अहो ! मम भाग्यं जागरितं, यद्यानपात्रं न भग्नं । यद्वा दुर्दैवेन विस्मृतमिदं, यदि पश्चाद्वलनसमये दैवं विस्मृतिमेति तदा श्रेष्ठं" । एवं तन्मनोरथेन सह पश्चाद्वलिते । प्रवहणं दैवेन भाण्डमिव शतखण्डीकृतं । फलकं प्राप्तोऽब्धि-तीरग्रामे गतः । तद्ग्रामठक्कुरमवलगति स्म । तत्रैकदा धाट्या हतष्ठक्कुरः, निष्पुण्यकं ठक्कुरपुत्रं मत्वा बद्ध्वा पल्ल्यामनयन् । तद्दिनेऽन्यपल्लीशेन भग्ना सा पल्ली । ततस्तैरपि निष्कासितः । यतः—

महत्युपायेऽपि कृते विनाभाग्यं फलं नहि । पीयूषरुचिपानेऽपि राहोर्नैवाङ्गपल्लवः ॥ १ ॥

---

१ चंद्रपानेऽपि ।

एवमेकोनसहस्रवारानन्यान्यस्थानेषु चौरज्वलनजलाद्युपद्रवसंभवान्निष्काशनामहादुःखं वहन्नटव्यां सेलकयक्षमाराधयामास । एकविंशत्योपवासैस्तुष्टो यक्षः प्राह—"भद्र ! सन्ध्यायां सन्ध्यायां मम पुरः सुवर्णचन्द्रकलक्षालङ्कृतो महामयूरो नृत्यं करिष्यति, तदा प्रतिदिनं पतितानि कनकपिच्छानि त्वया ग्राह्याणि"। ततः प्रत्यहं ग्रहणान्नवशती पिच्छानां प्राप्ता, शतमेकं शेषं तिष्ठति । अथ दुष्कर्मप्रेरितेन तेन चिन्तितं—"एतद्ग्रहणाय कियच्चिरमत्रारण्ये स्थातव्यं ? तद्वरमेकमुष्ट्या सर्वाण्यपि ग्राह्याणि इति"। तद्दिने नृत्यतो मयूरस्य तान्येकमुष्ट्यैव ग्रहीतुं प्रवृत्तस्तावत्केकी काकरूपः सन्नुड्डीय गतः पूर्वगृहीतान्यपि नष्टानि । यतः—

दैवमुल्लङ्घ्य यत्कार्यं क्रियते फलवन्न तत् । सरोऽम्भश्चातकेनात्तं गलरन्ध्रेण गच्छति ॥ १ ॥

ततो धिङ्मया मुधैवोद्यमः कृत इति खिन्न इतस्ततो भ्रमन् ज्ञानिनं मुनिमेकं दृष्ट्वा नत्वा च स्वप्राक्कर्मस्वरूपं पप्रच्छ । तेनाप्युक्तं यथानुभूतं प्राग्भवस्वरूपं । ततः स देवद्रव्योपभोगप्रायश्चित्तं ययाचे । मुनिनोक्तं—"समधिकं तावद्देवद्रव्यप्रदानं तद्द्रव्यरक्षादिना तद्दुष्कर्मप्रतिकारः स्यात्"। ततस्तेन "सहस्रगुणं देवभक्तौ व्ययितुं वस्त्राहारादिनिर्वाहमात्रादधिकं स्वल्पमपि द्रव्यं न संग्राह्यं" इति मुनिसमक्षं नियमो जगृहे । ततो यद्व्यवहरति तत्र बहुद्रव्यमर्जयति, ददाति च सर्वं देवस्य । एवं स्वल्पैरेव दिनैः प्रागुपजीवितसहस्रकाकिनीस्थाने काकिनीलक्षदशकं प्रादायि, ततो देवस्यानृणी भूतः । क्रमादर्जितबहुतरद्रव्यः स्वपुरे प्राप्तः महेभ्यमुख्योऽजनि । तत्र चैत्यकरणदेवस्वरक्षणयथायुक्तितद्वृद्धिप्रापणाद्यद्भुतपुण्येन जिननामकर्म

बद्धं । अवसरे दीक्षामादाय प्रथमस्थानकमाराध्यार्हन्नामकर्म निकाचितवान् । ततः सर्वार्थसिद्धे देवो भूत्वा महाविदेहेऽर्हद्विभूतिं भुक्त्वा सिद्धः ॥

देवस्वग्रहणे दोषो यथोक्तः पूर्वसूरिभिः । तच्छ्रुत्वा देववित्तेषु स्पृहां तनोति नो गृही ॥ १ ॥

॥ इत्यब्ददिनपरिमितहितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रंथस्य वृत्तौ
त्रयोदशस्तंभे व्याख्यानम् ॥ १९३ ॥

## व्याख्यानं ॥ १९४ ॥

अथ चैत्यानि सावद्यानीति यो वदति तस्य शिक्षामाह—

सावद्यं वचनं नोच्यं मुनिभिर्धर्मज्ञायकैः । तद्वाक्येन महादुःखं सावद्याचार्यवद्व्रजेत् ॥ १ ॥

स्पष्टः । ज्ञातमिदं—श्रीवीरो गौतमं मिथ्याजल्पनफलं वक्ष्यमाणज्ञातेनाह—प्रागनन्तकालेन या अतीतचतुर्विंशतिका तत्र वर्तमानावसर्पिणीकालतः पूर्वं गतानन्ततमावसर्पिणीकाले मत्सदृशो धर्मश्रीनामाऽन्तिमजिनोऽभूत् । तत्तीर्थे सप्ताश्चर्याणि बभूवुः । तत्रासंयमिपूजायामनेकेऽसंयताः श्राद्धेभ्यो गृहीतद्रव्येण स्वस्वकारितचैत्यवासिनोऽभवन् । तत्रैकः कुवलयप्रभसूरिस्तपस्वी समागात् । तैश्चैत्यस्थैस्तं नत्वोक्तं—"अत्रैकं चतुर्मासकं तिष्ठ यथा त्वदुपदेशेनानेकचैत्यानि भवन्ति" । तेनोक्तं—"जे जिणालये ते

सवे सावज्जे, सावद्यमिदं नाहं वदामि" । तदैवं जणता तेन जिननामकर्मार्जितं । एकजवावशेषीकृतश्च जवोदधिः । ततस्तैः सर्वैर्लिङ्गिजिः सावद्याचार्य इति नाम कृतं, परं तस्य क्रोधो नाजूत् । "मुनीनां चैत्यादिक्रियासु महालाजोऽस्ति" इति वाक्यं सर्वत्र वाच्यं, न पुन "रिदं चैत्यमुपाश्रयमुष्णजलं च कुरुत" एवं न श्राव्यं, "उपदेशोऽस्ति परमादेशः प्रायो नास्ति" इति साधोर्विवेकः । अन्यदा तेषां मिथः शास्त्रे विवादोऽजूत्, यद् "गृहिणामजावे संयता एव चैत्यानि रक्षन्ति समारयन्ति ( संमार्जन्ति ), अन्यस्मिन्नपि तत्रारम्जे कृते यतेरपि न दोषः" । केऽप्याहुः—"संयमो हि मोक्षनेता"। केऽपि पूजाचैत्यादिकं जल्पन्ति । परं विवादो न जग्नः । ततः सर्वैः संजूय ते सूरय आकारिताः । एकदा साध्वी प्रदक्षिणीकृत्य पादयोः शिरसा श्रद्धावशात्संघट्टयन्ती ववन्दे, तल्लिङ्गिजिः स्पष्टं दृष्टं । एकदा व्याख्याने महानिशीथस्येयं गाथाऽऽगता—

जत्थत्थीकरफरिसं करंति अणिहाऽवि कारणे जाए । तं निच्छयओ गोयम जाणिज्जा मूलगुणहाणिं ॥१॥

अस्या गमनिका—यत्र गच्छे नीरागसाधुरपि आन्तरिककारणे उत्पन्ने स्त्रीकरस्पर्शं करोति तस्य मूलगुणहानिः स्यात् इति गाथार्थकथने सूरिणा चिन्तितं—"पूर्वं मन्नाम लिङ्गिजिः सावद्याचार्य इति स्थापितं, साम्प्रतमेतदर्थं श्रुत्वा विरूपं किमपि करिष्यन्ति, परं यज्ञावि तज्ञवतु, अन्यथा कथने तु महादोषः" । ततो यथार्थो व्याख्याता । तदाकर्ण्य तैः प्रोक्तं साध्वीवन्दनवृत्तं "यद्येवं तर्हि त्वमपि गुणहीन एव" अपयशोजीरुणा सूरिणा प्रोक्तं—"अयोग्यस्योपदेशो न देयः, यतः—

आमे घडे निहित्तं जहा जलं तं घडं विणासेइ । इअ सिद्धंतरहस्सं अप्पाहारं विणासेइ ॥ १ ॥

तैरुक्तं—"कूटजल्पिस्त्वं, याहि दृष्टिपथात्" । पुनः सूरिणा प्रोक्तं—"स्याद्वादे उत्सर्गापवादस्थितिं यूयं न जानीथ एगत्तं मिच्छत्तं जिणाण आणा अणेगत्तं" । ततस्तैर्मानितं तद्वचः । तत एतद्वाक्यपापमनालोच्य मृत्वा व्यन्तरो बभूव । च्युत्वोत्पन्नः प्रोषितभर्तृकायाः प्रतिवासुदेवपुरोहितदुहितुः कुक्षौ । कलङ्कभीताभ्यां पितृभ्यां देशान्निष्कासिता कुलालगृहे दासीत्वेन स्थिता, तद्गृहे चौर्यं कृत्वा मांसादिकमत्ति । ततो राज्ञो वाक्यं लात्वा वधकृतां दत्ता । तैः प्रसवं यावद्रक्षिता, प्रसवे सति बालं त्यक्त्वा नष्टा । क्रमाद्बालः पञ्चशतसूनाधिपो जातः । मृत्वाऽन्तिमश्वभ्रान्त्यप्रस्तटे गतः । ततोऽन्तरद्वीपे एकोरुकजातिर्जातः । मृत्वा महिषः । ततो मनुष्यः । ततो वासुदेवः, नरके च । ततो गजकर्णो नरः । ततोऽन्तिमश्वभ्रे । ततो महिषः । ततो गतधवाद्विजसुताकुक्षौ गर्भपातनद्वारौषधजातगलत्कुष्ठी गर्भान्निर्गतः सप्तशतवर्षाणि द्वौ मासौ चतुर्वासराणि जीवित्वा व्यन्तरो जातः । ततः सूनेशः । ततः सप्तम्यां । ततो वृषभः । एवमनन्तं कालं भ्रान्त्वा विदेहे नरत्वं प्राप्तः । लोकानुवृत्त्या जिनं प्रणमन् प्रबुद्धः प्रव्रज्य च सिद्धोऽत्र पार्श्वनाथतीर्थसमये । इति श्रीवीरमुखाच्छ्रुत्वा गौतमोऽप्राक्षीत्—"तेन सूरिणा किं महापापं कृतं ? मैथुनं तु नासेवितं" । प्रभुराह—"हे गौतम ! तेन उत्सर्गापवादैरागमस्थितिरित्याद्युक्त्वा महापापमुपार्जितं, यतः स्याद्वादेऽपि जलं सचित्तं, तस्य भोगः, अग्निसमारम्भः, मैथुनं चेत्येतानि उत्सर्गेण निषिद्धानि, तत्र द्वयोः

स्थापना नार्हा । अत्रोत्सर्गापवादाभ्यां षड् भङ्गाः स्युः, तेऽग्रे लेखिष्यन्ते । तथा तेन साध्वीस्पर्शे पादौ नाकुञ्चितौ इत्यादिनाऽनन्तं भवमवर्धयत् । अथोत्सर्गापवादस्वरूपमाह—

न स्यात्स्वान्ते यदा धैर्यं कष्टादौ पतिते क्वचित् । तदाऽपवादं सेवन्ते कश्चिदुत्सर्गमाचरेत् ॥ १ ॥

स्पष्टः । नवरं कष्टादिप्राप्ते कश्चित्कार्तिकेभ्यवदपवादं निषिद्धमप्याचरति । तथा कश्चिन्नरः कामदेववदुत्सर्गमेव । तत्र द्वयोर्योगे षड् भङ्गाः, ते चेमे—उत्सर्गः १, अपवादः २, उत्सर्गस्थानेऽपवादः ३, अपवादस्थाने उत्सर्गः ४, उत्सर्गोत्सर्गः ५, अपवादापवादः ६ । तत्र—"जत्थ त्थीकरफरिसं०"

न किंचिवि अणुणायं पडिसिद्धं वा जिणवरिंदेहिं । मुत्तूण मेहुणभावं न तं विणा रागदोसेहिं ॥ १ ॥

इत्युत्सर्गः १ ।

सव्वत्थ संजमं संजमाओ अप्पाणमेव रक्खिज्जा । मुंचइ अइवायाओ पुणोऽवि सोही न या विरई ॥ १ ॥

इत्यपवादः २ ।

उस्सग्गे अववायं आयरमाणो विराहगो भणिओ । अववाये पुण पत्ते उस्सग्गनिसेवओ भयणा ॥ १ ॥

इत्युत्सर्गेऽपवादः ३ अपवादे उत्सर्गश्च ४ । श्रीमहानिशीथे—"जं पुण गोयमा ! तं मेहुणं एगंतेणं ३ निच्छयओ ३ बाढं ३ तहा आउतेउसमारंभं च सव्वपयारेहिं संजयं विवज्जेज्जा मुणी । इत्युत्सर्गोत्सर्गः ५। नद्यां मज्जन्तीं साध्वीं वीक्ष्य साधुस्तस्या अङ्गानि संस्पृश्य बहिः कर्षति तस्याऽऽलोचनया शुद्धिः स्यादिति, अथवा मेघे वर्षति वेश्या उपाश्रये प्रविष्टा रात्रावपि न गता, तदा गुर्वाज्ञया वयोऽती-

तम[illegible]ना स्तम्भे बन्धिता (बद्धा) । प्रगे राज्ञा पृष्टा गुरवः प्राहुः—"हे नृप ! यथा राज्ञः कोशे सप्ताङ्गलक्ष्मीभृते चौरः प्रविशति तं नृपो बन्धनादिकं तनोति न वा ? तथाऽस्मच्छिष्या ज्ञानादिरत्नकोशाः, तद्धरणार्थं समेतेयं बन्धिता" । तच्छ्रुत्वा नृपः सत्यन्यायेन हृष्टस्तुष्टोऽजनि । इत्यपवादापवादः ६ । एतान् भङ्गाँश्चित्ते संधार्य विचार्यैव वक्तव्यं । यतः प्राकृतरूपमालायां—

खरूभंगी भरभीमे जइ प्पसंगे हुइ नारी । तो आलोयणि बुटसे पुण थापे अणंतसंसारी ॥ १ ॥

तथा यद्यपि प्रवचने उत्सर्गापवादावनेकान्तश्च प्रज्ञाप्यन्ते तथापि मैथुनादिसेवनमेकान्तेन निषिद्धं, तत्रापवादस्थापनात्सूत्रातिक्रमः उन्मार्गप्राकट्यं च स्यात्, तस्मादाज्ञाभङ्गादनन्तसंसारित्वं । तथा स्वहीनाचारादिदोषगोपनार्थमनेकजिनागमयुक्तीर्गृहीत्वा स्वपापं निगूहति गुणाँश्च प्रकटीकरोति अनन्तरोक्तवृत्तसावद्याचार्यवत् स मायावी अनन्तसंसार्येव ॥

चैत्यान्यवद्यानि कुजल्पनत्वाज्जन्मान्यनन्तानि कृतानि सूरिणा ।
कर्मार्जितं तीर्थकराभिधं गतं, उत्सूत्रवाक्यस्य हि ताएवं मतम् ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ
त्रयोदशस्तम्भे १९४ व्याख्यानम् ॥

अथ नमस्कारगणनकालफलमाह—

तुर्ये यामे त्रियामाया ब्राह्मे मुहूर्त्ते कृतोद्यमः । मुञ्चेन्निद्रां सुधीः पञ्चपरमेष्ठिस्तुतिं पठेत् ॥ १ ॥

स्पष्टः । ज्ञावार्थोऽयं—निद्रावश्यादिना यद्यन्तिमयाम उत्थातुं न शक्नोति तदा पञ्चदशमुहूर्त्ता रात्रिस्तस्या जघन्यतोऽपि चतुर्दशे ब्राह्मे मुहूर्त्ते उत्तिष्ठेत् । शय्यावस्त्राणि मुक्त्वा शुद्धवस्त्राणि परिधाय पवित्रजूमौ ऊर्ध्वे स्थितो निविष्टो वा पद्मासनादिना आद्यः पूर्वोत्तरविदिशि स्यात् ।

जपो ज्ञवेत्त्रिधोत्कृष्टमध्यमाधमज्ञेदतः । पद्मादिविधिना मुख्योऽपरः स्याज्जपमालया ॥ १ ॥

स्पष्टः । नवरं पद्मादिविधिस्त्वयं—चित्तैकाग्रतार्थं हृदये मनसाऽष्टदलकमलं स्थाप्यं, तत्र कर्णिकायामाद्यं पदं, द्वितीयादिपदानि चत्वारि पूर्वादिदिक्चतुष्के, आग्नेय्यादिविदिक्चतुष्के च शेषाणि चत्वारि पदानि न्यस्येदित्युत्कृष्टजापः । जपमालादिना यो जापः सोऽपरो मध्यमज्ञेद उत्कृष्टाद्धीनः । अत उत्कृष्टस्यैव जापस्य महाफलं । यतो योगशास्त्रे—

त्रिशुद्ध्या चिन्तयन्नस्य शतमष्टोत्तरं मुनिः । ज्ञुञ्जानोऽपि लज्ञेदेव चतुर्थतपसः फलम् ॥ १ ॥

अथ जघन्यजपमाह—

विना मौनं विना सङ्ख्यां विना चित्तनिरोधनम् । विना स्नानं विना ध्यानं जघन्यो जायते जपः ॥ १ ॥

अथैहिकफलमाह—

दष्टे वृश्चिकसर्पादौ दानवोपद्रवे तथा । ध्यायेत् पञ्चनमस्कारं सर्वदुःखैर्विमुच्यते ॥ १ ॥

नवरं वृश्चिकादिविषनिवारणार्थं पश्चानुपूर्वीतो नमस्कारमेकविंशतिवारादिकं जपेदित्याम्नायः । अत्र राक्षसोपद्रवत्यागे सम्बन्धः प्रोच्यते—

क्षितिप्रतिष्ठितनगरे बलराजो राज्यं करोति । अथैकदाऽवसरे नूतनमेघवृष्ट्या नदीपूरं जातं । तदा तत्र लोका विलोकनार्थं गताः । पश्चात्तत्र जलमध्ये महत्तरमेकं बीजपूरकं जलस्योपरि तरन्तमदूरगं दृष्ट्वा जलतरणसमर्थपुरुषेण जलमध्ये गत्वा तद्गृहीतं । पश्चाद्राज्ञः समीपं समागत्य तत्समर्पितं । सुगन्धमधुररसयुतं बीजपूरकमास्वादितं राज्ञा प्रमोदपूरितचेतसा । ततो राजा तं पप्रच्छ—"भवता कुत्र लब्धमेतत् ?" । तेनोक्तं—"भोः स्वामिन् ! नदीजलपूरमध्ये फलं लब्धमेतत्" । इति तद्वचः श्रुत्वा राजा जल्पति स्म—"भोः पुरुष ! त्वं तत्र तटे याहि" । तदा स पुरुषस्तत्तटं पृष्ट्वा तत्र गतः । तत्र यदा स पुमान् प्रवेशकरणोत्सुरभूत्तदाऽऽसन्नलोकैर्भणितं—"अहो सत्पुरुष ! प्रवेशं मा कुरु, अत्र यः कश्चित् पुमान् प्रवेशं करोति फलपुष्पादिग्रहणार्थं च याति स तत्रैव मरणमेति" । ततो लोकानामेवं वचनं श्रुत्वा स पश्चाद्वलितः । सर्वं वृत्तान्तं राज्ञे निवेदितं । तदा रसलम्पटी राजा प्राह—"भोस्तलारक्षक ! त्वं नगरमध्ये याहि । सर्वमनुष्याणां नामाङ्कितपत्राण्यालेख्यानि । घटान्तर्मुक्त्वा प्रभाते कुमारिकापार्श्वतः पत्रं निष्कासनीयं" ।

ततस्तस्यादेशं प्राप्य तेन तथैव विहितं । ततस्तदवसरे यस्य नामाङ्कितपत्रं समायाति स जीविताशां मुक्त्वा कम्पमानं भयभ्रान्तं शरीरं धृत्वा याति तद्वाटिकायां, पश्चाद्बीजपूरकं छित्त्वा नदीजलमध्ये वहमानं मुञ्चति तदा तन्नगरद्वारस्थेन तलारक्षकेण गृहीत्वा राज्ञः समर्प्यते । स पुरुषस्तत्रैव मृत्युं प्राप्नोति । इति वृत्ते प्रवृत्ते सति तन्नगरं विषवज्जातं, परं तु राज्ञश्चेतसि किमपि कारुण्यं नायाति । अथैकदा तन्नगरवासिनः श्रीजिनदासश्रावकस्य नामाङ्किता पत्रिका समायाता । स निर्भयं तां पत्रिकां गृहीत्वा गृहमागत्य गृहगतदेवानां प्रासादस्थदेवानां च पूजां कृत्वा सर्वस्वजनवर्गस्य परस्परं क्षामणां विधाय सागारिकमनशनमङ्गीकृत्य वनं प्रति चचाल । उच्चस्वरेण नमस्कारमुच्चरन् वनान्ते प्रवेशं चकार । तदा वनस्याधिष्ठायकेन व्यन्तरदेवेन नमस्कारं श्रुत्वैवं चिन्तितं–"अहो ! मयैतान्यक्षराणि पूर्वं श्रुतानि वर्तन्ते" । तदा ज्ञानोपयोगेन पूर्वभवं ददर्श "यत्पूर्वभवे मया दीक्षा गृहीता नाराधिता च, तेन मृत्वाऽहं व्यन्तरो जातोऽस्मि । अहो ! मया प्रमादवशेन मुधा दीक्षा हारिता" । इति पश्चात्तापं कृत्वा जिनदासश्रावकस्य प्रत्यक्षो बभूव, करयुगलं संयोज्याग्रे तिष्ठति स्म, पादयुगलं प्रणम्य च तं प्रोवाच–"हे सत्पुरुष ! त्वयाहं धर्मस्थाने योजितः, त्वं मम गुरुर्वर्तसे, कञ्चिद्वरमङ्गीकुरु" । श्रेष्ठी प्राह–"सर्वजीवाहिंसां त्वं निवारय इत्येव वरं मम प्रसन्नोऽसि तदा देहि" । राक्षसः प्राह–"हे श्रेष्ठिन् ! एष वरस्तु ममात्मार्थे त्वया याचितः । एतावन्तं कालं यावज्जैनधर्मवासितत्वत्सदृशगुरुदर्शनं विनाऽनेकजीवाहिंसा मया विनोदार्थं कृता, अतः परं नाहं करिष्ये । त्वया फलग्रहणमिषेणात्रागत्य मत्स्वान्तेऽनेकान्तधर्मस्त्वया दृढीकृतः, परमवि-

रत्युदयाल्लब्धधर्मो देवानां नेति, परं त्वद्दर्शनाद्गुण आविष्कृतः, तेन सर्वं सुस्थं जातं, अतो हे गुरो पूज्य ! त्वयाऽत्रागमनप्रयासो न विधेयः, अहं प्रभाते त्वद्दर्शनार्थं समेष्यामि, फलमप्येकं त्वत्पुरो यद्वृक्षस्य परिपक्वं तदेव नित्यं ढौकयिष्यामि"। ततः क्षणेनैकेन स श्रेष्ठी स्वौकसि मुक्तः। तेन फलं नृपाय दत्तं। राजा प्राह–"त्वमक्षताङ्गः कथं समेतः ?"। श्रेष्ठी प्राह–"नमस्कारमहिम्ना किं किं न सिध्यति ?"। ततो राजाऽवक्–"हे श्रेष्ठिन् ! त्वमस्माकं महामन्त्रं शिक्षय"। स आह–"समयेऽहं ज्ञापयिष्ये"। ततोऽन्येद्युर्जैनज्ञानाचार्यस्तत्र समवसृतः। तं वन्दित्वा श्रेष्ठी प्राह–"हे पूज्य ! अस्मदीयनृपाय नमस्कारफलं श्रावय"। ततो गुरुः प्राह नमस्कारफलं, यतः—

नवकार इक्करकरं पावं फेडइ सत्तअयराणं। पन्नासं च पएणं पंचसयाइं समग्गेणं ॥ १ ॥
जो गुणइ लक्खमेगं पूएइ विहिइ जिण नमुक्कारं। तित्थयरनामगोयं सो बंधइ नत्थि संदेहो ॥ २ ॥
अठ्ठेवय अठ्ठसया अठ्ठसहस्सं च अठ्ठकोडीओ। जो गुणइ अठ्ठलक्खे सो तइयभवे लहइ सिद्धिं ॥३॥

प्रत्यहं न्यस्ताभिः पञ्चशतमालाभिः ५०० सार्धपञ्चवर्षैः कोटिजपो जायते इति, बद्धाभिः षष्टि ६० मालाभिः पञ्चवर्षमध्ये कोटिजपो जायते। सम्यक् सङ्ख्याधारणा कार्या। ऐहिकं फलं त्विदं–विपरीतं नमस्कारं लक्षादिकं जपेत्, क्षिप्रं क्लेशनाशादिकं स्यात्। करजापाद्यशक्तस्तु सूत्ररत्नादिजपमालया स्वहृ-

दयसमश्रेणिस्थया परिधानवस्त्रचरणादावलगन्त्या मेर्वनुल्लङ्घनादिविधिना जपेत्। भूमिं प्रमृज्य संस्थापितपादप्रोञ्छने उपविश्यानुद्घाटमुखेन यो जपो विधीयते स जपः प्रमाणं स्वाध्यायार्हः। यतः—

अङ्गुल्यग्रेण यज्जप्तं यज्जप्तं मेरुलङ्घने। व्यग्रचित्तेन यज्जप्तं तत्प्रायोऽल्पफलं भवेत् ॥ १ ॥
जपश्रान्तो विशेद्ध्यानं ध्यानश्रान्तो विशेज्जपम्। द्वयश्रान्तो पठेत्स्तोत्रमित्येवं गुरुभिः स्मृतम्॥२॥

अनानुपूर्व्या गणने तु षण्मासक्षपणादिपुण्यं क्षणेन लभते। इति फलं श्रुत्वा राजा श्राद्धो जातः। नमस्कारगणनपरः स्वर्गं प्राप ॥

श्रीमज्जिनो यत्र विराजते धुरि, मन्त्रो ददातीह परत्र सौख्यकम्।
मत्वा नमस्कारपदं च जप्यते, विश्वस्य वन्द्यः स भवेद्गुणाश्रितः ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ त्रयोदशस्तम्भे १९९ व्याख्यानम् ॥

## ॥ समाप्तोऽयं त्रयोदशः स्तम्भः ॥



# चतुर्दशः स्तम्भः ।



## ॥ व्याख्यानम् ॥ १७६ ॥

अथ तीर्थंकरनामकर्मोपार्जनहेतूनाह—

सर्वे तीर्थङ्करास्तु स्युरितस्तृतीयजन्मनि । विंशत्या सेवितैः स्थानैस्तीर्थकृन्नामहेतुभिः ॥ १ ॥

सर्वे जिना ये वर्तन्ते ये पूर्वमतीता ये च भविष्यन्ति ते सर्वे इतस्तृतीयभवे विंशतिपदाराधनेन भवन्ति । इयं भावना—ये तीर्थंकरनामगोत्रं बध्नन्ति ते सर्व एषु मध्ये द्वित्रादिभिः स्थानैः सर्वैर्वा सेवितैर्भृशं जिननामार्जयन्ति । ते के ? त्रिवेदविषयिणः, नपुंसकोऽत्र कृत्रिमः कश्चित् । यतः श्रीभद्रबाहुपादाः—

नियमा मणुयगईए इत्थिपुरिसेयरोऽवि सुहलेसो । आसेविय बहुलेहिं वीसाए अन्नयरएहिं ॥ १ ॥

विंशतिपदानि चेमानि, यतः षष्ठाङ्गे—

अरिहंत १ सिद्ध २ पवयण ३ गुरु ४ थिविर ५ बहुस्सुए ६ तवस्सीसु ७ ।
वच्छलया य तेसिं अभिक्खण नाणोवओगे य ८ ॥ १ ॥
दंसण ९ विणए १० आवस्सए ११ य सीलवए १२ निरइयारो ।
खणलव १३ तव १४ च्चियाए १५ वेयावच्चे १६ समाही य १७ ॥ २ ॥

अपुव्वनाणगहणे १८ सुअजत्ती १ए पवयणे पजावणया २० ।
एएहिं कारणेहिं तित्थयरत्तं लहइ जीवो ॥ ३ ॥

अर्हन् नामादिचतुर्निक्षेपैः सेव्यः १ । सिद्धा निष्पन्नगुणिनः कर्ममलोज्झिता अपुनरावृत्तिगतिं गताः सर्वाणि कार्याणि धंधमात्राणि पूर्णीकृत्य निष्ठां नीत्वा यथा गृही सुखेन शेते तद्वदिमेऽपि पुनरकर्तृजावेन संसारकार्याणि समाप्य परमसौख्यानुजवार्थं शाश्वतं पदं प्राप्तास्ते सिद्धा ध्येयाः २ । प्रवचनः सङ्घः समस्तश्रुताधारत्वेनार्थवान् चतुर्विधोऽपि ३ । गुरुराचार्यः षण्णवत्यधिकद्वादशशत १२ए६ गुणैरलङ्कृतः ४ । स्थविरो वृद्धः, स च त्रिप्रकारः, यस्य षष्टिवर्षाणि अतिक्रान्तानि स वयःस्थविरः १, जातविंशतिवर्षदीक्षास्थितिः स पर्यायस्थविरः २, यश्चतुर्थाङ्गसूत्रार्थज्ञः स श्रुतस्थविरः ३–५ । तत्समयवर्तिजूरिश्रुतार्थज्ञो बहुश्रुत उपाध्याय उप समीपेऽधीयते यस्मात्स उपाध्यायो वाचकः ६ । तपस्वी अनशनादिविचित्रोग्रतपःस्थितः साधुः ७ । एतेषु सप्तसु वात्सल्यं यथाजूतगुणप्रख्यापनं जक्तिरागादिकं च ज्ञेयं । सदा ज्ञानोपयोगधारणं ८ । सम्यक्त्वं दर्शनं ए। विनयः१०। आवश्यकं चारित्राहँ ११ । शीलव्रतं १२। त्रयोदशं क्षणलवाजिधानं स्थानं, तच्च प्रतिक्षणलवं सदा वैराग्यजावेन क्रियाकरणं १३। तपो नानाविधं १४। त्यागः पञ्चदशं स्थानं गौतमादीनां यथार्हान्नादिसमर्पणं १५ । वैयावृत्त्यं बालादीनां षोडशं स्थानं, तथा चोक्तं प्रश्नव्याकरणे–"केरिसए पुण आराहए वयमिणं जं से जवहिं जत्तपाणसंगहदाणकुसले अच्चंतबा-

लदुव्वलवुड्ढगखवगपवत्तिआयरियउवज्झायसाहम्मियतवस्सीकुलगणसंघचेइयछेयनिज्जरछी वेयावच्चं दसविहं अणिस्सियं वहुविहं करेइ" । अत्र "जिनप्रतिमाया उपधिदानासंभवाच्चैत्यस्य किं वैयावृत्त्यं ?" इति कश्चिच्छङ्कते, तत्र "जक्खा हु वेयावडियं करेइ, तम्हा उ एए निहया कुमारा" इति हरिकेशिमुनिवचनादवज्ञानिवारणादेरपि वैयावृत्त्यत्वमित्यादियुक्त्या समाधेयं १६ । समाधिस्थानं दुर्ध्यानवर्जनं चित्तस्वास्थ्योत्पादनं च, तच्च चारित्रविनयादिभिः स्यादिति १७ । अपूर्वज्ञानग्रहणादरोऽष्टादशं स्थानं १८ । श्रुतबहुमानं १९ । प्रवचनप्रभावनं तीर्थोद्योतकरणमन्त्यं २० स्थानं । एभिः कारणैर्जीवः प्रभुत्वं लभते । एतत्तपोविधिसंप्रदायश्चैवं—

यश्चेत्करोत्युपवासैर्विंशतिस्थानकं तपः । तदोपवासैर्विंशत्या एकपङ्क्तिः समाप्यते ॥ १ ॥
निरन्तरकृत्यशक्तौ सान्तरां तां करोति चेत् । पङ्क्तिरेका पूरणीया षण्मासाभ्यन्तरे ध्रुवम् ॥ २ ॥
विंशत्या पङ्क्तिभिश्चेत्तत्तपो नयति पूर्णताम् । उपवासानां चत्वारि शतानीह भवन्ति तत् ॥ ३ ॥
एवं शक्त्यनुसारेण प्राज्ञैः षष्ठाष्टमादिभिः । मासक्षपणपर्यन्तैस्तप एतद्विधीयते ॥ ४ ॥
पञ्चशक्रस्तवपाठोत्कृष्टा या चैत्यवन्दना । साऽवश्यं विधिना कार्या तपस्यत्रोपवैणवम् ॥ ५ ॥
एकैकस्यामत्र पङ्क्तौ एकैकेन दिनेन च । क्रमेणाराधयेद्भक्त्या स्थानकानीति विंशतिम् ॥ ६ ॥

---

१ यथाशक्ति ।

आद्ये नमोऽर्हद्भ्य इति द्विसहस्रं जपेद्दिने । अर्हद्भक्तिं विशेषेण कुर्वीत स्तवनादिभिः ॥ ७ ॥
अन्येष्वपि दिनेष्वेवमाराध्यास्ते पुरोदिताः । सिद्धादयः क्रियाज्ञानपाठाभ्यासादरादिभिः ॥ ८ ॥
केचिच्चैकैकया पङ्क्त्या स्थानमेकैकमेव हि । आराधयन्ति विंशत्या पङ्क्तिभिस्तानि विंशतिम् ॥ ९॥

सम्प्रति जापपदानि संप्रदायादवसेयानि ।

तपोऽशक्तः पुनः स्थानमेकं द्वे सकलानि वा । यथाशक्ति स्फुरद्भक्तिः सेवेत श्रेणिकादिवत् ॥ १० ॥
एवं साधुः श्रावको वा साध्वी वा श्राविकाऽपि वा । अमून्याराधयन् स्थानान्याप्नोति जिनसम्पदम् ११

अथ जिनेन्द्रभवतोऽर्वाक् तृतीयभवे तीर्थकरगोत्रं बद्धा क्व गच्छतीत्याह—

अथार्जितार्हत्पदाः स्युस्ते वैमानिकनाकिनः । प्राग्निबद्धायुषः केचिद्गच्छन्ति नरकावनौ ॥ १ ॥

अर्हत्पदं निकाच्य वैमानिकदेवा भवन्ति । कैश्चित्सम्यक्त्वं जिनपदप्राप्तिं च विनाऽऽयुर्नरकसत्कं बद्धं पश्चात्तीर्थङ्करपदप्राप्तिर्जाता दशार्हसिंहसत्यकिश्रेणिकादिवत् ते नरकेऽपि गच्छन्ति, ततस्तीर्थङ्करा भवन्ति। यतो जीर्णसङ्ग्रहिण्यां—

तिसु तित्थ चउत्थीए केवलं पंचमीए सामन्नं । छठीए विरयाविरइ सत्तमपुढवीए सम्मत्तं ॥ १ ॥

आद्याभ्यस्तिसृभ्यः पृथिवीभ्य उद्धृता अनन्तरभवे तीर्थकृतो भवन्ति, न शेषा इति ज्ञेयं । चतुर्थ्या उद्धृताः सामान्यकेवलित्वं लभन्ते, न जिनेन्द्रत्वं । पञ्चम्या उद्धृताः श्रामण्यं सर्वविरतिरूपं लभन्ते, न

केवलज्ञानं । षष्ठ्या उद्धृता विरत्यविरतिं, न मुनित्वं । सप्तम्या उद्धृताः सम्यक्त्वं सम्यग्दर्शनं, नान्यं गुणमिति गाथार्थः । अमुमेवार्थं विशेषेण भावयति—

पढमाउ चक्कवट्टी बीयाउ रामकेसवा हुंति । तच्चाउ अरिहंता तहंतकिरिया चउत्थीए ॥ १ ॥

छट्ठीउ पुढवीउ उवट्टा इह अणंतरम्मि भवे । भजा माणुसजम्मे संजमलंभेण उ हीणा ॥ २ ॥

षष्ठ्या उद्धृता इहानन्तरभवे मनुष्यजन्मनि भाज्याः केचिद्भवन्ति केचिच्च नेति, ये नरा भवन्ति ते संयमलाभेन विहीनाः स्युः । तथा सप्तम्या उद्धृता नारका नियमान्न नरत्वं किंतु तिर्यग्योनावेवोत्पद्यन्ते इति प्रसङ्गतो लिखितं । ननु चतुर्षु देवनिकायेषु मध्ये केभ्यो निकायेभ्यो जिनोऽत्र भवति ? उच्यते— वैमानिकेभ्य एवेति, यतः—

बलदेवचक्कवट्टी देवगणेसु होंति सव्वेसु । अरिहंत वासुदेवा विमाणवासीसु बोधव्वा ॥ १ ॥

वसुदेवचरित्रे तु नागकुमारेभ्योऽप्युद्धृतोऽनन्तरमैरवतक्षेत्रेऽस्यामवसर्पिण्यां जिन उक्त इति ज्ञेयं । प्रस्तुतं निगमनम् ।

विशेषात्तीर्थकृत्कर्म येनास्त्यर्जितमूर्जितम् । तत्कर्मोदयतोऽत्रासौ स्याज्जिनेन्द्रो जगत्पतिः ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ
चतुर्दशस्तम्भे १९६ व्याख्यानम् ॥

## ॥ व्याख्यानम् ॥ १९७ ॥



अथ च्यवनकल्याणकमाह—

देवभवं च तत्सौख्यं भुक्त्वा च्युत्वेह सत्कुले ।
श्रीमत्या ( तो ) भूपतेः पत्न्याः कुक्षावुत्पद्यते जिनः ॥ १ ॥

यस्तीर्थंकरत्वमुपार्ज्यते स देवभवस्य सौख्यं भुक्त्वा च्युत्वा इहात्र नरक्षेत्रे कर्मभूमौ उत्तमकुले धनाढ्यनृपस्य शीलादिगुणसंपन्नायाः पत्न्याः कुक्षौ जिनोऽवतरति । यद्यपि सुराणां षण्मासशेषायुषामिमानि चिह्नानि भवन्ति—

माल्यम्लानिः कल्पवृक्षप्रकम्पः, श्रीह्रीनाशो वाससां चोपरागः ।
दैन्यं तन्द्रा कामरागोऽङ्गभङ्गो, दृष्टेर्भ्रान्तिर्वेपथुश्चारतिश्च ॥ १ ॥

तथापि तीर्थंकरसुराः पुण्योत्कर्षात्कान्तिविज्ञानादिमया एव भवन्ति, यतः—
तेजोऽभिवर्धते तेषां देवानां च्यवनावधिम् । न प्रादुष्यन्ति चिह्नानि च्यवनस्यान्यदेववत् ॥ १ ॥

अन्ये केचिद्देवाः पूर्वोक्तचिह्नानि दृष्ट्वा दृष्ट्वा चिन्तयन्ति—"अहो ! ईदृशं सौख्यं गमिष्यति, गर्भादिदुःखं दुर्गन्धाढ्यं प्रादुर्भविष्यन्ति, आसां सुराङ्गनादीनां स्वामी को भविष्यति ?" एवं क्रन्दन्ति शोचन्ति च । केऽपि परमार्थज्ञाः सुलभबोधिनो न तथाऽऽत्मानं विडम्बयन्ति । भाविभावं मत्वा केचि-

दित्थं ध्यायन्ति—"कदा वयं नरत्वं प्राप्य जिनमार्गमनुचरिष्यामः ?"। अथ च्यवनमहिमानमाह—

अशिवोपद्रवादीनां भवत्युपशमः क्षितौ। नारका अपि मोदन्ते क्षणं प्राप्तसुखोदयाः ॥ १ ॥
उदयाभिमुखस्तीर्थंकरार्कः समभूदिति। विज्ञायासनकम्पेन मुदिना नाकिनायकाः ॥ २ ॥
सिंहासनात्समुत्थाय विनयात्त्यक्तपादुकाः। पदान्यागत्य सप्ताष्टौ श्रीजिनाभिमुखं रयात् ॥ ३ ॥
पञ्चाङ्गप्रणिपातेन प्रणम्य जगदीश्वरम्। घटिताञ्जलयः कुर्युः स्तुतिं शक्रस्तवेन ते ॥ ४ ॥

अत्र "सक्कस्स य आसणं चलिय सिग्घं आगंतूण यावत् तव पुत्तो पढमधम्मचक्कवट्टी भविस्सति। केइ भणंति—बत्तीसं पि इंदा आगंतूण वागरिंति" इत्यावश्यकहारिभद्र्यां श्रीऋषभगर्भावताराधिकारे। इत्याद्यकल्याणकोत्सवपद्धतिः बहुश्रुतेभ्योऽवसेया। अथ गर्भावासे जिन आगते मातुर्यद्भवति तदाह—

तस्मिन्नवसरे वासभवने स्वर्गृहोपमे। स्वःशय्योपमशय्यायां शयिता च मृगेक्षणा ॥ १ ॥
समधातुः सुप्रसन्नचित्ता स्वप्नाँश्चतुर्दश। निशीथे गर्भमायाति जिने साक्षादिवेक्षते ॥ २ ॥

स्पष्टौ। अत्र चतुर्दशस्वप्नवर्णनं प्रतीतमतो न लिख्यते। अथान्यश्रेष्ठनराणां माता कति स्वप्नान् पश्यतीत्याह—

सार्वभौमस्य माताऽपि स्वप्नानेतान्निरीक्षते। किंतु किञ्चिन्न्यूनकान्तीनर्हन्मातुरपेक्षया ॥ ३ ॥
यस्याः पुत्रो भवेत्सार्वभौमोऽर्हश्चेह जन्मनि। सा द्विः स्वप्नानिमान् पश्येत्तथोक्तं पूर्वसूरिभिः ॥ ४ ॥

अचिरा(विश्वराट्) पत्नी शीललीलासमुज्ज्वला । सा दिश्चतुर्दश स्वप्नान्निशाशेषे व्यलोकयत् ॥५॥
इति वृद्धशत्रुञ्जयमाहात्म्ये उक्तं ।

एतेषामन्तरात्सप्तालोकयेद्वासुदेवसूः । चतुरो बलदेवाम्बाऽथैकं माण्डलिकप्रसूः ॥ ६ ॥

प्रतिकेशवमाता तु त्रीन् स्वप्नानवलोकयेत् । मातैकं पश्यति स्वप्नं मुनेरपि महात्मनः ॥ ७ ॥

मुनेर्मेघकुमारादेर्मात्रादिवदित्यादि स्वमत्याऽभ्यूह्यं इति । अथ प्रस्तुतं—

ज्ञानत्रयान्वितः स्वामी गर्भरूपेण योऽवसत् । अहो जगत्प्रवाहोऽयं नोल्लङ्घितो जिनैरपि ॥ १ ॥
गर्भेऽपि च्युषितश्छन्नः स्वर्गाच्च्युत्वा तथाप्यसौ । विश्वेषु प्रकटीभूत इन्द्रैर्नुतः सदा स्तवैः ॥ २ ॥

॥ इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ
चतुर्दशस्तम्भे १९७-व्याख्यानम् ॥

---

## ॥ व्याख्यानम् ॥ १९८ ॥

अथ जिना ज्ञानत्रयसमेता आयन्तीत्याह—

स्वर्गाद्वा नरकाद्वा ये यस्मादायान्ति तीर्थपाः । ज्ञानत्रयं ते तत्रैत्य बिभ्रते गर्भगा अपि ॥ १ ॥

स्पष्टः । नवरं मतिश्रुतावधिज्ञानत्रयमन्यसुरेभ्योऽपि तीर्थकृत्सुराणामनन्तगुणं श्रेष्ठतरं स्यात्, तेन सहैवात्र गर्भेऽवतरन्ति । तदा मातुः शरीरं गर्भानुभावात्स्वच्छपुद्गलमयं सुगन्धमयं भवति, न पुनरन्यना-

रीसदृशं बीभत्समयं गर्भस्थलं स्यात्। दिव्यरूपा जिनेन्द्रावतरणार्हा योनिर्मृगमदघनसारादिभ्योऽपि श्रेष्ठा। तत्रैव जिना उत्पद्यन्ते मुक्ताफलमिव हीरकमिव, परं न तत्र कोऽपि अशुभपुद्गलस्थितिसंचयो भवति। माता गृहीताहारोऽपि शुभरूपेण परिणमति प्रभोः प्रभावात्, जलधरगृहीतक्षारजलमिव। तथा जिन-गर्भसंप्राप्त्यनन्तरं कदापि तत्र मातृगर्भे न कोऽपि जीवः पुनः समुत्पद्यते। अत एव स्तुत्यगोचरदिव्य-रूपयोनिक्षेत्रे जिनोऽसङ्ख्यातस्त्रीवृन्दान् विहाय पुण्यपात्रमुभयकुलशुद्धां धर्मध्यानतत्परामनन्तपुण्यैर्ल-ब्धस्त्रीभवां भव्यामगण्यपुण्यलावण्यामाबाल्याच्छीलधर्मधुरंधरामित्यादिगुणान्वितां मत्वा स्वामी जननी-त्वेनाङ्गीकरोति। सा जनन्यपि एतादृशपुत्रप्रादुष्करणार्थमियमेव पुण्याढ्या समर्था जगन्नाथजननीबि-रुदधारका च। यतः—

स्त्रीणां शतानि शतशो जनयन्ति पुत्रान्, नान्या सुतं त्वदुपमं जननी प्रसूता।
सर्वा दिशो दधति भानि सहस्ररश्मिं, प्राच्येव दिग्जनयति स्फुरदंशुजालम्॥ १॥

इति प्रसङ्गात्। अथान्यजीववज्जिनगर्भेऽपि दुःखं भविष्यतीत्याशङ्क्याह—

गर्भगते जिनेन्द्रे हि दुःखं नाप्नोति कर्हिचित्। माता च गर्भजीवोऽपि तथैव प्रसवादिषु॥ १॥

स्पष्टः। नवरं गर्भगतजीवानां दुःखं शास्त्रे महदुक्तं। तथाहि—

सूईहिं अग्गिवन्नाहिं संभिन्नस्स निरंतरं। जावइयं गोयमा दुक्खं गब्भे अट्ठगुणं तउ॥ १॥
गब्भाउ निहरंतस्स जोणिजंतनिपीलणे। सयसाहस्सियं होइ दुक्खं कोडिगुणं पि वा॥ २॥

अग्निवर्णाभिः सार्धत्रिकोटीसूचीभिर्नररोमच्छिद्राणि समकालं विध्यन्ते, तस्य यादृशं दुःखं भवति तस्मादष्टगुणं गर्भजीवे। शेषं स्पष्टं। इत्यादिसमस्तदुःखजालविमुक्तस्तीर्थकृतां गर्भो भवतीति। तत्त्वं तु केवलिनो जानन्ति। अथ च्यवनसमयं जिना न जानन्तीत्याह—

जानन्त्येष्यदतीतं च च्यवनं तत्क्षणे तु न। गर्भोत्पत्तिक्षणेऽप्येषां स्यादेवं महिमोदयः ॥ १ ॥

स्पष्टः। नवरं च्यवनस्यैकसामयिकत्वेन सूक्ष्मत्वाच्छाद्मस्थिकज्ञानोपयोगस्य जघन्यतोऽप्यन्तर्मुहूर्तत्वादिति। अथ जिनजन्मोत्सवमाह—

जने प्रमुदिते श्रेष्ठे निमित्ते शकुनादिके। अर्धरात्रे प्रसूते सा जिनं निधिमिव क्षितिः ॥ १ ॥

तदा दिशः प्रसीदन्ति सर्वाः प्रमुदिता इव। भवेन्नित्यान्धकारेषु प्रकाशो नरकेष्वपि ॥ २ ॥

तथा चोक्तं स्थानाङ्गे—

चतुर्भिः स्थानकैरेतैर्लोकोद्योतः प्रसर्पति। अर्हज्जन्मज्ञानदीक्षास्तेषां मोक्षोत्सवोऽपि च ॥ ३ ॥

तत्रायान्ति तदा प्राक् षट्पञ्चाशद्दिक्कुमारिकाः। कम्पासनाः प्रभोर्जन्म विज्ञायावधिचक्षुषा ॥ ४ ॥

स्पष्टाः। षट्पञ्चाशद्दिक्कुमारिकाकृत्यं चेदं—भोगंकराद्या अष्टौ अधोलोकवासिन्योऽन्योऽन्यमाकार्योचुः—"अत्रस्थानां त्रैकालिकीनां दिक्कुमारिकाणामयमाचारोऽस्ति, यज्जिनेन्द्रजन्मोत्सवः कार्यः। ततो वयमपि तत्र यामः। परं धन्यमस्माकं जीवितं यदादावेव जिनपतिदर्शनमस्माकमेवेति"। इति निश्चित्य प्रत्येकं स्वाभियोगिकैर्योजनविस्तीर्णानि विमानानि कारयित्वा ताः सर्वाः प्रत्येकं चतुःसहस्रसामानिक-

सुरैश्चतसृभिर्महत्तराभिः षोडशसहस्रैरात्मरक्षकैः सप्तभिः कटकैश्च परिवृताः स्वस्वविमाने स्थिता अर्हज्जन्मगृहमेत्य विमानादुत्तीर्य तिस्रः प्रदक्षिणाः कृत्वा जिनं जिनाम्बां च स्तुवन्ति—"हे विश्वदीपिके ! त्रिभुवनतारणक्षमस्यार्हतस्त्वं जनन्यसि, अतः कृतार्थभवाऽसि" इति स्तुत्वा प्राहुः—"हे मातः ! न भेतव्यं त्वया । वयं त्वदात्मजस्यास्मदादिजीवानां नाथस्य जन्मोत्सवं कर्तुमागताः स्मः" । ततः संवर्तकेन जन्मगेहाद्योजनमात्रं क्षेत्रं रजोऽस्थिकेशतृणादिरहितं कृत्वा कृतस्वकार्या गायन्त्यस्तिष्ठन्ति । अन्यासामपि दिक्कुमारिकाणामागमनपद्धतिरियमेव, कर्मणि यो विशेषः सोऽत्र वक्ष्यते—मेघंकराद्या अष्टोर्ध्वलोकवासिन्यः समभूतलात्पञ्चशतयोजनोच्चनन्दनवनगतपञ्चशतीकाष्ठकूटस्थायिन्यः पूर्ववत्समागत्य सुरभिमेघान् विकृत्य पूर्वप्रमार्जितं क्षेत्रं शीतलं कुर्युः । ततो जानुमात्रोच्चपुष्पवृष्टिः पञ्चवर्णा योजनमात्रक्षेत्रे कुर्युः,तथा धूपधूमाकुलं कुर्युः। तथा नन्दोत्तराद्या अष्टौ पूर्वरुचकवास्तव्या एत्य जिनं साम्बां नत्वाऽऽदर्शपाणयोऽग्रे गायन्ति । तथा समाहाराद्या अष्टौ याम्यदिग्रुचकादेत्य पूर्णकलशकराः प्रभोर्दक्षिणपार्श्वस्था गायन्ति । तथेलादेव्याद्याः पश्चाद्रुचकादेत्याष्ट देव्य आत्ततालवृन्ताः प्रभोः पश्चिमे स्थिता गायन्ति । तथाऽलंबुसाद्या अष्ट दिक्कुमार्य उत्तररुचकादेत्य प्रभोरुत्तरतः स्थिताश्चामराणि वीजयन्ति । तथा चित्राद्याश्चतस्रो विदिग्रुचकमन्दिरात्तत्रैत्य नत्वा दीपिकाकराः प्रभोश्चतसृष्वपि विदिक्षु गायन्त्यस्तिष्ठन्ति । तथा रूपाद्याश्चतस्रो मध्यरुचकवासिन्यो देव्य एत्य प्रभोश्चतुरङ्गुलवर्जं नालं वर्धयित्वा भूमौ निधाय सद्रत्नैस्तत्खातं पूरयन्ति, तदुपरि पीठं बद्ध्वा दूर्वाङ्कुरान् वपन्ति "अर्हदङ्गस्याशातना मा भूत्" इति बुद्ध्या । ततस्तिसृषु दिक्षु पश्चिमां वर्जयित्वा

त्रीणि कदलीगृहाणि विकुर्वन्ति, तेष्वेकैकं चतुःशालं वेश्म सिंहासनान्वितं च । ततो जिनं करसंपुटे संगृह्य दत्तावलम्बां जिनाम्बां पुरस्कृत्य दक्षिणदिग्गृहे नीत्वा भद्रासने निवेश्य दिव्यतैलैरभ्यञ्जन्ति, सुगन्धिद्रव्यचूर्णैरुद्वर्तयन्ति । ततः पौरस्त्यकदलीगृहे प्राग्वत्समानीय सिंहासने संस्थाप्य सुगन्धिपुष्पोदकैर्मज्जयित्वा सर्वालङ्कारभूषितौ प्रकुर्वन्ति । तत उदीच्यकदलीगृहे सिंहासनेऽङ्कविन्यस्तनन्दनां तामध्यासयन्ति, गोशीर्षचन्दनैधांसि सेवकैरानाययन्ति, अरणिकाष्ठसंघट्टनेन नवमग्निं प्रकटीकृत्य तत्र गोशीर्षचन्दनं हुत्वा रक्षां पातयन्ति । ततो द्वयोर्हस्ते प्रेतादिदोषघातार्थं रक्षापोट्टलिकां बध्नन्ति । ततो वृत्ताश्मगोलकावास्फाल्य शैलायुर्भूया इत्याशीर्गिरं प्रभोः संगिरन्ति । ततो यथा गृहीतौ तथा जन्मगृहे शय्यायां नीत्वा भक्तितो गायन्ति । अथासां देवीनां भुवनपतिजातीयत्वं श्रुतधरैर्निश्चीयते, यतः कासाञ्चिद्दिक्कुमारीणां व्यक्त्या स्थानाङ्गे पल्योपमस्थितेर्भणनात् समानजातीयत्वादासामपि तथाभूतायुषः संभाव्यमानत्वात् । अपरिगृहीता इमा देव्यः सन्ति, अतो दिक्कुमारीत्वमिति ॥

एवं च दिक्कुमारीभिर्जन्मोत्सवः कृतः प्रभोः । जम्बूद्वीपागमादत्र लिखितो लेशमात्रतः ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ चतुर्दशस्तम्भे १९८ व्याख्यानम् ॥

अथेन्द्रकृत्यमाह—

सिंहासनं सुरेन्द्रस्य कम्पते युधि भीरुवत् । अवधिनाऽर्हतो जन्म ज्ञात्वा तदुत्सवं तनोत् (चरेत्) ॥ १ ॥

तदुत्सवं व्यतनोत् जिनजन्मोत्सवं चकार । ततस्तत्प्रकारस्त्वयं—अवधिज्ञानादिन्द्रो जिनोत्पत्तिं विज्ञाय सिंहासनादुत्थाय सप्ताष्टौ पदानि गत्वा जिनाभिमुखं शक्रस्तवावधिं विनयेन स्तुत्वा पूर्वाभिमुखः सिंहासनस्थो दध्यौ—"नूनमस्माकं त्रैकालिकमरुत्वतां जीतमेतत् यदर्हतां जन्माभिषेकः कार्यः" इति निश्चित्य पादात्यनायकं हरिणैगमेषिणमाकार्य प्राह—"भोः ! त्वं सुघोषां घण्टां वादय, सर्वस्वर्गदेवानामस्माकं प्रस्थानं ज्ञापय" । ततस्तामाज्ञां शिरस्यारोप्य स सुरस्तां घण्टां योजनपरिमण्डलां त्रीन् वारान् वादयति । एतस्यां वादितायां सर्वविमानगा घण्टा द्वात्रिंशल्लक्षा दिव्यानुभावतो युगपन्मुखरायन्ते । तासां ध्वनौ शान्तेऽयमुद्घोषयति—"भो देवाः ! भवन्तोऽपीन्द्रेण सह जिनजन्मकल्याणकोत्सवार्थं समागच्छन्तु सत्वरं सज्जीभवन्तु" । ते देवाः स्वस्ववाहनानि सज्जीकृत्य जिनभक्त्युत्सुका जाताः । तत इन्द्रो यानविमानस्वामिनं पालकामरं विमानं सज्जीकर्तुमाज्ञापयति । सोऽपि जम्बूद्वीपसमानं पञ्चशतयोजनोच्छ्रितं पालकाख्यं विमानं निर्माय ढौकयेत् । यतः स्थानाङ्गे—"चत्तारि लोगे समा पन्नत्ता, तं जहा—अपइट्ठाणे णरए जंबुद्दीवे पालए जाणविमाणे सव्वट्ठसिद्धे महाविमाणे" । अतो लक्षयोजनमितं प्रमाणाङ्गुलनिष्पन्नं चेति । तत्रैकैकं द्वारं त्रिसोपानं पश्चिमवर्जे दिक्त्रये । मध्येऽनेकरत्नस्तम्भैः पूर्णः प्रेक्षागृहमण्डपः स्यात् । तत्र मध्ये

रत्नपीठिकायां हरेः सिंहासनं भवेत् । तस्माद्वायव्यामुत्तरस्यामैशान्यां दिशि च चतुरशीतिसहस्रसामानिकसुरसिंहासनानि । पूर्वस्यामिन्द्राग्रमहिषीणामष्टौ सिंहासनानि । आग्नेय्यां द्वादशसहस्राण्यभ्यन्तरपर्षदां सिंहासनानि । याम्यां मध्यपर्षदां चतुर्दशसहस्राणि सिंहासनानि । नैर्ऋत्यां षोडश सहस्राणि बाह्यपर्षदां सिंहासनानि । वारुण्यां सप्तानां सैन्येशानां सप्त भद्रासनानि भवन्ति । द्वितीये परिक्षेपे आत्मरक्षकनाकिनां चतुरशीतिसहस्राणि सिंहासनानि प्रतिदिशं, सर्वसङ्ख्यया त्रिलक्षाः षट्त्रिंशत्सहस्राः सुरास्तेषां तावन्ति सिंहासनानि । ततो हृष्टमना इन्द्रोऽर्हत्सेवार्हं रूपं कृत्वा प्रदक्षिणां दत्त्वा पूर्वदिक्त्रिसोपानाध्वना प्रविश्य पूर्वाभिमुखो निषीदति । सामानिका उदीच्येन त्रिसोपानाध्वना प्रविश्य, अन्ये च याम्येन यथास्थानमासते । ततो विमाने प्रस्थिते पुरोऽष्टौ मङ्गलानि सहस्रयोजनोत्तुङ्गो लघुसहस्रध्वजयुग् महेन्द्रध्वजश्चेत्यादयश्चलन्ति । दुन्दुभिध्वनिपूर्णं तद्[1]उत्तरापथेन निर्याणमार्गेणोत्तरति । यतः—

तथेन्द्रोऽपि पथाऽनेन जिनजन्मोत्सवादिषु । निर्याति भूयसां बोधिलब्धये तत्प्रशंसिना ॥ १ ॥

अथासङ्ख्यद्वीपवार्धिमध्येन द्रुतमापतन्नन्दीश्वरे रतिकरे एत्य तत्र विमानं संक्षिप्य जिनजन्मपुरे गृहे चागत्य विमानेन त्रिः प्रदक्षिणीकृत्येन्द्रस्तदैशान्यां भुवश्चतुर्भिरङ्गुलैरूर्ध्वं मुञ्चति । ततो गृहं विशेत् । जिनं समातृकं नत्वा त्रिःप्रदक्षिणां दत्त्वा प्राह—"हे जगत्पूज्य ! तुभ्यं नमोऽस्तु । हे मातः ! त्वं धन्याऽसि कृतपुण्याऽसि यत्ते कुक्षावयं जगदीशो जातः । ततो हे मातः !

१ तद्विमानम् ।

अनुजानीहि, मनागपि न भेतव्यं, वयं त्वत्सुतस्य जन्मोत्सवं करिष्यामः" । इत्युदित्वा प्रभोर्मातुरवस्वापिनीं दत्त्वा प्रभोः प्रतिकृतिं हरिस्तत्पार्श्वे स्थापयति, यतः स्वयं जन्मोत्सवव्यग्रचित्तत्वात्कश्चिद्दुष्टदेवः कुतूहलप्रियश्चेज्जिनं हरति तदा सुतमनालोक्य माता वा परिजनो वा दुःखभाग् मा स्म भूत् विषादं मा यासीदित्ययमुद्यमः । तत इन्द्रः पञ्च मूर्तीः कृत्वा एकया मूर्त्या धौतपूतधूपितकरसम्पुटेऽर्हन्तमादत्ते, एकया छत्रं, द्वाभ्यां चामरौ, पञ्चम्या च मूर्त्या वज्रमादाय भृत्यवज्जिननाथस्य पुरो गच्छति । तद्विमानं तु रिक्तमेवानुगच्छति । अथानेकपरिकरे सत्यपि यदिन्द्रस्य स्वयमेव पञ्चरूपविकुर्वणं (करणं) तत्त्रिजगद्गुरोः परिपूर्णसेवालिप्सयेति । अनेकदेवैः संवृतो मन्दरमौलिस्थपाण्डुकवने यत्र पाण्डुकवन(कम्बला)शिलोपरि शाश्वतमभिषेकसिंहासनमस्ति तत्र पूर्वाभिमुख इन्द्रो जिनमुत्सङ्गे धृत्वा निषीदति । एवमीशानेन्द्रोऽपि स्वसैन्येशं लघुपराक्रमं पदातीशं देवानां बोधहेतवे महाघोषाघण्टां वादयति । ततः पुष्पकामरपार्श्वे पुष्पकाख्यविमानं कारयित्वा आरुह्य शक्रवदागच्छति दाक्षिणात्येन निर्याणमार्गेणोत्तीर्य नन्दीश्वरे उत्तरपौरस्त्यरतिकरगिरावेति । तत्र तद्विमानं संक्षिप्य स्वर्णगिरिं समेतः शक्रवत्स्तुत्वा जिनाधिपं सेवते । एवं शेषाणामपि देवाधिनाथानां शक्रवदागमनं मन्दरे ज्ञेयं । परमत्रोत्सवे सर्वेषां युगपदेव समागमनारम्भस्य जायमानत्वाच्चतुःषष्टिरिन्द्राः—

दश वैमानिका इन्द्रा भुवनेशाश्च विंशतिः । द्वात्रिंशद्व्यन्तरेन्द्रा द्वौ सूर्याचन्द्रमसाविति ॥ १ ॥

ज्योतिष्का असङ्ख्याता आयान्ति तथापि जातिव्यपेक्षया द्वावेवात्र वक्ष्येते । समवायाङ्गे च व्यन्तरे-

न्द्रवर्जा द्वात्रिंशदिन्द्राः प्रोक्ताः सन्ति । नवमदशमकल्पयोरिन्द्र एक एव, तथैकादशद्वादशकल्पयोरप्येक एवातोऽत्र दश वैमानिकेन्द्रा ज्ञेयाः । अथैषां परिकरः—

चुलसी १ असीइ २ बावत्तरि ३ सत्तरि ४ सट्ठि ५ य पणास ६ चत्ताला ७ ।
तुल्ल सुर तीस ८ वीसा ९ दससहस्स १० अयरक्ख चउगुणिया ॥ १ ॥

इत्यादिको ज्ञेयः । अथ दशकल्पानां घण्टानामानि—

तृतीये पञ्चमे स्वर्गे सप्तमे दशमेऽपि च । घण्टा सुघोषाऽथ हरिणैगमेषी पदातिराट् ॥ १ ॥
तुर्ये षष्ठेऽष्टमे च द्वादशे स्वर्गे विमौजसाम् । घण्टा पत्तीशनामादि पूर्वोक्तं शूलपाणिवत् ॥ २ ॥

अथ दशकल्पेन्द्राणां यानविमाननामानि—

पालकः १ पुष्पकः २ सौमनसः ३ श्रीवत्ससंज्ञकः ४ ।
नन्द्यावर्तः ५ कामगमः ६ तथा प्रीतिगमो ७ ऽपि च ॥ १ ॥
मनोरम ८ श्च विशालः ९ सर्वतोभद्र १० इत्यमी ।
क्रमाद्दशानामिन्द्राणां प्रोक्ता यानविमानकाः ॥ २ ॥

विमाननाम्ना तदध्यक्षाः सुरा अपि ज्ञेयाः । अथ चमरेन्द्रस्य ओघस्वरा घण्टा, द्रुमः पादातीशः, विमानं पालकार्धमानं स्यात्, ध्वजश्चास्य महेन्द्रध्वजतोऽर्धमानः । एवं बलीन्द्रस्यापि, परं घण्टा महौ-

घस्वरा, पादात्येशो महाद्रुमः स्यादिति । शेषाणां दक्षिणेन्द्राणां नवानां भद्रसेनः पादात्येशः, उत्तरेन्द्राणां दक्षसंज्ञः पत्तीशः । विमानं ध्वजश्च चमरेन्द्रतोऽर्ध इति ।

तथा मेघस्वरा १ हंसस्वरा २ क्रौञ्चस्वराऽपि ३ च । मञ्जुस्वरा ४ मंजुघोषा ५ सुस्वरा च ६ मधुस्वरा ७ ॥१॥
नन्दिस्वरा ८ नन्दिघोषा ९ घण्टासंज्ञाः क्रमादिमाः । नागादिषु निकायेषु देवेन्द्राणां निरूपिताः ॥ २ ॥

तथा याम्यानां व्यन्तरेन्द्राणां घण्टा मंजुस्वरा, उदीच्यानां मंजुघोषाभिधा घण्टा च स्यात् । तेषां यानं सहस्रयोजनायामं, ध्वजश्च पञ्चविंशत्यधिकशतयोजनोच्छ्रितः स्यात् । ज्योतिष्केषु चन्द्राणां सुस्वराभिधा घण्टा, सूर्याणां च सुस्वरनिघोषा, शेषं पूर्ववज्ज्ञेयं । भुवनपतिव्यन्तरज्योतिष्कदेवेन्द्राणां विमानकल्पिनः सुरा न स्युः, किंत्वाभियोगिकाः कुर्वन्ति ।

अथेन्द्रः सर्वर्द्ध्याऽन्वित उत्सङ्गे उत्तानस्थापितकरयोर्मध्ये जिनं धृत्वा निषीदति । ततोऽच्युतेन्द्रः स्वाभियोगिकान् वदति—"भोः ! अर्हज्जन्माभिषेकार्हां सामग्रीं सज्जयन्तु" । ततस्ते सौवर्णान् १ रौप्यान् २ रात्नान् ३ स्वर्णरत्नमयान् ४ रूप्यरत्नमयान् ५ रूप्यरैजान् ६ रैरत्नरूप्यजान् ७ मृण्मयान् ८ (च) प्रत्येकं सहस्रमष्टाधिकं कलशान् विकुर्वन्ति । अन्यान्यपि तालवृन्तचामरतैलसमुद्गकचङ्गेर्यादर्शादीन् सहस्रमष्टाधिकं ते रचयन्ति । ततः कृत्रिमाकृत्रिमान् कुम्भादीनादायाभियोगिकाः क्षीरोदधिगङ्गादितीर्थानामुदकं पङ्कजानि चानयन्ति । तज्जम्बूद्वीपप्रज्ञप्तिसूत्रे प्रोक्तं, यतः—"खीरोदगं गिण्हंति गिण्हित्ता

१ कारिणः ।

जाइं तत्थ उप्पन्नाइं पउमाइं जाव सहस्सपत्ताइं ताइं गिण्हंति, एवं पुक्खरोदाओ जाव भरहेरवयाण मागहाइतित्थाणं उदगं मट्टियं च गिण्हंति" इत्यादिपाठो वाच्यः । अत्र(थ)नन्दनवनादिभ्यो गोशीर्षचन्दनादीन् गृहीत्वाऽखिलं संचित्य ढौकयन्ति । ततोऽच्युतेन्द्रः पुष्पस्रक्छोभितगलैः पद्मोत्पलपिहितैस्तैः कुम्भैश्चतुःषष्ट्याधिकैरष्टभिः सहस्रैर्भवपाथोधिपाराय स्वपरिकरान्वितः प्रागुक्तोदकपुष्पाद्यैरर्हन्तमभिषिञ्चति । अच्युतेन्द्राभिषेकेऽत्र ईशानेन्द्रादयोऽपरे ऊर्ध्वंदमाः प्रभुं निषिञ्चन्ति । अन्ये केचिद्गायन्ति, केचिन्नृत्यन्ति, केचिद्गजाश्वगर्जितानि प्रभोः पुरः कुर्वन्ति । एवमभिषिच्यार्हन्तं नत्वाऽच्युतेश्वरो गन्धकाषायिकेणाङ्गं रूक्षयति । ततः सालङ्कारं प्रभुं विधाय प्रभोः पुरो रूप्यतण्डुलैः सुवर्णपट्टेऽष्टौ मङ्गलान्यालिख्य ढौकयेत् । ततो द्वात्रिंशद्विधं नृत्यमग्रे पुष्पप्रकरं धूपं च विधायाष्टोत्तरशतवृत्तैः स्तुतिं करोति । सा चैवं जम्बूद्वीपप्रज्ञप्तिसूत्रेऽपि—"धूवं दाऊण जिणवरिंदस्स सत्तट्ठपयाइं ओसरित्ता दसंगुलियं अंजलिं करिय मत्थयंसि पयओ अट्ठसयविसुद्धगंथयुत्तेहिं अपुणरुत्तेहिं संथुणइ जाव एवं वयासीति "नमोऽत्थु ते सिद्ध बुद्ध णीरय समण णीरागदोस निम्मम धम्मवरचाउरंतचक्कवट्टि नमोऽत्थु ते" । इत्यादिस्तुतिं भक्तिं (च) विधाय प्रभोः पुरो विनयेन तस्थौ । एवं त्रिषष्टिरपि देवेन्द्राः सौधर्मेन्द्रवर्जिता अनुक्रमेणानेन विधिनाऽभिषिञ्चन्ति । तत ईशानेन्द्रः पञ्च मूर्तीः विकुर्व्य (कृत्य) एकया मूर्त्या जिनमुत्सङ्गे धृत्वा शक्रस्थाने निषीदति, एकया छत्रं, द्वाभ्यां चामरे, एकया पुरतः शूलं धृत्वा भृत्यवत्तिष्ठति । अथ शक्रोऽपि सर्वां सामग्रीं प्राग्वद्विधाय स्नात्रं कुरुते, परमेष विशेषः—चत्वारि वृषभरूपाणि कृत्वा चतुर्दिक्षु तेषाम-

ष्टभ्यः शृङ्गेभ्योऽष्टौ तोयधारा ऊर्ध्वमुत्पत्य एकत्र संभूय प्रभोर्मूर्धनि क्षरन्ति । ततः शक्रः सपरिकरोऽच्युतेन्द्रवत् कुम्भैर्विविधैर्जिनमभिषिञ्चति, इत्यादि नमोऽस्तु ते इति यावत् पर्युपास्ते । अथात्र वृषभमुखेभ्यः कलशादिसङ्ख्या इत्थमपि श्रुताऽस्ति, तथाहि—एकैकजातिनिष्पन्ना अष्टौ सहस्राः कुम्भाः, तेऽष्टगुणाः कृताश्चतुःषष्टिसहस्रा जाताः, एतावन्मितैः कुम्भैरेकैकोऽभिषेकः स्यात् । एवं च चतुःषष्टीन्द्रत्रयस्त्रिंशत्त्रायस्त्रिंशकसुरशक्रलोकपालाग्रमहिषीपर्षत्सुरादीनां पञ्चाशदधिकशतद्वयाभिषेकाः स्युः, तदा चतुःषष्टिसहस्राः कुम्भाः पञ्चाशदधिकद्विशताभिषेकगुणाः कृता एककोटिः षष्टिलक्षा भवन्ति । उक्तं च पूज्यैः—

पणवीसजोयणतुंगो बारसजोयणाइं वित्थारो । जोयणमेगं नालउ एगकोडि सट्ठि लक्खाइ ॥ १ ॥

अथेन्द्रः सर्वजन्माभिषेकं कृत्वा प्राह—“हे परमेश्वर ! कृपावतार ! मत्सदृशैरनन्तैरिन्द्रैः संपूज्यसे तथापि त्वद्वीतरागतां पूज्यतां बाल्येऽपि धीरतां च वक्तुं न केऽपि क्षमाः । वयं संसारविकारभृता अनाकलनीयमहिम्नस्तवाङ्गुष्ठावयवमात्रपूजने कथं समर्था भवामः ? तथापि निःस्पृहस्य तवास्माभिरात्महितार्थं विहिता भक्तिर्बोधिदा स्यात् । तथा हे जिन ! अस्मद्भाग्यानुगस्त्वमत्रागतस्तेनाश्चर्येण विचारमग्ना वयं चिन्तयामः । अस्माभिरिन्द्रत्वं लब्धं तदद्यैव सफलं जातं ।

अलोकव्योम ये लोकव्योम्नि देष्टुं क्षमा जिनाः । तदाश्रयबलाच्चित्तं कृषामि भवभावतः ॥ १ ॥”

इत्यादिस्तुतीः कृत्वा कृतकृत्यः पञ्चरूपेण सेवापरो जन्मगृहमेत्य प्रभुं मातुः पार्श्वे संस्थाप्य तत्प्रतिकृतिं निद्रां च संहृत्य महार्हकूलयोर्युगलं कुण्डलयुगलं च विभोरुच्छीर्षके संस्थाप्यैकं रत्नमयोल्लोचं बद्ध्वा हरिः स्वाम्यङ्गुष्ठे क्षुधाशान्त्या अमृतं स्थापयति यन्मुखे क्षिपन्तोऽर्हन्तोऽस्तन्यपा अपि तृप्यन्ति । तत इन्द्राज्ञया श्रीदेनाज्ञप्ता जृम्भकामरा द्वात्रिंशत्कोटिस्वर्णादीनां जिनालये वृष्टिं विकुर्वन्ति । ततः शक्र उद्घोषणां कारयति—"यः प्रभोर्मातुर्वा विरूपं चिन्तयिष्यति तस्य मूर्धा आर्यकमञ्जरीवत्स्फुटिष्यति"। ततः सर्वे देवा नन्दीश्वरे गत्वाऽष्टाह्निकोत्सवं कुर्युः । अथाग्रे कृत्यं तत्कल्पादिसूत्रतो ज्ञेयमिति ॥

जन्माभिषेकेऽपि कृतेऽच्युताद्यै-रिन्द्रैश्चतुःषष्टिमितैः सुमेरौ ।
बालोऽपि न क्षोभमवाप कश्चित्, कुम्भोदपूरेण जिनः स जीयात् ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रंथस्य वृत्तौ
चतुर्दशस्तम्भे व्याख्यानम् ॥ १९९ ॥

## ॥ व्याख्यानम् ॥ २०० ॥

अथ शैशवेऽपि जिनाः क्रीडापराङ्मुखा भवन्तीत्याह—

जगदुत्कृष्टसौन्दर्या बाल्येऽप्यबालबुद्धयः । जितेन्द्रियाः स्थिरात्मानो यौवनोद्योतिता अपि ॥ १ ॥

अथ संसारसुखेषु नासक्ताः स्युरित्याह—

वहीरागं दर्शयन्तोऽप्यन्तः शुद्धाः प्रवालवत् । प्राप्तेऽपि चक्रभृद्राज्ये न व्यासक्ता भवन्ति ते ॥ १ ॥

अथ लोकान्तिककृत्यमाह—

प्रव्रज्यावसरे स्वस्य ते ज्ञानेन विदन्त्यथ । तस्मिंश्च समयेऽभ्येत्य देवा लोकान्तिका अपि ॥ १ ॥
नत्वा विज्ञपयन्त्येवं जय नन्द जगद्गुरो । त्रैलोक्यस्योपकाराय धर्मतीर्थं प्रवर्तय ॥ २ ॥

अथ वार्षिकदानविधिमाह—

ततो दीक्षादिनादर्वाग्वर्षशेषे जिनाधिपाः । दानं धर्ममुखं मत्वा दानं ददति वार्षिकम् ॥ १ ॥

स्पष्टः । दानवितरणप्रकारस्त्वयं—यदा प्रभुर्वार्षिकं दानं दातुमध्यवस्यति तदासनप्रकम्पेनावधिना शक्रो जानाति—"त्रिकालोद्भववज्रिणां जीतमेवेदं यदर्हतः प्रव्रज्यावसरे वार्षिकदानाय त्रिशतकोट्योऽष्टाशीतिकोट्योऽशीतिलक्षाः सौवर्णिका ढौक्याः" एवं निश्चित्य धनदमाज्ञापयति । ततस्ते जृम्भकामरा जिनगृहे पूर्वोक्तं स्वं निक्षिपन्ति । अत्र वृद्धमुखेभ्य इत्थमपि श्रुतं, तद्यथा—अशीतिरतिभिर्निष्पन्न एकः सौवर्णिकः स्यात्तन्मध्ये स्वनाम पितुर्नाम च भवति । एकवासरस्य दानस्य सौवर्णिकानां स्वर्णं नवसहस्रमणमितं स्यात्, चत्वारिंशता मणैरेकं शकटं भ्रियते, एवमेतादृशानि शकटानि पञ्चविंशत्यधिकशतद्वयं भवन्ति । प्रत्यहं सौवर्णिकानामेका कोटिरष्टौ लक्षाश्च दीयन्ते । सर्वान् वार्षिकदानयोग्यान् सौवर्णिकानिन्द्रादेशेन वैश्रमणदेवा अष्टसु समयेषु मध्ये निष्पाद्य तीर्थंकरगृहे स्थापयन्ति । तद्दानस्य षडतिशयाः, तथाहि—

॥ ४७ ॥

प्रभोर्हस्ते सौधर्मेशः स्थितिं विदधाति यद्दानं ददत् प्रभुर्न श्रममेति इति भक्तिबुद्ध्या, परं जिनस्त्वनन्तेन्द्रबलसमन्वितोऽस्ति १। ईशानेन्द्रस्तु सुवर्णयष्टिं करे धृत्वा ऊर्ध्वं तिष्ठति चतुःषष्टीन्द्रवर्जान्यदेवानां दानं गृण्हतां निषेधति। तथा यादृशं ग्राहकनरेभाग्यं तादृशीं तन्नरमुखेभ्यो वाक्योच्चारतां(णां) कारयति २। चमरेन्द्रबलीन्द्रौ प्रभुमुष्टिगतसौवर्णिकान् दानग्राहकनरवाञ्छितानुसारेणान्यूनाधिकान् कुरुतः, यदि तन्नरेप्सितेभ्योऽधिकास्ते स्युस्तदा न्यूनीकुरुतः, यदि च न्यूना मुष्टिमध्ये समेतास्तदा तन्नरवाञ्छितानुसारेणाधिकान् कुर्वाते ३। अन्ये भुवनपतयो भरतोत्पन्नमनुष्याणां दानग्रहणार्थमाकर्षणक्रियां कुर्वन्ति ४। वानव्यन्तरसुरास्तान् पश्चात् स्वस्थाने स्थापयन्ति ५। ज्योतिषिका विद्याधराणां दानसमयं ज्ञापयन्ति ६। तस्मिन् प्रस्तावे तीर्थकरस्य पिता तिस्रो महत्यः शालाः कारयति, एकस्यां शालायां भरतजातनराणामन्नादीन् दापयति, द्वितीयस्यां वस्त्राणि, तृतीयस्यामाभरणानि च। चतुःषष्टीन्द्राणां दानग्रहणमहिम्ना परस्परं द्वादशवर्षी यावत् कलहो नोत्पद्यते। चक्रवर्तिनराणां सौवर्णिकप्रभावेण कोशस्तु द्वादश वर्षाणि यावदक्षयः स्यात्। सरोगिणां द्वादश वर्षाणि यावन्नूतनरोगा नोत्पद्यन्ते इति। तथा सर्वत्रोद्घोषणां "यथेप्सितं वरं वृणुत" इति कारयति। अत्र केचिद्वदन्ति—"दानफलमवश्यं भोग्यतामेति, अन्यथा तत्फलबन्धाभावो न स्यात्, अतो जिनास्तु दानं न ददति" इति ढुंढका जल्पन्ति तदयुक्तं, षष्ठाङ्गे मल्ल्यध्ययने प्रकटाक्षराः सन्ति। तथा जिनाः कीर्त्यादिहेतवे दानं न ददति। यतः—

धर्मप्रभावनाबुध्ध्या लोकानां चानुकम्पया। जिना ददति तद्दानं न तु कीर्त्यादिकाङ्क्षिणः ॥ १ ॥

अथ दीक्षाकल्याणकमाह—

प्राप्यानुज्ञां ललौ दीक्षां पित्रादेस्तदनु प्रभुः। शक्रभूपादिभिर्भक्त्या कृतनिष्क्रमणोत्सवः ॥ १ ॥

स्पष्टः। इन्द्राश्च नृपादयश्च तैर्निष्पादितदीक्षोत्सवस्त्वयं—दीक्षादिने स्वजनास्तन्नगरं ध्वजश्रेण्याद्यलङ्कृतं कारयन्ति। तस्मिन्नवसरे चतुःषष्टीन्द्रा आसनकम्पेन प्रभोर्दीक्षाक्षणं ज्ञात्वाऽऽगच्छन्ति। ते पूर्वोक्ताष्टजातीयान् कलशान् पूजोपकरणानि च पृथक् पृथक् अष्टाधिकसहस्रं कारयन्ति। स्वजना अपीन्द्रवत् कलशान् शिल्पिभिः कारयन्ति, ते नराणां कुम्भाः दिव्यकुम्भेष्वनुविशन्ति, तेन भृशं दिव्यशक्त्या शोभन्ते। ततः सुरानीतैस्तीर्थजलौषधिमृदादिभिरिन्द्राः स्वजनाश्चासमभिषिञ्चन्ति। ततो गन्धकाषायेण रूक्षिताङ्गो यथास्थानपरिहिताभरणभासुरो लक्षमूल्यं सदशं वस्त्रं परिधत्ते। स्वजना एकां शिबिकां शिल्पिभिर्भूरिरत्नस्तम्भशताञ्चितां कारयन्ति, तादृश्या स्वर्गिकृतया शिबिकया मिश्रा सा भृशं विभाति। ततः षष्ठादितपसाऽलंकृतस्तत्र सिंहासने पूर्वाभिमुखः स्वामी निषीदति। प्रभोर्दक्षिणभागे कुलमहत्तरा उपविशेत् एकं हंसलक्षणपटशाटकं गृहीत्वा, वामभागे च धात्री निषीदति, पृष्ठे चैका तरुणी छत्रं दधाना तिष्ठति, ईशान्यामेका पूर्णकलशधरा निषीदति, एकाऽऽग्नेय्यां हस्ते तालवृन्तं धृत्वा निषीदति। ततः स्वजनादिष्टाः सहस्रनराः तुल्यबलरूपाः शिबिकां वहन्ति यावदिन्द्रस्तस्या दक्षिणबाहामूर्ध्वगां स्वयं वहति, ईशानेन्द्र उदीच्या ऊर्ध्वगां बाहां वहति, चमरेन्द्रोऽधस्तनीं दाक्षिणात्यां स्वयं वहति, उत्तरामध-

स्तनीं बलीन्द्र उद्वहेत्। शेषाः सुराः पञ्चवर्णपुष्पवृष्ट्यादिकं तन्वन्ति, इत्याद्यनेकमहामहैर्निर्गच्छन्तं जिनं सर्वे स्तुवन्ति—"हे वीतराग प्रभो ! समस्तकर्मरिपून् जित्वा शीघ्रं केवलज्ञानं त्वमाप्नुहि" । एव महामहैः प्राप्य वनमशोकादितरोस्तले तां संस्थाप्य तस्याः समुत्तीर्य भूषणानि मुञ्चति, तानि कुलमहत्तराऽऽदायैवं हितं शास्ति, यतः—

उच्चोच्चगोत्रस्त्वं वत्स त्वमसि क्षत्रियोत्तमः। ततः प्रमादं मा कार्षीर्यथा सिध्येत्तवेप्सितम् ॥ १ ॥

ततो भगवानेकया मुष्ट्या कूर्चान् मुष्टिचतुष्केण च मूर्धजानुद्धरन् लोचं कुरुते पञ्चेन्द्रियविषयकषाय-चतुष्टयरूपनवविधभावलोचं केशत्यागरूपं दशमं द्रव्यलोचं च चकार। शक्रस्तान् केशानादाय प्रभुमनुज्ञाप्य क्षीरोदधावुत्सृजेत्। ततः शक्रो देवदूष्यं लक्षमूल्यं वस्त्रं प्रभोः स्कन्धे न्यस्येत्। तदा शक्रवाक्येन सुरनरनार्योघरवो निखिलोऽप्युपशाम्यति। ततो "नमो सिद्धाणं" इत्युक्त्वा स्वामी सर्वसामायिकपाठं वदति, अत्र पाठे भंते इति जिना नोच्चरन्ति, न चास्यान्यो भदन्तः। अन्यत्र सिद्धेभ्य आचारार्थं त्वनेन सिद्धत्वात्प्रत्युक्तमिति तत्त्वार्थवृत्तौ। चारित्रप्रतिपत्त्युत्तरक्षणे चतुर्थज्ञानमुत्पद्यते। आत्तसंयमास्ते तस्मिन्नेवाह्नि विहरन्ति द्रव्याद्यप्रतिबन्धत्वेन। यतः—

तत्र द्रव्यं सचित्तादि क्षेत्रं ग्रामगृहादिकम्। कालः स्यान्मासवर्षादिर्भावो रागादिरुच्यते ॥ १ ॥

ततः प्रभुतपःपारणगृहे देवाः पञ्च दिव्यानि तन्वन्ति—सुगन्धजलवृष्टिः १, पुष्पवृष्टिः २, स्वर्णवृष्टिः

३ स्यात्, व्योम्नि दिव्यदुन्दुभिः ध्वनति ४, अहो दानमहो दानमित्युद्घोषयन्ति ५, मुदिताः सुरा नरजन्मानुमोदन्ते । स्वर्णवृष्टिस्तूत्कृष्टा सार्धद्वादशकोटिमिता स्यात्, जघन्या च तावल्लक्षमिता स्यात् ।

शक्रादयस्ते खलु वर्णनाढ्या, दीक्षादिकल्याणककारणे ये ।
मुख्या भवंति प्रभुसेवनेऽपि, तेषां करे मूर्धनि संस्थितोऽर्हन् ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ चतुर्दश-
स्तम्भे २०० व्याख्यानम् ॥

## ॥ व्याख्यानम् ॥ २०१ ॥

अथ केवलज्ञानोत्पत्तिमाह—

आद्येऽथ शुक्लध्यानस्य ध्याते भेदद्वयेऽर्हताम् । घातिकर्मक्षयादाविर्भवेत्केवलमुज्ज्वलम् ॥ १ ॥

स्पष्टः । अष्टधा कर्ममलं शोधयतीति शुक्लं, शोचं वा क्लमयतीति शुक्लं, तदेव ध्यानं तस्याद्ये भेदद्वये ध्याते सति जिनानां केवलज्ञानं समुत्पद्यते । तावाद्यौ द्वौ भेदाविमौ—तत्र प्रथमः पृथक्त्ववितर्कसप्रविचारः एकद्रव्यविवर्तिनामुत्पादादिपर्यायाणां विस्तारेण भिन्नभेदैर्यो वितर्को विकल्पनं नानानयानुसारेणात्मकात् जीवाजीवौ भिन्नत्वेन कृत्वा वितर्को गुणपर्यायविचारणं सप्रविचार इति आत्मसत्ताध्यानं यत्र ध्याने । आद्य एष भेदस्तु अष्टमगुणस्थानादारभ्यैकादशं यावल्लभ्यते इति । द्वितीय एकत्ववितर्का-

प्रविचारः जीवस्य गुणपर्याया आत्मन्येकत्वेन तिष्ठन्ति, न भिन्नस्वरूपेणेति ध्यायति, तथा मजीवस्तु सिद्धस्वरूपमयत्वेनैकोऽस्ति । तथा चोक्तं पूज्यैः—

अनेकेषां पर्यायाणामेकद्रव्यावलम्बिनाम् । एकस्यैव वितर्को यः पूर्वगतश्रुताश्रयः ॥ १ ॥
मनःप्रभृतियोगानामप्येकस्मात् परत्र नो । विचारोऽत्र तदेकत्ववितर्कमविचारि च ॥ २ ॥
इदं ह्येकत्र पर्याये योगचापल्यवर्जितम् । चिरमुज्जृम्भते दीपः(ध्यानं)निर्वातगृह(दीप)वत् ॥ ३ ॥

एष द्वितीयभेदस्तु द्वादशगुणस्थाने संभवति । अनेन घनघातीनि चत्वारि कर्माणि क्षयं नीत्वा निर्मलकेवलज्ञानं लभते सयोगिकेवलिगुणस्थाने ध्यानान्तरिका ( तं ) स्यात् , तेन ज्ञानेन सर्वपदार्थाननन्तधर्मात्मकान् जानन्ति । यतः—

न जानन्ति न पश्यन्ति यत्तन्नास्ति जगत्त्रये । अतो भवन्ति पूज्यास्ते अर्हन्तो जगदर्चिताः ॥ १ ॥

इति । अथ तीर्थकृत्पदमपि केवलोत्पत्तौ सत्यां भोग्यतामेतीत्याह—

यत्तृतीयभवे बद्धं तीर्थकृन्नामकर्म तत् । प्राप्तोदयं विपाकेन जिनानां जायते तदा ॥ १ ॥

अथ केवलोत्पत्त्यनन्तरं यद्देवाः कुर्वन्ति तदाह—

तस्मिन्नेव क्षणे देवेश्वरा आसनकम्पतः । एत्य महामहं कुर्युर्ज्ञानोत्पत्त्यास्पदेऽर्हताम् ॥ १ ॥

अर्हतां ज्ञानोत्पत्तौ पूर्ववच्चतुःषष्टिः सुरा एत्य केवलकल्याणकमहं तन्वन्ति । तथाहि—वायुकुमारा योजनमितभूमण्डलं शोधयन्ति । मेघकुमारास्तां जलैः सिञ्चन्ति, षड्ऋत्वधिदेवताः पुष्पैर्महीं पूजयन्ति ।

व्यन्तरा भूतलभूमेः सपादक्रोशोच्चं स्वर्णरत्नमणिमयं पीठं रचयन्ति । तत्र पृथ्वीतो दशसहस्रसोपानैः प्राप्यं रूप्यमयं वप्रं हेमकपिशीर्षाढ्यं भुवनेशाः कुर्वते । तच्चैकैकं सोपानमेकहस्तपृथूच्छ्रितं । भूमेः सपादक्रोशस्तेषां समुच्छ्रयः । रौप्यवप्रस्य भित्तिः पञ्चशतधनुरुच्छ्रिता स्यात्, तथा त्रयस्त्रिंशद्धनुर्युक्तद्वात्रिंशदङ्गुलैर्मिता पृथुला स्यात् । तत्र वप्रे पाञ्चालिकाष्टमङ्गलान्वितानि चत्वारि द्वाराणि रचयन्ति, वप्रस्य कोणे कोणे वापीश्च । तत्र प्राच्ये द्वारे द्वारपालस्तुम्बुरुसुरः, दाक्षिणात्ये खट्वाङ्गी, पश्चिमे कपालिः, उत्तरे जटामुकुटधारी स्यात् । आद्यवप्रस्य मध्ये समंततः पञ्चाशद्धनुर्विस्तृतः प्रतरः समा भूमिश्च भवेत् । अत्र सुरनरयानानि तिष्ठन्ति। ततः प्रतरसंपूर्तौ द्वितीयस्वर्णवप्रस्य रत्नकपिशीर्षकालंकृतस्य सोपानानि पञ्चसहस्राणि तन्वन्ति, तैस्तत्प्राप्यते । वप्रस्य भित्तिचतुर्द्वारादिमानं पूर्ववज्ज्ञेयं । तत्र पूर्वस्यां द्वारेशे अभयङ्कराढ्ये द्वे श्वेतवर्णे जयादेव्यौ स्यातां, याम्यद्वारे रक्तवर्णे विजयाख्ये देव्यौ हस्तन्यस्ताङ्कुशे, पश्चिमायां पीते पाशधरे अजिते देव्यौ, उदीच्यामपराजिते नीले मकरकरे स्यातां । पञ्चाशद्धनुर्मानः प्रतरः । अत्र तिर्यञ्चः सिंहव्याघ्रमृगादयस्तिष्ठन्ति । अत्रेशानकोणे देवच्छन्दो भवति । व्याख्यानोत्तरकाले सुरसेवितः स्वामी तत्राध्यास्ते । तत ऊर्ध्वं पञ्चसोपानसहस्रातिक्रमे पूर्ववद्भित्त्युच्चत्वद्वारादिमानयुक्तं रत्नमयमणिकपिशीर्षकशालिनं वप्रं वैमानिकाः कुर्युः । अत्र पूर्वस्यां द्वारेशः सौमो वैमानिकसुरः, याम्यां दण्डपाणिर्यमो गौराङ्गो व्यन्तरामरः, प्रतीच्यां रक्तः पाशभृज्ज्योतिष्को वरुणः, उत्तरस्यां द्वारपालो धनदो भुवनपतिसुरो गदाहस्तः श्यामाङ्गो भवति । रत्नवप्रस्य मध्ये पीठं समभूतलं षड्धनुःशतानि एकं

क्रोशं च विस्तृतायतं स्यात् । एतावदेव विस्तारमानमाद्यद्वितीयवप्रयोर्ज्ञेयं, तत्पार्श्वद्वयमिलनात्, तथाहि—रूप्यवप्रात् पञ्चाशद्धनुर्मितः प्रतरः, ततोऽग्रे पञ्चाशदधिकद्वादशशतानि सोपानधनूंषि स्युः, एवं त्रयोदशशतानि धनुषामेकतो रूप्यस्वर्णवप्रयोरन्तरं स्यात्, परतोऽपि तथैव, एवमुभयोः पार्श्वयोर्विस्तारे समुदिते एकः क्रोशः षड्धनुःशतानि यथोक्तमानं स्यात् । एवमेवान्ययोर्वप्रयोरपि मानं ज्ञेयं । एवं त्रयाणां वप्राणां व्यासमाने समुदिते क्रोशत्रयं धनुषां अष्टादश शतानि च स्यात् । अत्र षड् वप्रभित्तयः स्युः, एकैकभित्तिविस्तारस्तु त्रयस्त्रिंशद्धनूंषि द्वात्रिंशदङ्गुलानि च स्युः, तत्र धनूंषि षड्गुणानि कृतानि अष्टनवत्यधिकं शतमेकं स्युः, अङ्गुलानि च षड्घ्नानि द्विनवत्यधिकमेकं शतं स्युः, एषां चापद्वयं तेषु अष्टनवत्यधिकशतधनुष्षु मध्ये नियोजितं स्याच्चापद्विशती, सा प्राच्यचापराशौ अष्टादशशतात्मके नियोज्यते तदैकः क्रोशः, स पूर्वोक्तैस्त्रिभिर्युक्तो योजनसंमितं वृत्तं समवसरणं जातं । अस्मिन् समवसरणे ये चतुर्दिक्षु सोपानानां सहस्रा दश स्युस्ते योजनाद्बहिः । जिनाधःस्थमहीतलाद्बाह्यसोपानपर्यन्तं भूतलं तु सपादैस्त्रिभिः क्रोशैर्भवेत् ।

भूमावलग्नं समवसरणं च भवेदिदम् । तत ऊर्ध्वमूर्ध्वं सोपानरचनाभिः समन्ततः ॥ १ ॥

इयं वृत्तसमवसरणव्याख्या ज्ञेया । किञ्चिच्छेषं चतुरस्रसमवसरणस्वरूपं च लोकप्रकाशतो ज्ञाव्यं ।

अथ तृतीयवप्रे यत्प्रागुक्तं समभूतलं तस्य मध्ये मणिरत्नमयं पीठमेकं जिनदेहोच्चत्वसमोच्छ्रयं चतुर्द्वारं

त्रिसोपानं चतुर्दिक्षु भवेत् । तच्च विष्कम्भायामतः शतद्वयधनुष्कं महीतलाच्च सार्धेन क्रोशद्वयेनोच्चैर्भवति । यतः—

यदेकहस्तोत्तुङ्गानां सोपानानां सहस्रकैः । विंशत्या क्रोशयोर्युग्मं सार्धमेवोच्छ्रयो भवेत् ॥ १ ॥
तच्च सिंहासनाधःस्थधरायाः पीठिकावधि । उच्छ्रयस्य भवेन्मानं समश्रेणिविवक्षया ॥ २ ॥

अस्य पीठस्य मध्यदेशेऽशोकवृक्षो योजनविस्तृतः स्यात्, स जिनवपुर्मानाद्द्वादशगुणोच्चः । यतः—

तिन्नेव गाउआइं चेइअरुक्खो जिणस्स उसभस्स । सेसाणं तु जिणाणं सरीरओ बारसगुणो उ ॥ १ ॥

चैत्यवृक्षः–जिनज्ञानोत्पत्तिवृक्षः अशोकवृक्षस्योपरि स्यात् । तस्य वृक्षस्य मूलेऽर्हद्देवच्छन्दो भवेत् । चतुर्दिक्षु चत्वारि स्वर्णसिंहासनानि स्युः, पुरश्चैकैकं रत्नमयं पादपीठमर्हदागमे धृतोल्लासमिव लसति, प्रतिसिंहासनं छत्राणां त्रयं त्रयमुपर्युपरि संस्थायि मौक्तिकश्रेण्यलंकृतं स्यात्, प्रतिसिंहासनमुभयतो द्वौ चामरधारिणौ सुरौ स्यातां, सिंहासनाग्रे स्वर्णपद्मस्थितं चतुर्दिक्षु एकैकं धर्मचक्रं भानुजित्वरं, तच्चार्हतां त्रिभुवनधर्मचक्रित्वसूचकं मत्सरिमदापहं भवेत् । तथा चतुर्दिक्षु चत्वारः सहस्रयोजनोच्छ्रिताः लघुघण्टिकादियुक्ता महाध्वजाः स्युः । तत्र प्राच्यां धर्मध्वजः, याम्यां मानध्वजः, पश्चिमायां गजध्वजः, उत्तरे च सिंहध्वजः । यदत्र चापक्रोशादिमानमुक्तं तदधिकृतजिनात्माङ्गुलमानतो भवेत् । पीठं चैत्यवृक्षं सिंहासनं छत्रचामरान् देवच्छन्दकादीनि च व्यन्तरामराः कुर्वन्ति । एतत्समवसरणं सर्वदेवसाधारणं । उक्तं च—कश्चिन्महान् सुरोत्तम एकोऽपि सर्वमेतत्कुर्यात् । तथा देवा नाकिनो हर्षतः सिंहनादं दुन्दुभिरवं

च कुर्वन्ति । तत्र सूर्योदये कनककमलेषु क्रमेण पादौ स्थापयन् पूर्वद्वारेण समवसरणे प्रविश्य चैत्यवृक्षं प्रदक्षिणीकृत्य पादपीठन्यस्तपादो "नमस्तीर्थाय" इत्युक्त्वा सिंहासने निषीदति । यतः—

तीर्थं नाम श्रुतज्ञानं यद्वा सङ्घश्चतुर्विधः । आद्यो वा गणभृत्तेन तीर्यते यद्भवाम्बुधिः ॥ १ ॥

श्रुतज्ञानपूर्विका अर्हन्तः, तदभ्यासेनार्हन्नामकर्मप्राप्तेरिति ।

अर्हन्नेतत्पूर्विको यत्तथा पूजितपूजकः । लोकेऽप्यर्हत्पूजितत्वात् पूजयेत्तीर्थमादरात् ॥ २ ॥

ततस्तीर्थं नमत्यर्हन् कृतकृत्योऽपि वा यथा । धर्मं कथयति स्वामी तथा तीर्थं नमस्यति ॥ ३ ॥

तत्र निषण्णो जिनो देशनां विधत्ते, येन केन वचसा भूयसामपि संशयाश्छिद्यन्ते । यतः—

क्रमाच्छेदे संशयानामसङ्ख्यत्वाद्दपुष्मताम् । असङ्ख्येनापि कालेन भवेत् कथमनुग्रहः ॥ १ ॥

शब्दशक्तेर्विचित्रत्वात् सन्तीदृंशि वचांस्यपि । प्रयुक्तैरुत्तरं यैः स्याद्युगपद्भूयसामपि ॥ २ ॥

अथार्थसमर्थनार्हं लौकिकं ज्ञातमिदं—संगधरग्रामे धनकणकञ्चनाढ्यो बुढणाह्व आभीरः । तस्य पुष्पवतीप्रमुखाः पञ्चदश भार्याः, सर्वाः स्नेहाढ्याः । एकदा तत्पतिर्गाश्चारयितुं वने गतः । मध्याह्ने भोजनाय स्थितः । तदा वनश्रीविलोकनोत्सुकाः पतिपार्श्वे आजग्मुः । ताः सर्वा अपि क्रमेण पतिमभिदधिरे—कथमद्य क्षिप्रचटिका भूयसी राद्धा १ । कथमद्य तक्रे मधुरिमा स्तोकः २ । सा सश्मश्रुका स्त्री ( कथं ) गृहे वर्तते ३ । अद्य कथं तव समाधिरस्ति ? ४ । अद्य कङ्कोटकशाकं कथमद्भुतं पाचितं ५ । कथमियं शुनी घुर्घुरायते ६ । सा महिषी गर्भवती कथं न जाता ७ । इयं पुरो दृश्यमाना स्त्री पान्था मार्गे

श्रान्ताऽस्ति न वा? ८। अद्य सत्रागारे भोजनं कथं न दीयते ९। कथमद्यानेन प्रवाहेण जलं प्रचुरमेति १०। कथं तव धम्मिल्लः सज्जीकृतोऽस्ति ११। कथं कर्णयोः कुण्डले न परिहिते १२। कथमत्र गह्वरे भयं नास्ति १३। गृहाणामूनि फलानि (कथं न गृहीतानि) १४। एता अजाः कथं न गणिताः १५। इति क्रमेण पृष्टानां सर्वासामासां भृशं पूजार्हा मान्या पुष्पवती मुख्या स्त्री एकेनैव "पालि नत्थि" इतिशब्देनोत्तरं युगपद्दत्ते स्म। तथाहि—छिप्रचटिका बह्वी राब्धा इत्यत्र धान्यमानकर्त्री पालिर्नास्ति, अतः धान्यमापकाऽत्र लोके पालीति कथ्यते १। तक्रे मधुरिमा कथं स्तोक इत्यत्र बदरीबब्बुलादिभवा तिर्यग्भद्यविशेषा पाली इति सा नास्ति अतः २। सा प्रातिवेश्मिकी सश्मश्रुका स्त्री गृहेऽस्ति दिवाकीर्तिगृहे न गताऽस्ति, अद्य पाली न विद्यतेऽतः ३। अद्य मम समाधिरस्ति एकान्तरादिज्वरागमनपाली—ज्वरवारको नास्ति, तेनेति ४। अद्वतकङ्कोटकपाचने पाली छुरिका नास्ति, तां विनाऽमी कङ्कोटका अद्वताः पाचिताः ५। शुनी घुर्घुरायते इत्यत्र सा पोषिता नास्ति अतः ६। महिषी० गोमहिष्यादिगर्भकालो लोके पालीति कथ्यते, तेनाधानसमयो नास्तीति ७। पान्था मार्गे श्रान्ता नास्ति, रथादिवाहनं विना व्रजन्ती स्त्री पालीति लोके, तेनैषा पदपाली नास्ति, रथाद्यारूढा समेताऽस्ति ८। सत्रागारे भोजनमिति सत्रवेश्मनि येन पात्रेण कल्पितं भोजनं दीयते तत् पालीति लोके, तेन सा नास्तीति ९। कथं प्रवाहतः पयः प्रचुरमेति इत्यत्र पालिः सेतुरिति तेन पालिरत्र नास्तीति १०। धम्मिल्लः सज्जीकृत इत्यत्र मम मस्तके पाली यूका नास्ति केशपाशः प्रगुण एवास्ति अतः ११। कर्णयोः कुण्डलपरिधापनमित्यत्र पालिः कर्ण-

लतिका, सा नास्ति, तां विना न कर्णभूषणपरिधानं १२ । अत्र वनसमीपे निम्नपालिर्नास्ति तेन जयं न विद्यते १३ । गृहाणामूनि फलानीत्यत्र पालिरुत्सङ्गः सा नास्तीति कथं गृह्यन्ते १४ । एता अजा गणिता इत्यत्र पालिः प्रान्तः तेनैतादृशां जूयसीनामजानां पालिः प्रान्तो नास्तीति १५ । इत्येकेनोत्तरेण सर्वा अपि स्वस्वमनसि प्रश्नोत्तरं बुबुधुः। सम्यगवगम्य तत् पतिरपि मुमुदे । इति प्राकृतजनेषु यदीदृशी शक्तिस्तर्हि जिनेन्द्रवाक्यतः सर्वेषां संशयाभावः कथं न स्यात् ? । यतः—

अप्येकमर्हद्वचनं जहार, यत्संशयालिं युगपज्जनानाम् ।
श्रुत्वा कथां वल्लभवल्लभानां, जिनेन्द्रतः स्यात् किमु तत्र चित्रम् ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ चतुर्दशस्तम्भे २०१ व्याख्यानम् ॥

---

## व्याख्यानं ॥ २०२ ॥

अथ देशनासमये यद्भवति तदाह—

जिनवाक्यात्प्रबुद्धा ये दीक्षां गृह्णन्ति ते मुदा । तेषु गणिपदार्हास्तान् यच्छन्ति त्रिपदीं जिनः ॥ १ ॥
अधीत्य त्रिपदीं तेऽपि मुहूर्त्ताद्बीजबुद्धयः । कुर्वन्ति द्वादशाङ्गानि यतश्चक्रुर्जिना गणान् ॥ २ ॥

सूत्रं गणधरा एव ग्रथ्नन्त्येते महाधियः । दिशन्ति केवलानेव प्रायोऽर्थांस्तीर्थपाः पुनः ॥ २ ॥

नवरं भव्योपकाराय सूत्रं गणेशा रचयन्ति। यथा कश्चिन्नरः सहकारारूढोऽधस्थानामुपकाराय फलानां वृष्टिं कुरुते, तदा केचन पतन्ति तानि पटेन गृह्णन्ति, ततः स्वमन्यांश्च प्रीणयन्ति, तथैव जिना ज्ञानकल्पद्रुमशिरःस्थिता भव्यहितायार्थान् वर्षन्ति, तन्मध्ये किञ्चिद्गणेशा धिषणापटेन गृह्णन्ति, रचितैस्तैरात्मानं परांश्चानुगृह्णन्ति । यतः—

यथा फलानि व्यस्तानि न सर्वानुपकुर्वते । कृतार्था न तथैवार्थाः स्युः सूत्ररचनां विना ॥ १ ॥

अथ समवसरणे प्रभोः कति रूपाणि भवन्तीत्याह—

मूलरूपं प्रभोः प्राच्यामन्यत्रिदिक्षु नाकिनः । तन्वन्ति भगवत्तुल्यं तन्महिम्नैव तद्भवम् ॥ १ ॥

स्पष्टः । नवरं शेषदिक्षु अर्हद्बिम्बानि स्वर्गिणो रचयन्ति, परं जना अकृत्रिमं कृत्रिमं वा न जानन्ति मूलस्वरूपाद्भिन्नत्वं न स्यादिति । तथा तानि कृत्रिमाण्यपि जिनतुल्यबिम्बानि जिनप्रभावेणैव भवन्ति, अन्यथा सर्वे सुराः संभूयापि जिनाङ्गुष्ठप्रमितं रूपं सर्वशक्तितोऽपि कर्तुं न क्षमाः । आहुश्च—

यैः शान्तरागरुचिभिः परमाणुभिस्त्वं, निर्मापितस्त्रिभुवनैकललामभूत ।
तावन्त एव खलु तेऽप्यणवः पृथिव्यां, यत्ते समानमपरं न हि रूपमस्ति ॥ १ ॥

प्रभुरूपवर्णनमावश्यकनिर्युक्त्यामपि कृतं । तथाहि—वाचामगोचरादर्हतां स्वरूपादनन्तगुणहीनं गण-

१ गणधरानिर्मथः ।

भृत्स्वरूपं, तेभ्यश्चाहारकदेहा अनन्तगुणहीनाः, तेभ्योऽप्यनुत्तरसुरा अनन्तगुणहीनाः स्वरूपतः, ततोऽधोऽधः क्रमात् सुरा व्यन्तरसुरान् यावत्, तेभ्यश्चक्रिणो वासुदेवा बलदेवा महामाण्डलिकाः क्रमादनन्तगुणहीना ज्ञेयाः । तच्छेषास्तु नृपादयः सर्वेऽपि लोका मिथः स्वरूपतः षट्स्थानपतिता भवन्ति। यत उक्तं च—

अनन्ता १ सङ्ख्य २ सङ्ख्येय ३ भागहीनाः परस्परम्। सङ्ख्येया ४ संख्येया ५ नन्त ६ गुणहीनाश्च रूपतः ॥ १ ॥

तथा तीर्थंकरस्वरूपं सर्वेषां वैराग्यजनकं स्यात्, न तु रागादिवर्धकं चेति । अथ समवसरणे पर्षदां स्थानान्याह—

द्वादश पर्षदः सर्वा देशनाश्रवणस्पृहाः । स्वस्वस्थाने निषीदन्ति प्रशस्तयोगभासुराः ॥ १ ॥

स्पष्टः । पर्षन्निषीदनस्थानान्यमूनि, तथाहि—ज्येष्ठोऽन्ये च गणभृतो जिनपार्श्वे आग्नेय्यां निषीदन्ति, केवलिनस्तु जिनाँस्त्रिःप्रदक्षिणीकृत्य तीर्थनमस्कृतिं कृत्वा स्थितेर्गौरवं रक्षन्तः पदस्थानां गणभृतां पृष्ठतो निषीदन्ति, जिनं न वन्दन्ते, यतः—

कृतकृत्यतया तादृक्कल्पत्वाच्च जिनेश्वरान् । न नमस्यन्ति तीर्थं तु नमन्त्यर्हन्नमस्कृतम् ॥ १ ॥

उक्तं च धनपालेन ऋषभस्तोत्रे—

होइ मोहुच्छेओ तुह सेवाए धुवत्ति भेदामि । जं पुण न वंदिअव्वो तत्थ तुमं तेण झिज्झामि ॥ १ ॥

केवलिनां पृष्ठतः शेषसाधवोऽतिशयिनोऽर्हत्तीर्थगणाधिपादिकान्नत्वा यथाक्रमं विनयेन निषीदन्ति,

तेषां पृष्ठतो वैमानिकदेव्योऽर्हदादिकान् प्रणम्यासते, तासां पृष्ठे साध्व्यः इत्येतास्तिस्रः पर्षदोऽग्निकोणे निषीदन्ति पूर्वद्वारेण प्रविश्यार्हत्प्रदक्षिणां कृत्वा च । भुवनपतिज्योतिर्व्यन्तराणां देव्य इति त्रयं याम्यद्वारेण प्रविश्य नैर्ऋत्यां दिशि तिष्ठन्ति । भुवनपतिज्योतिर्व्यन्तरसुराः पश्चिमद्वारे प्रविश्य वायव्यां दिशि तिष्ठन्ति । वैमानिकसुरा नरा नार्यश्चोत्तरद्वारे प्रविश्येशानकोणे निषीदन्ति अर्हदादिकान्नत्वेति । चतुर्धा देव्यः साध्व्यश्चोर्ध्वगाः शृण्वन्ति । सर्वे देवा नरा नार्यः श्रमणाश्च निविष्टाः शृण्वन्ति, वृत्तावावश्यकस्येदं वाक्यमुक्तं । चूर्णौ चोत्कटिकासनाः साधवः शृण्वन्ति, साध्व्यो वैमानिकाङ्गनाश्चोर्ध्वस्थिताः । बालग्लानजर्जरादीनां सोपानाद्यारोहतां श्रमो व्याधिश्च प्रभुप्रभावान्न भवेत्, न कस्यापि वैरभावं प्रादुर्भवति । द्वितीयवप्रे विस्मृतजात्यादिवैरास्तिर्यञ्चः शृण्वन्ति इति । अथ देशनान्ते यद्भवति तदाह—

प्रथमां पौरुषीं यावद्धर्ममाख्याति पारगः । वर्धापनविधिं तत्र तन्वन्ति तण्डुलैर्जनाः ॥ १ ॥

स्पष्टः । जनाश्चक्रवर्ती श्राद्धो वा पूर्जनादयो वा तण्डुलैः शालिकणैर्वर्धापनविधिं कुर्वन्ति, तथाहि—कलमशालीनां तण्डुला उद्दामसौरभ्या निस्तुषाश्च सितत्विषोऽखण्डाग्राश्चतुःप्रस्थमिता आढकमानाः शुद्धवारिणा शोधिताः तानर्धस्विन्नानिमान् रत्नस्थाले निक्षिप्य सज्जिताखिलशृङ्गारा सुवासिनी मौलौ धत्ते, अत्र स्वर्गिणः सुगन्धिद्रव्याणि क्षिपन्ति, तेनासौ बलिर्भूरिसौरभ्यो जायते । ततो गीततूर्यादिमहोत्सवपुरस्सरं श्राद्धेन प्रभोरग्रे नीयते, बलिरेवं पूर्वद्वारा प्रविशति । तस्मिन् पात्र आगते जिनाः क्षणं विरमन्ति । ततः स चक्रवर्त्यादिश्राद्धो बलिना सह तिस्रः प्रदक्षिणाः कृत्वा प्रभुपादान्तिके प्राच्यां

स्थित्वा सर्वासु दिक्षु तं बलिं प्रौढमुष्टिभिः किरति, तस्यार्धं भूमिपतनात्प्रागेव नाकिनो गृह्णन्ति, शेषस्यार्धस्यार्धमेतद्विधायको गृह्णाति, अन्ये जना अवशिष्टं यथालाभं गृह्णन्ति । तस्यैककणे मूर्ध्नि न्यस्ते रोगाः सर्वेऽपि शाम्यन्ति, षण्मासावधि नूतनरोगो नाविर्भवति । इत्थं बलिविधौ पूर्णे जिनाः प्रथमवप्रतोऽवतीर्य द्वितीयवप्रस्येशानकोणके देवच्छन्दक एत्यानेकदेववृताः सुखं तिष्ठन्ति । ततो द्वितीयपौरुष्यां नृपाद्यानीते सिंहासने पादपीठे वोपविश्य गणाधिपो धर्मोपदेशमादिशेत् । पुनः पश्चात्पौरुष्यां जिनाः सिंहासने स्थित्वा देशनां कुर्वते । इदं समवसरणं यत्र कदापि न जातं स्यात्तत्र चतुर्विधा देवा अमुना विधिना कुर्वन्ति । कश्चिन्महर्द्धिकसुरो नन्तुमेति स तत्रैकोऽपि कुरुते इति ।

अथ समवसरणं विना नियतर्द्धिमाह—

यदापि न स्यात्समवसरणं स्यात्तदापि हि । सुशोभितं प्रातिहार्याष्टकं नियतमर्हताम् ॥ २ ॥

स्पष्टः । नवरं अष्टमहाप्रातिहार्यवर्णनं तु मया प्रथमस्तम्भे लिखितमस्तीति ।

इत्यनन्तगुणरत्नशालिना-मर्हतामुदितमागमोदधेः ।
वर्णनं तदनुसारमर्हतां, धार्मिकाः सुकुरुतात्मनो हितम् ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादवृत्तौ चतुर्दशस्तम्भे २०२ व्याख्यानम् ॥

१ बलिस्वामी । २ योग्यताम् ।

## व्याख्यानं ॥ २०३ ॥

अथ जिनेन्द्राः समवसरणे स्थिता देशनां तन्वन्तीत्याह—

बहवोऽविरता जीवास्तेभ्यः स्वल्पाः सुदृष्टयः । स्वल्पतरास्ततः श्राद्धाः साधवोऽल्पतमास्ततः ॥ १ ॥

अविरता द्वादशविधविरतिरहिता जीवा बहवः समस्तविश्ववर्तिमिथ्यात्विजीवग्रहणात् । अविरतयश्चेमाः—मनसः करणानामिन्द्रियाणां पञ्चानामनियमोऽनियन्त्रणं षण्णां जीवानां वधश्चेति द्वादश । तेभ्योऽविरतिजीवेभ्यः स्वल्पाः सम्यक्त्वधारिणः । तेभ्यः श्राद्धा देशविरताः स्वल्पतराः, एकादशाविरतीनामनियमपराः द्वादशस्य त्रसकायरूपस्यैव प्रत्याख्यानपराः ते विरत्येकदेशधरा देशविरतिधराः । तेभ्यः सर्वविरतिधराः साधवः स्वल्पतमाः । अत्र भावना—इह जीवानां संसारे चतस्रः पङ्क्तयः सन्ति । तत्राद्यपङ्क्तेर्महत्त्वमेवं—सर्वेऽप्येकेन्द्रियादयोऽविरतपङ्क्तावेव । तत्रैकेन्द्रियाः पञ्चाश्रवेभ्योऽविरतत्वात्तज्जनितं कर्मबन्धं लभन्ते, विरताश्च नोच्यन्ते, यथाहि सुप्तप्रमादिमूर्छितादयो विरतिपरिणामाभावाच्छक्तिचेतनाद्यभावेन हिंसादि न कुर्वते तथापि व्रतिनो नोच्यन्ते । मूकादयोऽसत्यमवदन्तोऽपि न सत्यवादिनः । कुणिपङ्ग्वादयश्चादत्तं न गृह्णन्ति तथापि न ते स्तेयत्याजकाः । कृत्रिमाकृत्रिमनपुंसकास्तिर्यङ्नरा मैथुनमसेवमाना अपि न ब्रह्मचारिणः । पशुद्रमकादयश्च विशेषधनवस्त्राद्यभावान्न निर्ग्रन्थाः स्युः, विरतिफलं न लभन्ते । एवमेकाक्षा अव्रताः, सम्यक्त्वाभावात् । यतः—"एगिंदिएसुसासाणो" इति द्वितीयगुणस्थानस्याप्यभावात् । एवमेव विकलेन्द्रियसंमूर्छिमपञ्चेन्द्रियादिष्वप्यविरतित्वं, सास्वादनस्योत्पत्तिसमये षडावलिका

यावत्सद्भावात् । अथैकाक्षेषु किञ्चिद्विशेषहिंसाद्याश्रवा दृश्यन्ते, तथाहि—वृक्षादयः स्वसमाश्रयं जलानि-
लादिकं सचित्तं गृह्णन्ति इति तेषां जलवातविराधना स्पष्टा । यतः—
जत्थ जलं तत्थ वणं जत्थ वणं तत्थ निच्छिओ अग्गी । तेउ वाउ सहगया तसा य पच्चक्खया चेव ॥ १ ॥

इति वचनाद्वनस्पत्यादीनामप्याहारग्रहणमात्रेणापि सूक्ष्मवृत्त्या विराधना । बादरवृत्त्या तु केचिद्वृक्षाः कंथारीबदर्यादयः कदल्यादीन्मरुदेव्यादिजीववत् स्नुह्यादयः स्वमूलक्षारकटुरसादिभिः पृथिव्यादीन् घ्नन्ति, कीटमारिकाकिंपाकादयो मनुष्यपश्वादीन् घ्नन्ति, चैत्रागारिप्रमुखा उत्पाटयन्ति, केचिन्मनुष्यान् पशवः (शून्) पशूँश्च नरान् कुर्वन्ति । वंशशरादयो धनुर्बाणादिरूपतया बहुजीवान् घ्नन्ति । धत्तूरादिजीवानामप्युत्सर्गादविरतपरिणामत्वादचेतनशरीरादेरपि बन्धः । जिनपूजार्थपुष्पफलाक्षतादिमुनिगात्रादिजीवानां शरीराणां धर्मसाधनत्वेऽपि न पुण्यबन्धः, तद्धेतुविवेकाभावात् । एवं मक्षारकनखप्रभृतिदेहशकल-लाङ्गलादिजीवानां हिंसाहेतुत्वं भावनीयं । एवं दर्शिता हिंसा १ । तथा तेषां सत्यासत्यभाषाया अभावाद-सत्यं । जनानामसत्यवादहेतुत्वादपि असत्यपापं, दृश्यन्ते हि केचिदौषधिवशादसत्यमपि वदन्तः । दीपावतारादौ कन्याद्युक्तस्यासत्यस्यापि विज्ञापनात् । मोदकवृक्षादयो मोदकोत्पादनेन जनानां ग्रामादि-वैपरीत्यादि दर्शयन्ति, इत्याद्यनेकधाऽसत्यप्रकारः २ । सर्वे वृक्षजीवाः सचित्तमाहारं गृह्णन्ति, तदाहार-गतजीवादत्तमेवेति, परेषामदत्तहेतुत्वं च स्पष्टमेवेति, कोकाशसूत्रधारकृतकाष्ठमयशुकपारापतादिभिर्नृपको-ष्ठागारेऽदत्तादानं कृतं शाल्यादीनां ग्रहणश्रवणात्, काष्ठशुकादिजीवानां चादत्तादानपापं पूर्वोपार्जित-

शादिवत् । औषधाञ्जनेन परधनग्रहणप्रवृत्तिरित्यादि ३ । एवं मैथुनपापं विरतिभावाभावात्, तादृक्पुष्पारामादीनां परं प्रति रागहेतुत्वात् । अहिफेनादिभिर्विशेषमैथुनप्रवृत्तिः स्यात् । तथा लोके पञ्च बाणा इमे—कमलकन्दः १, आम्रमञ्जरी २, जातिपुष्पं ३, चम्पापुष्पं ४, बपोरियापुष्पं ५ च, एते पञ्च मैथुनरागजनकाः । तथा केषाञ्चित्तरूणां साक्षादपि कामसंज्ञा दृश्यते । तदुक्तम्—

पादाहतः प्रमदया विकसत्यशोकः, शोकं जहाति बकुलो मधुवारिसिक्तः ।
आलिङ्गितः कुरुवकः कुरुते विकास—मालोकितस्तिलक उत्कलिको विभाति ॥ १ ॥

इति ४ । परिग्रहोऽपि तेषां विरत्यभावात् । केचित्तरवो निधिं मूलेन वेष्टयन्ति मूर्छयेत्यादि परिग्रहपापं स्पष्टं । तथा तरूणां बाह्यत एकेन्द्रियत्वमस्ति तथापि भावतः पञ्चेन्द्रियाणां सद्भावः । तथा तेषां दशसंज्ञाभिः कर्मबन्धः, तथाहि—

आहार १ भय २ परिग्गह ३ मेहुणं ४ तह कोह ५ माण ६ माया ७ य ।
लोभो ८ रागो ९ ओहो १० एए सन्ना दस जीवाणं ॥ १ ॥

रुक्खाणं जलाहारो १ संकोअणी भएण संकुअइ २ । नियतंतुएहिं वेढइ वल्ली रुक्खस्स परिग्गहेइ ३ ॥ २ ॥
इत्थीपरिरंभेणं कुरुवकतरुणो फलंति मेहूणे ४ । कोकणयस्स उ कंदो हुंकारे मुअइ कोहेणं ५ ॥ ३ ॥
माणे झरति रुअंती ६ छायइ वल्ली फलाइ मायाए ७ । लोभे बिल्लपलासा खिवंति मूले निहाणुवरिं ८ ॥ ४ ॥
रयणीए संकोअं (अं) कमलाणं होइ रागसन्नाए ९ । ओघे चइत्तु मग्गं चडंति रुक्खेसु वल्लीओ १० ॥ ५ ॥

इति वनस्पतिमाश्रित्याविरतिर्ज्ञापिता । एवं पृथ्वीजीवानां ज्ञाप्यं, हरितालसोमलक्षारादिभिर्विकलेन्द्रियतिर्यङ्मनुष्याणां प्रत्यक्षं वधदर्शनात् । पारदस्य तु कूपस्थस्याश्वारूढस्त्रीमुखदर्शनात्तामनुधावतः कामचिह्नं स्पष्टमेव । शेषं प्राग्वत् । जलमपि क्षारादिविशेषैर्मधुरजलपृथ्व्यादिजीवान् हन्ति, नदीपूरादिषु नरपश्वादीनां महान् वधः स्यात् । अग्निश्च तापशोषणादिना जलजीवान् हन्ति सर्वतोधारशस्त्ररूपत्वात्सर्वजगद्दाहकशक्तिरस्ति, तेन ग्रासं सर्वं हन्ति । एवं वायवोऽप्युष्णादयः शीतादिवायुजीवान् प्रदीपाद्यग्निजीवान् घ्नन्ति, लूकादिभिर्नरादीनां मृत्युदर्शनात् । एवमेकेन्द्रियाणां पञ्चाश्रवाद्यविरतित्वं ज्ञापितं । एवं विकलेन्द्रियाणामपि । यतः पूरकशङ्खादयो द्वीन्द्रिया जीवा जीवाहारं कुर्वन्ति । यूकाकीटिकामत्कुणखर्जूरादयस्त्रीन्द्रिया जीवाहारा एव, खर्जूरादयः कर्णे प्रविष्टा उद्वेजयन्ति । चतुरिन्द्रिया वृश्चिकभ्रमर्यादय ईलिकादीन् घ्नन्ति । दंशमशकादयो गजकर्णे प्रविष्टा गजं सिंहनासायां प्रविष्टाश्च सिंहं घ्नन्ति । पञ्चेन्द्रियाश्च जलचरा मत्स्यादयो मत्स्याहारा एव । स्थलचरा व्याघ्रसिंहसर्पादयोऽपि मांसाहाराः । श्येनगृध्रादयो बहुधा हिंसाकारिणः । तथा कामसेवाऽपि स्थलचरादीनां स्पष्टैव । एषां हिंसादिजनिता गतिरप्येवं—

"थावर विगला नियमा संखाउअतिरिनरेसु गच्छंति" ।

तथा—"असन्नि १ सरिसिव २ पक्खी ३ सीह ४ उरग ५ त्थि ६ जंति जाव छट्ठिं ।
कमसो उक्कोसेणं सत्तमपुढविं मणुअमच्छा ॥ १ ॥"

इत्यनन्ता जीवा अविरतपङ्क्तावेव प्रविशन्ति। अथ मनुष्या भिल्लशौनिककैवर्तकचक्रिम्लेच्छादयोऽधर्माः। नृपामात्यादय उत्तमा अपि जैनधर्मविमुखा अविरता एव। तथा द्वीपायनादयः सुरा हिंसाद्याश्रवकरा अविरता एव। तथा सुराः काञ्चनबुध्ध्याऽसत्यं जल्पन्ति, अदत्तनिधानादिकं परकीयमधितिष्ठन्ति। मैथुने परकीयदेवाङ्गनाः कामयन्ते। परिग्रहस्तु विमानादिलक्ष्मीरपि अमितैव। एवं सुरा अप्यव्रतिनः। तथेश्वरो जगत्संहाराधिकारीत्यादिनाऽऽश्रवपर एव। एवं कृष्णब्रह्मादयोऽपि ज्ञेयाः। लौकिकर्षयोऽपि शापानुग्रहस्त्रीप्रसक्त्यादिभिरविरतपङ्क्तिगा एव। विश्वामित्रेण ब्रह्मर्षिरित्यकथनोत्पन्नक्रोधेन वशिष्ठस्यारुन्धतीकलत्रपुत्रा हताः, एवं सोऽपि कामाकुलः। पाराशरः स्मरविह्वलो दिवाऽपि धूमरीं विकुर्व्य (विकृत्य) मत्स्यगन्धां मात्स्यिकपुत्रीं सिषेवे। इत्यादि सर्वं परग्रन्थाज्ज्ञेयं। अन्यतिर्यङ्नरा अपि केचिद्द्रव्यतो देशसर्वविरतिभावेऽपि अविरता एव। नारका अपि क्रोधाध्माततया वैक्रियशक्त्या विकुर्वित (विकृत) प्रहरणवज्रतुण्डादिभिः परस्परं महावेदनामुत्पादयन्ति इत्यविरतपङ्क्तावेव। एवं चराचरजीवा बहवः प्रत्याख्यानरहिताः।

अथ द्वितीयपङ्क्तिरविरतसम्यग्दृष्टीनां ज्ञेया। श्रेणिकसत्यकिवासुदेवादयः कियन्तो मनुष्या देवनारकाणामसंख्याततमो भागः तिरश्चां चानन्ततमश्चमेऽव्रतिनः सन्ति, तथापि मिथ्यात्वदोषगतत्वेन पूर्वभेदाम्दतिश्रेष्ठाः। केचिद्देवाः सुदर्शनिनोऽत्र भेदेऽवतरन्ति, तथापि पूर्वोक्तजीवेभ्यः स्वल्पा एवेति।

अथास्या अप्यसङ्ख्याततमो भागो विरताविरताख्यदेशविरतिमयी तृतीया पङ्क्तिः । तस्यां हि कियन्तो मनुष्या गर्भजपञ्चेन्द्रियतिरश्चामसङ्ख्याततमो भागः सङ्ख्यातास्तिर्यञ्चश्चण्डकौशिकशमलिकामृगवनभूतजीवगजादिवत् जातिस्मृत्यादिना प्राप्तश्राद्धधर्माणः, नेतरे । सर्वेऽपि मिलिताः "संमत्तदेसविरया पलियस्स असंखभागमित्ताय" इतिवचनात्पल्योपमासङ्ख्याततमभागे यावन्तः समयास्तद्राशिप्रमाणा लभ्यन्ते ।

तस्या अप्यसङ्ख्याततमो भागः सर्वविरतिमनुष्यमयी चतुर्थी पङ्क्तिः । उत्कर्षतोऽपि पञ्चदशकर्मभूमिषु कोटिसहस्रपृथक्त्वमितानामेव यतीनां प्राप्यमाणत्वात् ।

अत्र च प्रथमां पङ्क्तिं विनाऽग्रेतन्यस्तिस्रोऽपि पङ्क्तयोऽल्पतमा एव, क्रमाच्चाल्पतमा दुर्लभाश्च । सम्यक्त्ववन्तो जीवाश्चतसृष्वपि गतिषु लभ्यन्ते । देशविरतिवन्तस्तु द्वयोस्तिर्यङ्नरयोर्गत्योः प्राप्यन्ते । सर्वविरतिस्तु नरगतावेवेति ॥

वाणीमिमां भागवतीं निशम्य, कुर्वन्तु भव्या विरतौ प्रयत्नम् ।
लोकोत्तरां सिद्धिगतिं हि तेन, धन्या लभन्ते द्रुतमक्षयां ताम् ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ
चतुर्दशस्तम्भे २०३ व्याख्यानम् ॥

## ॥ व्याख्यानं ॥ २०४ ॥

अथ व्रतं गृहीतं जीवभेदेन चतुर्धा परिणमतीत्याह—

शालिकणसंबन्धोऽत्र धार्यो व्रताभिलाषिभिः । भवेज्जीवविशेषेण चतुर्धा व्रतविस्तरः ॥ १ ॥

स्पष्टः । भावार्थस्तु वक्ष्यमाणदृष्टान्ततो ज्ञेयः—जम्बूद्वीपे भरतक्षेत्रे मगधाभिधो देशः । तत्र राजगृहं पुरं । तस्मिन् पुरेऽस्ति धनाभिधः श्रेष्ठी । तस्य धारिणीति सुरूपा प्रिया । तस्याः कुक्षिसमुत्पन्नाश्चत्वारः पुत्रा धनपाल १ धनदेव २ धनगोप ३ धनरक्षित ४ नामानः ते यौवनं प्रापुः । तत्रैव स धनस्तान् महेभ्यानां कन्याभिः सह पर्यणाययत् । प्रथमा उज्झिकाख्या १, द्वितीया भक्षिका २, तृतीया रक्षिका ३, चतुर्थी रोहिणी च ४ । ताभिः समं सुखं सेवमानास्ते गतं कालं देवा इव न जानन्ति । अन्यदा श्रेष्ठी निशान्ते धर्मध्यानमाधाय गृहचिन्तां चकार—"एतासां वधूनां मध्ये का मम गृहनिर्वाहं करिष्यति ? अतः परीक्षां करिष्ये" । ततः प्रातःकृत्यं विधाय भोजनानन्तरं बान्धवपुत्रादीनां समक्षं सर्वासां वधूनां आकार्य पञ्च पञ्च शालिकणानखण्डितान् समार्पयत् । आद्या सा मन्दधीर्विजने गत्वाऽचिन्तयत्— "अयं श्वशुरो विपरीतधीरभूत्, यत्स्वजनसमक्षं पञ्च शालिकणान्मे पाणावार्पयत्, त्यजामि, एतैः किं प्रयोजनं ? यदा याचिष्यति तदाऽपरानर्पयिष्यामि" इति विचिन्त्य त्यक्तवती । द्वितीया चिन्तयति— "श्वशुरदत्तानेतान् किमर्थं त्यजामि, अतो भुञ्जे इमान् यदा याचिष्यति श्वशुरस्तदाऽन्यान् समर्पयि-

ष्यामि"। तृतीयया चिन्तितं—"श्वशुरस्य कणानां किमपि प्रयोजनं भविष्यति, ततो रक्षाम्येतान्" इति विचिन्त्य तया कणा आभरणसमुद्गके गोपिताः, प्रत्यहं वीक्षते। चतुर्थी विजने गत्वाऽचिन्तयद्बुद्धिशालिनी—"मम श्वशुरो वाचस्पतिसमानः सर्वजनसमक्षं पञ्च शालिकणान् कारणविशेषेणैव प्रदत्तवान्, अत इमान् वर्धयामि"। तयैवं हृद्यनुध्याय प्रेषितास्ते पितुर्गृहे, भ्रातॄणां चादिष्टं—"निजकणा इवेमे कणाः सुक्षेत्रे वप्याः"। तस्या गिरा बन्धुभिस्तथा कृतं, घनागमे प्राप्ते ते पञ्च कणा उप्ताः। ततः—

स्तम्बीभूय गता वृद्धिं शालयः कणशालिनः। प्रस्थस्तेषामभूदेकः प्रथमे वत्सरे ततः ॥ १ ॥
द्वितीये त्वाढकोऽनेके द्रोणा वर्षे तृतीयके। खारिशतानि तुर्ये तु पल्यलक्षाणि पञ्चमे ॥ २ ॥

अथान्यस्मिन् दिने श्रेष्ठी स्वजनान्निमन्त्र्य पूर्वरीत्या वधूः समाहूयादौ ज्येष्ठामर्थयते स्म—"वत्से! मम शालिकणानर्पय पञ्च"। तदाकर्ण्य तया गृहमध्यादानीय समर्पिताः पञ्च कणाः। तान् दृष्ट्वाऽवोचत्—"वत्से! नैते प्राग्दत्तशालयः"। तया प्रोचे—"तात! ते प्रोज्झिताः"। तच्छ्रुत्वा रुष्टः श्रेष्ठी जजल्प सर्वसमक्षं—"अनया पापयाऽयुक्तं कृतं, यन्मे दत्तास्त्यक्ताः, तस्मादस्यास्त्यागसंभवं छगणादिपरित्यागकर्म भवतु"। ततो द्वितीया याचिता—"वत्से! तान् कणानर्पय ममेदानीं"। तयोचे—"भक्षिता मया"। ततः श्रेष्ठिनोचे—"पचनादिष्वेषा भवतु"। तृतीयां याचते स्म। तयाऽऽनीयोचे—"गृह्यंतां गुप्ताः कृता इयन्ति दिनानि"। ततः सा कोशरक्षणे कृता। चतुर्थी याचिता। तयोचे—"शकटान्यर्पय, यत आनीयन्ते"।

श्रेष्ठिनोचे—"कस्मात् ?" । तयोचे—"मद्वन्धुभिस्ते बहवो निष्पादिताः सन्ति" । ततः श्रेष्ठिना तथा कृतं। तयाऽऽनाय्यार्पिताः श्रेष्ठिनं सर्वसमक्षं। ततः श्रेष्ठिना गृहस्वामिनी चक्रे, प्रोक्तं च सर्वेषां—"योऽस्या आज्ञां खण्डयिष्यति तेन मे न प्रयोजनं" । सर्वैरपि तद्वचः स्वीचक्रे । ततो निश्चिन्तः सन् स्वधर्मकर्मणि सावधानोऽभूत् । हे शैक्षकाः ! भावार्थं शृणुत–यथा राजगृहं तथा मानुष्यं । यथा धनस्तथा गुरुः । यथा वध्वस्तथा विनेयाः । ततो ये पञ्च शालिकणास्ते पञ्चमहाव्रतानि । यथा स्वजनवर्गस्तथा चतुर्विधः सङ्घः । दानं शालिकणानां यत्तन्महाव्रतारोपणं । य उज्झिकासमो महाव्रतं प्राप्योज्झति सोऽत्र परत्र च दुःखी स्यात् । यथा द्वितीया तथाऽऽजीविकामात्रार्थं तपस्या न विधेया । यथा तृतीयया रक्षिकया रक्षितास्तद्वद्रक्षणीयान्यतिचारेभ्यः, रोहिणीवच्च वृद्धिं नेयानि पञ्च महाव्रतानि यथा तया कणास्तथेति । व्रतदृष्टान्ताः–कण्डरीकादिवत् १, जमकार्षिवत् २, आधुनिकवेषधारिवत् ३, मनकवाल्मर्षिवत् ४, गौतमादिवत् ५ । एते सम्बन्धस्वामिनः । इत्थं योजना कार्या ॥

शालिकणसंवन्धोऽयं षष्ठाङ्गे गदितो जिनैः । ध्यात्वा व्रते तथा कार्यं उपनयोऽस्य मानसे ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ
चतुर्थस्तम्भे २०४ व्याख्यानम् ॥

अथान्त्यक्रियामाह—

देशनां विविधां दत्त्वा निजायुः प्रान्तदेशके । पुण्यक्षेत्रे जिनाः सर्वे कुर्वन्त्यनशनादिकम् ॥ १ ॥

स्पष्टः । अनशनमाहारादित्यागः । आदिशब्दादन्त्यध्यानस्यान्त्यौ द्वौ नेदौ ध्यायन्ति । तथाहि— सूक्ष्मक्रियानिवृत्तिकं तृतीयं शुक्लध्यानं योगनिरोधनिमित्तं ध्यायेत् । छद्मस्थस्य यथा ध्यानेन मनसः स्थैर्य- मुच्यते तथैव ( एतध्ध्यानेन ) वपुषः स्थैर्यं, इदं ध्यानं केवलिनो नवेत् । तत्र पर्याप्तसंज्ञिजीवस्य तत्का- लप्राप्तपर्याप्तेस्तत्समयवर्तिजघन्यमनोयोगो यावन्मितः स्यात्तस्यासङ्ख्येयनागमितं समये समये रुन्धन् सन्न- सङ्ख्यातसमयैः सर्वमनोयोगं रुणद्धि । तथा पर्याप्तद्वीन्द्रियस्य यावन्मितो जघन्यवचनयोगः स्यात्तस्या- सङ्ख्येयतमं नागं समये समये रुन्धन् सन्नसङ्ख्यातसमयैः सर्ववचनयोगं रुणद्धि । तथा सूक्ष्मपनकस्याद्य- समयोत्पन्नस्य जघन्यकाययोगो यावन्मितः स्यात्तस्यासङ्ख्याततमनागरूपं समये समये रुन्धन् देहस्य तृतीयनागं मुञ्चन्नसङ्ख्यातसमयैः सर्वकाययोगं रुणद्धि । एवं चरमध्यानतृतीयनेदमध्ये योगनिरोधं कृत्वा केवलिनो ह्रस्वाक्षरपञ्चकोच्चिरणमात्रायुषः शैलवन्निश्चलकायस्य चतुर्थध्यानपरिणतिरूपं शैलेशीकरणं नवति, अयोगिगुणस्थाने समुच्छिन्नक्रियात्मकं चतुर्थं ध्यानं स्यात्, यत्र ध्याने सूक्ष्मकाययोगक्रियाऽपि समु- च्छिन्ना । चरमगुणस्थानान्त्यसमयद्वयादर्वाक् पञ्चाशीतिप्रकृतिसत्ताक उपान्त्यसमये त्रयोदशप्रकृतिसत्ता-

कोऽन्त्यसमयेऽसत्ताको निष्कर्मा तस्मिन्नेव समये लोकान्तं गच्छतीति । अस्पृशन्त्या गत्या एकसमयादधिकं समयमस्पृशन् सिद्धिं गच्छति । अत्र शिष्यः प्राह—ननु निष्कर्मणः सिद्धस्य कथं लोकान्तं यावद्गतिर्भवति ? । अत्र गुरुः प्राह—पूर्वप्रयोगतः, अचिन्त्यात्मवीर्येणोपान्त्यसमयद्वये पञ्चाशीतिकर्मप्रकृतिक्षपणाय पूर्वं यः प्रयुक्तः प्रयोगो व्यापारः प्रयत्न इति यावत् तस्मात् । अत्र दृष्टान्तमाह—यथा कुलालचक्रं दोला इषुर्गोफणमुक्तगोलकश्च, इत्यादीनां यथा पूर्वप्रयोगतो गतिः सिद्धा तथाऽत्रापि १ । अथवा कर्मसङ्गाभावात्, यथाऽष्टमृल्लेपनिर्मोक्षादिनाऽलाबुनस्तुम्बस्योर्ध्वगतिर्दृष्टा तथा कर्मलेपसङ्गनिर्मोक्षात्सिद्धानामूर्ध्वगतिः स्मृतेति २ । अथवा बन्धविमोक्षात्, यथा एरण्डफलबीजादेर्बन्धविच्छेदादूर्ध्वगतिर्भवेत्तथा कर्मबन्धनच्छेदात्सिद्धस्याप्यूर्ध्वगतिः स्यात् ३ । अथवा स्वभावपरिणामात्, यत उक्तं—

यथाऽधस्तिर्यगूर्ध्वं च लोष्ठवाय्वग्निवीचयः । स्वभावतः प्रवर्तन्ते तथोर्ध्वगतिरात्मनः ॥ १ ॥

इति प्रसङ्गात् । अथ सिद्धानां चलननिषेधमाह—

न चाधो गौरवाभावान्न तिर्यक् प्रेरकं विना । न च धर्मास्तिकायस्याभावाल्लोकोपरि व्रजेत् ॥ १ ॥

सिद्धात्माऽधस्तान्न गच्छति, कर्मभाराभावात् इत्यादि स्पष्टं । अथ सिद्धिगमनं यथा स्यात्तथाऽऽह—

तत्रापि गच्छतः सिद्धिं संयतस्य महात्मनः । सर्वैरङ्गैर्विनिर्याति चेतनस्तनुपञ्जरात् ॥ १ ॥

स्पष्टः । यथा स्थानाङ्गे पञ्चमस्थाने—"पंचविहे जीवस्स निज्जाणमग्गए । तं जहा—पाएहिं १ ऊरूहिं २ उरेणं ३ सिरेण ४ सव्वंगेहिं ५ । पाएहिं निज्जायमाणे निरयगामि भवंति । ऊरूहिं निज्जायमाणे तिरिय

गामि नवंति । उरेणं निज्जायमाणे मणुअगामि नवंति । सिरेणं निज्जायमाणे देवगामि नवंति । सव्वंगेहिं निज्जायमाणे सिद्धिगइपज्जवसाणे पण्णत्ते" इति । अथ जिननिर्वाणप्राप्त्यनन्तरं देवकृत्यमाह—

अवधिना प्रनोर्मोक्षं विज्ञाय विधिपूर्वकम् । इन्द्रा नक्त्या वितन्वन्ति मोक्षकल्याणकोत्सवम् ॥ १ ॥

स्पष्टः । अत्रेयं नावना—यदासनकम्पाज्ज्ञानेनार्हन्निर्वृतिं ज्ञात्वा एवं विषादिनो वदन्ति (इन्द्राः)—"हा ! हा ! जगन्नाथो निर्वृतः, ततोऽस्मान्निर्वृतं तदुत्सवः कार्यः"। इत्युक्त्वा पादुके त्यक्त्वा पूर्ववत् तत्रस्था एव वन्दन्ते नावतः । यतः—

निर्जीवाण्यपि वन्दन्ते वपूंषीन्द्रा यदर्हताम् । सदर्हद्द्रव्यनिक्षेपो वन्द्यः सम्यग्दृशामिति ॥ १ ॥

ततस्ते सपरिकरा अर्हतां निर्वाणस्थानमेत्याश्रुपूर्णनेत्रा विषादिनो निरुत्साहा मुहुर्मुहुः शोचन्तस्तिस्रः प्रदक्षिणाः कृत्वा नगवन्तं नत्वा प्राहुः—"हे नाथ ! धर्मनृत्यानस्मान् पूर्ववत्कुतो नेक्षसे ? अकाण्डे इदं किमारब्धं ? निरागसामस्माकं त्यागो नार्हः, नवादृशां विश्वेशानां किमात्मम्नरिता घटते ? यदस्मान् विहायानन्तं सुखं नुज्यते । हे नाथ ! इदं रम्यं क्षेत्रं त्वया विना निश्र्यस्तदीपगृहवज्ञतादित्यान्तरिक्षवच्च नासते । हे स्वामिन् ! यद्यपि त्वमनन्तसुखनागन्नूः तथाप्येवं स्वार्थे केवलं विशोचामो वयं"। एवं विलप्य शक्र आनियोगिकैर्देवैर्नन्दनवनाद्गोशीर्षचन्दनैधांसि बहूनि आहारयेत् । ततः सेवकसुरैरानीतचन्दनौघैश्चितात्रयं अर्हतां गणिनां साधूनां च कारयेत् । तत्र प्राच्यां नगवतश्चिता वर्तुला स्यात्, याम्यां गणनृतां त्र्यस्रा, यतीनां च प्रतीच्यां चतुरस्रा नवेत् । ततो वज्रनृत् क्षीरार्णवानीतैः क्षीरैर्नगवतस्तनुं

स्नपयित्वा चन्दनेनानुलिप्य हंसलक्षणपटशाटकं परिधाप्य सर्वालङ्कारभूषितां कुरुते। अन्ये देवा गणभृद्वपूंषि अपरे च मुनिदेहान् स्नपयन्ति पूजयन्ति च। अथेन्द्रवचसा तिस्रः शिबिकाः सुराः कुर्वते। तत्रैकस्यां शक्रो जिनदेहं स्वयं स्थापयति। गणिनां मुनीनां चान्ये देवाः शेषशिबिकाद्वये स्थापयन्ति। ततः शक्रः सुराश्चापि शिबिकाः स्कन्धमारोप्य क्रमेण चितात्रये मुञ्चन्ति समहोत्सवं। ततः शक्राज्ञया वह्निकुमाराः साश्रुलोचना अग्निं क्षिपन्ति तासु मध्ये। ततो वायुकुमाराः स्वपतेर्गिरा द्रुतमग्निमुज्ज्वालयन्ति। अन्ये देवा इन्द्रवचसा मधुघृतानां कुम्भान् वह्निदीप्तये जुहुयुः। ततोऽग्निनाऽस्थिशेषेषु संस्कृतेषु मेघकुमारा इन्द्राज्ञया क्षीरोदादिनीरैः क्षीरकष्टैस्ताश्चिता निर्वापयन्ति। ततश्च वज्रभृद्याम्यामूर्ध्वस्थां जिनदाढां (दंष्ट्रां) गृह्णाति, चमरेन्द्रोऽधस्तनीं तां, तत्तद्दिगधिपतित्वात्, ततो वामामुपरिगां दाढां शूलभृद्गृह्णाति, बलीन्द्रश्चाधस्तनीं तां। शेषाः सुराः शेषास्थीनि गृह्णन्ति केचिज्जीतमिति कृत्वा केचिद्भक्त्या च। एतन्माहात्म्यं चेदं—नव्योत्पन्नतया सौधर्मेशानशक्रयोर्विमानार्थं विवादोऽभूत्, तत्र महद्युद्धं स्यात्, तन्निवारणार्थं जिनदंष्ट्राभिषेकजलं कार्यं, तेन छटाः क्रियन्ते, तेन शान्तिः स्यात्। तथा चिताभस्मापि विद्याधरादयो गृह्णन्ति, सर्वोपद्रवनिवारणौषधत्वात्। अहंपूर्विकया नरैस्तद्ग्रहणेन गर्ताऽखातैव स्यात्। ततोऽर्हतां चितास्थानेऽपरलोकांह्रिस्पर्शादाशातना मा भूत् अथवा तेन तीर्थस्य प्रवृत्तिर्भवतादिति बुध्ध्या चैत्यस्तूपं शक्रः कारयति, गणिनां च मुनीनां च चितास्थानकयोरपीन्द्रः स्तूपौ कारयति। एवं चतुर्विधा देवा निर्वाणोत्सवं कृत्वा ततो नन्दीश्वरेऽष्टाह्निकोत्सवं विधाय स्वस्वलोकेषु यान्ति। ततः

सुधर्मासभावर्तिमाणवकचैत्यस्तम्भावलम्बिषु समुद्गकेषु तानि दंष्ट्रादीन्यभ्यर्च्य मुञ्चन्ति, चैत्यदैवतवत्तानि नित्यमाराधयन्ति । तत्सभायां तेषामाशातनाभिया कामक्रीडां न कुर्वन्ति इति ।

अथ सिद्धानां सौख्यमाह—

न तत्सुखं मनुष्याणां देवानामपि नैव तत् । यत्सुखं सिद्धजीवानां प्राप्तानां पदमव्ययम् ॥ १ ॥
सुखस्य तस्य माधुर्यं कलयन्नपि केवली । वक्तुं शक्नोति नो जग्धे गुडादौ मूकदेहिवत् ॥ २ ॥
सिद्धा बुद्धा गताः पारं परं पारंगता अपि । सर्वामनागतामद्धां तिष्ठन्ति सुखलीलया ॥ ३ ॥

स्पष्टाः ।

अरूपा अपि प्राप्तरूपप्रकर्षा, अनङ्गाः स्वयं ये त्वनङ्गप्रमुक्ताः ।
अनन्ताक्षराश्चोज्झिताशेषवर्णाः, स्तुमस्तान् वचोऽगोचरान् सिद्धजीवान् ॥ १ ॥

॥ इत्यब्ददिनपरिमितहितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रंथस्य वृत्तौ
चतुर्दशस्तंभे व्याख्यानम् ॥ २०५ ॥

॥ व्याख्यानम् ॥ २०६ ॥

अथ कालस्वरूपमाह—

अवसर्पिण्युत्सर्पिण्योः स्वरूपं जिननायकैः । यथा प्रोक्तं तथा वाच्यं भव्यानां पुरतो मुदा ॥ १ ॥

स्पष्टः । तयोः स्वरूपं त्विदं—ताभ्यां द्वाभ्यां मिलिताभ्यामेकं कालचक्रं स्यात् । एकस्मिन् कालचक्रे द्वादशारका भवन्ति । तेषु प्रथमस्यारकस्यादौ पृथिवी प्राक्प्रवृत्तसमयचक्रैकादशारकप्रान्ते पृथक् पृथक् सप्त सप्त वासरान् विषादिमेघवर्षणेन तृणान्नरसौषधविशेषा न भवति । नरा अपि प्रथमारकादौ रथमार्गविस्तार ( स्तृत ) बहुलमत्स्याकुलगङ्गासिन्धुनदीतटयोर्नवनवमितेषु बिलेषु वैताढ्योभयपार्श्ववर्तिषु प्रभूतरोगाकुलद्विसप्ततिस्थानेषु निवासिनः संभवेयुः । ते च मांसाहारेण प्रायो दुर्गतिगामिनो निस्त्रपा निर्वाससो दुर्वाक्या विगतकुलधर्माणः क्रूरकर्माणः षोडशवत्सरायुषो हस्तप्रमाणदेहा भवन्ति । स्त्रियोऽपि षड्वर्षा गर्भधारिण्यो बहुपुत्रा दुःप्रसवाः स्युः । ते नराः शनैः शनैर्बिलादिभ्यो निःसरन्ति । एवं गच्छति काले आद्यारकस्यान्ते पुष्कररसक्षीररसघृतरसामृतरसाख्याश्चत्वारो मेघाः पृथक् पृथक् सप्त सप्त दिनानि वर्षन्ति, तेन धरा सर्वधान्यादिमयी सरसा च भवेत् । शनैः शनैर्नराणां देहायूंषि प्रवर्धन्ते तावद्यावदाद्यारकप्रान्ते तेषां वपूंषि द्विहस्तमितानि संभवेयुः । आयूंषि पुनर्नख[2]मितसमाः । एवमेकविंशतिसहस्रवर्षप्रमाणे दुःषमदुःषमाख्ये आद्यारके समतिक्रान्ते द्वितीयारकः प्रारभ्यते । तत्प्रारम्भे मनुष्याणां वपूंषि द्विहस्तानि तेषां चायूंषि पुनरुत्कर्षतो विंशतिवर्षाणि संभवेयुः । तदनु शनैः शनैस्तेषां देहायुषोः प्रवृद्धिस्तावदुत्कृष्टतः संभवेद्यावत्प्रान्ते तद्वपुषां सप्तहस्तप्रमाणता तदायूंषि च त्रिंशदधिकश-

१ आदिशब्दश्चिन्त्यः । २ विंशतिवर्षाणि ।

तदर्धमितानि । ततो द्वितीयारके जातिस्मराः पुरादिसर्वव्यवस्थाकारिणः सप्त कुलकरा जायन्ते । एवमेकविंशतिसहस्रप्रमाणे दुःषमाख्ये द्वितीयारके व्यतीते तृतीयारकप्रारम्भः स्यात् ।

तस्मिँस्तृतीयारके आद्यो जिनः सप्तहस्तगात्रो द्वासप्ततिवर्षायुरेकोननवतिपक्षेषु तदारकस्य व्यतीतेषु सकलसुरूपातिशयः तपनीयसमानवीरयष्टिः कुण्डग्रामे समुत्पद्यते । एतन्नगराभिधानं वर्तमानचतुर्विंशतिकामाश्रित्य प्रोक्तं, अन्यथा त्वेतस्य नामान्तरमपि भवेत्, यथा दीपालिकल्पे पद्मनाभजिनोत्पत्तिस्थानस्य शतद्वारपुरेत्याख्या, एवमग्रेऽपि वाच्यं । तस्मिन् जिने पञ्चकल्याणकेन मुक्तिं प्राप्ते सति द्वितीयस्तीर्थाधिपतिर्नवहस्ततनुप्रमाणधर्ता नीलवैडूर्यदेहवर्णः शतसंवत्सरायुः प्रथमदेवाधिदेवसमुद्भवक्षणतः समतीते पञ्चाशदधिकहायनशतद्वितये मूर्तिमान्नवमरस इव जायते वाणारस्यां पुर्यां । तस्मिन्नपि प्रवर्तितीर्थे क्रमेणापुनरावृत्तिपदं प्राप्ते सति कियत्यपि काले गते सप्तधनुस्तनुभृत् सप्तशतवर्षायुः सुवर्णदेहः प्रथमश्चक्री समुत्पद्यते काम्पील्यपुरे । तस्मिन् साधितषट्खण्डभरतनवमहानिधिचतुरधिकश्रमणधर्म(१४)-प्रमेयरत्नाधिपे पञ्चविंशतिसहस्रयक्षसंसेव्यमानपार्श्वेऽष्टाविंशतिसहस्राधिकलक्षप्रमेयवाराङ्गनामनोरङ्गविधायके ऋतुसमधिकनवतिकोटि(९६)ग्रामाधिपे व्यतीते सति द्वितीयजिनसमुद्भवक्षणतः सार्धसप्तशताधिकसमय (३) समधिकाशीतिसहस्रप्रमाणवर्ष(८३७५०)व्यपगमे तृतीयस्त्रिकालवित् सहस्रमितशरदायुर्दशसप्तधनुःप्रमाणदेहः श्यामलद्युतिः शौर्यपुरे प्रादुर्जायते । अस्मिँश्च समये प्रथमो वासुदेवश्चक्रसाधितवैता-

१ महावीरवद्देहयष्टिरित्यर्थः ।

ध्यावधित्रिखण्डक्षोणिपीठ उत्पद्यते । स आद्यार्धचक्री प्रतिवासुदेवचक्रेणैव तदन्तकर्ता षोडशसहस्रमितबद्धमुकुटभूपसेव्यपादो गर्भसमुद्भवावस्थजननीदृष्टतरणितुरङ्ग (७) प्रमितस्वप्नोपलम्भसूचितचक्रादिसप्तरत्नाधिपः सहस्रमितशरदायुः पीताम्बरो वैनतेयकेतुः श्यामदेहो यतिसुकृतभेद (१०) मितधनुर्मानसंहननधर्ता स्यात् । तज्ज्येष्ठबन्धुर्बलदेवश्च पाण्डुरदेहो गर्भे वेद (४) प्रमितमहास्वप्नदर्शनसंसूचितो नीलवसनस्तालकेतनो हलमुशलादिशस्त्रभृत् द्वादशशतप्रमितशरज्जीवनः प्रेत्य स्वर्गापवर्गान्यतरगामी अनुजबन्धुना सह परमप्रेमाकुल उत्पद्यते । तस्मिंश्च समये आदिमनारदर्षिर्वहुलकलिप्रियः सुरपथगमनविद्याशाली सर्वज्ञपादिमध्यलब्धपूजासत्कारो दृढशीलः स च संयमेन केवलावबोधेन च तस्मिन्नेव भवे मोक्षगामी संभवेत् । एवं तृतीयजिनवारकें चत्वारो नरा जायन्ते । तस्मिँस्तृतीये जिने संप्राप्ते सत्सुखौघे कियत्यपि समतीतेऽनेहसि कलधौतकान्तिः श्रमणप्रतिमा (१२) प्रमेयधनुःकायः समय (३) सङ्ख्यवर्षसहस्रायुरुत्पद्यते राजगृहे द्वितीयः सार्वभौमः । तस्मिन् प्रथमचक्रितुल्यसमस्तविभवविस्तरे व्यतीते तृतीयप्रभुतः काञ्चनगिरि (मेरु ५) गणितवर्षलक्षेषु गतेषु चतुर्थतीर्थेशो दशशरत्सहस्रमितायुः पञ्चदशधनुःकायः सुवर्णवर्णः मिथिलापुरीं पवित्रीकरोति । अस्मिंश्चावसरे तृतीयचक्री काम्पील्यपुरे जायते । तस्य विभवादि सर्वमादिमचक्रिसमानमेवावगम्यम् । एवमग्रेतनानामपि चक्रिणां वाच्यम् । गतिमाश्रित्यैवं ज्ञेयं—ये परिग्रहासक्ता नरदेवत्वं न मुञ्चन्ति ते नियमेनाधोगतिकाः संभवेयुः, ये पुनर्धर्मदेवत्वं श्रामण्यं चरन्ति ते नियमतः स्वर्गापवर्गान्यतरगतिगामिनः संभवेयुरिति । तस्मिँश्च तुर्ये जिने शिवं प्राप्ते सति कियत्यपि गते

काले द्वितीयप्रतिवासुदेववासुदेवबलदेवनारदर्षयो जायन्ते । तेषां विभवप्रेत्यगत्यादिविचारोऽपि पूर्वव-
द्विज्ञेयः । यतः सर्वेऽप्यर्धचक्रिणः प्राक्तनजन्मार्जितनिदानसुकृतक्रियाप्राप्ततादृग्विभवाः प्रेत्य श्वभ्रे
गच्छन्ति । बलदेवाश्च निदानमृते श्रेयोनिधानसंप्राप्तर्द्धिविस्ताराश्चारित्रेणोर्ध्वगतावेव गच्छन्ति । नारदास्तु
चारित्रशुद्ध्याऽपुनर्भवगामिनः स्युः । तद्द्वितीयार्धचक्रिदेहः षोडशधनुर्मानो द्वादशसहस्रवर्षायुर्मानः ।
बलदेवस्य पुनः पञ्चदशसहस्रवर्षाणां । एतेषु चतुर्षु पुरुषेषु कालधर्मेण कीर्तिशेषेषु जातेषु तुर्य-
जिनाज्जन्तुनिकाय (६) प्रमितवर्षलक्षेषु व्यतीतेषु पञ्चमः परमेष्ठी श्यामद्युतिस्त्रिंशत्संवत्सरसहस्रायुर्विहर-
मानजिन (२०) मितधनुःप्रमाणतनूत्सेधो राजगृहे स्यात् । अस्मिन्नवसरे तुर्यश्चक्री विंशतिधनुस्तनुस्त्रिं-
शद्वत्सरसहस्रायुर्जायते वाणारस्यां । तस्मिंश्च पञ्चमे जिने निर्वृतिपदेशे जाते सति तदुत्पत्तिसमयतः सम-
तीतेषु ध्यानप्रभेदाधिकपञ्चाशद्वर्ष(५४)लक्षेषु ऋतुगणित (६) तीर्थाधिपः पञ्चविंशतिधनुःप्रमाणकायः
समिति (५) समधिकपञ्चाशदब्दसहस्रायुर्मरकतमणिदेहवर्णः मिथिलायां समुत्पद्यते । तस्मिन्नपि पञ्चमा-
ग्रिमतीर्थेशे चतुरनन्तप्राप्ते सति कियत्यपि गते काले तृतीयार्धचक्र्यादिचतुर्नरा जायन्ते । तत्स्वरूपं
प्राग्वद्वाच्यं । नवरं वासुदेवदेहः षड्विंशतिधनुर्मितः आयुर्मानं षट्पञ्चाशद्वत्सरसहस्राणि । रामस्य तु कर-
णगोचरा (५) त्र्यधिकषष्टिसहस्रशरदां । एतेषु चतुर्षु पुरुषेषु व्यतीतेषु कियत्यपि काले गते पञ्चमः सार्व-
भौमो हस्तिनागपुरे समुत्पद्यते । तस्य तनुमानं कर्ममूलप्रकृतिभेदा (८) धिकविंशतिधनूंषि भवन्ति अनू-
चानेशाः । आयुश्च षष्टिसहस्रवर्षाणि । तस्मिन् पञ्चमे सार्वभौमे व्यतीते कियताऽपि कालेन तुरीयबल-

देवादिश्रुति (४) मितनरोत्तमा जायन्ते, तेषां स्वरूपं प्राग्वद्वाच्यं, नवरमर्धचक्रिणो नवाधिकविंशतिधनुर्मानं तनोः, आयुर्मानं तु पञ्चाधिकषष्टि ( ६५ ) वर्षसहस्राणि । हलिनः पुनः श्रमणमहायम ( ५ ) समधिकाशीतिसहस्राणि परिवत्सराणां । एतेषु चतुर्षु गतेषु पञ्चमाग्निमजिनतः सहस्रकोटिप्रमेयशरदां काले गते सुवर्णवर्णः सप्तमस्तीर्थेशोऽवतरति ढिल्यां । अस्मिन्नेव समये तत्रैव पुरे चक्रधरः प्रसूयते । अनयोश्चक्रिजिनेशयोस्तनुमानमत्रसमय (३०) मितधनूंषि वदन्ति । आयुर्मानं चादिदेवश्रमण (८४ सहस्र) मितसंवत्सराणि । अस्मिन् सप्तमे जिने निर्वृतिमुपगते ततस्तीर्थपतितः कोटिसहस्रसंवत्सरन्यूनपल्यतुरीयांशमितकालातिक्रमे सप्तमाग्निमः प्रभुः सुवर्णक्षोणीधर (५) समधिकधनुर्दशत्रिक (३०) समुत्सेधः श्रोतोविषय (५) समधिकनवतिसहस्रवत्सरायुः कलधौतदेहकान्तिः पावयति स्वकीयावतारेण हस्तिनागपुरं । अस्मिन्नवसरे सप्तमश्चक्री तत्रैव पुरे समुत्पद्यते, तत्समयवर्तिजिनसमानदेहायुर्मानं ज्ञेयं । तस्मिंश्चाष्टमप्रभौ मुक्तिमुपगते ततस्तीर्थेशतः पल्योपमार्धप्रमेयसमयव्यतिक्रमे नवमः सर्वदर्शी तत्रैव पुरे प्रसूयते सुवर्णवर्णः । अथ च तस्मिन्नेव समये तत्रैव पुरेऽष्टमचक्री जायते । अनयोश्चत्वारिंशद्धनूंषि वपुर्मानं, आयुश्चानयोर्जिनसार्वभौमयोर्वर्षलक्षमेकमुपवर्णितं । अस्मिंश्च स्याद्वादवादिनि निर्वृतिं प्राप्ते कियत्यपि काले गते नवमः सार्वभौमो हस्तिनागपुरे स्यात् । तच्छरीरं सार्धैकचत्वारिंशद्धनुर्मानं, आयुस्तु समय (३) प्रमेयसंवत्सरलक्षाणि चोक्तं । एतस्मिन्नपि नवमसार्वभौमे कथाशेषतामुपगते कियत्यपि समये गते दशम-

१ महाव्रत ।

श्क्री श्रावस्त्यामुत्पद्यते । तस्य तनुमानं सार्धनयनश्रुति (४२॥) मितधनुर्षं प्रोक्तं, श्रोतःप्रमित (५) लक्ष-वत्सराणि च मानमायुषः । ततस्तस्मिंश्चक्रिणि चरमसमयविषयतां याते दशमः सर्वज्ञः नवमाजिनेशात् पादोनपल्योपमोनराम ( ३ ) प्रमितार्णवोपमे व्यतीते कनकद्युतिः समितिकषाय ( ४५ ) मित धनुस्तनुं दधानः श्रमणधर्म ( १० ) प्रमाणवत्सरलक्षायुः रत्नपुरे जायते । अस्मिन्नेव समये पञ्चमबलदेवादि-प्रधाननराश्चत्वारोऽवतरन्ति । तत्स्वरूपं प्राग्वद्वाच्यं । नवरं वासुदेवस्य आयुस्तनुमानं तत्समय-वर्तिजिनसमानं ज्ञेयं । बलदेवायुस्तु समयप्रभेद ( ३० ) मितलक्षप्रमाणतः स्यात् । तस्मिन्नपि दशमपरमेष्ठिनि निर्वृते धर्मतीर्थे मुक्तिपतिंवरावरत्वमापन्ने सति ततस्त्रिकालविदः श्रुति ( ४ ) मिता-र्णवोपमे गते शातकौम्भनिभतनुशोभः पञ्चाशद्धनुर्देहस्त्रिंशल्लक्षायुरुत्पद्यते एकादशो जिनोऽयोध्यायां । अस्मिंश्च समये षष्ठबलदेवादिवेद (४) मितनरोत्तमा जायन्ते । तत्रार्धचक्रिणो देहायुःप्रमाणं तत्समय-जिनसदृक्षं । बलदेवायुस्तु पञ्चपञ्चाशल्लक्षमितं स्यात् । एतस्मिन्नपि तीर्थपतौ निखिलनिजात्मस्वरूपे संपन्ने सति नन्द (९) मितार्णवोपमसमयातिक्रमे द्वादशो बोधिदः षष्टिधनुःप्रमाणदेहोत्सेधः षष्टिहायनलक्षायुः काम्पील्यपुरमात्मीयावतारेण भूषयेत् । तस्मिन्नेव समये सप्तमरामप्रभृतिपुरुषपुङ्गवचतुष्कमुत्पद्यते । तत्स्वरूपं प्राग्वदवसेयं । नवरं सप्तमार्धचक्रिदेहायुर्मानं तत्सामयिकजिनसमं । बलभद्रायुस्तु विषयभेदा (५) न्यधिकषष्टिवर्षलक्षाणि ज्ञेयं । अस्मिन्नपि जिने चतुरनन्तमयतां प्राप्ते सति त्रिंशदतरसमये गते त्रयोदशः पुरुषोत्तमः सुरपथर्षिसङ्ख्य (७०) धनुर्देहो नेत्रभानुतुरग (७२) मितवर्षलक्षायुः सुवर्णवर्णः

सुषमासमाश्लिष्टदेहयष्टिश्चम्पायामुत्पद्यते । तस्मिन्नेवानेहसि श्रुति (४) गणिता भवन्ति बलदेवादि-
पुरुषवराः । तत्र वासुदेवायुस्तनुमाने तत्कालीनजिनसमाने गम्ये । तस्याग्रजायुस्तु पञ्चसप्ततिमितवर्ष-
लक्षप्रमाणमुदाहरन्ति । अस्मिन्नपि जिने महानन्दमहाशर्मसमूहदीर्घिकासलिलसकलकालखेलनशक्ति-
प्रसक्ते संजाते सति चतुष्पञ्चाशत्सागरप्रमेयसमयव्यतिक्रान्तौ चतुर्दशो देवेशः सप्तार्चिस्तापोत्तारितजा-
तरूपप्रभाहासकारिनिजशरीरशोभश्चतुरशीतिवर्षलक्षायुरशीतिधनुर्मानदेहः सिंहपुरपौरान् प्रमोदयति ।
अस्मिंश्चावसरे नवमबलदेवादिचतुर्नराः श्रेष्ठा उत्पद्यन्ते । तत्रार्धचक्रिणो देहायुषी तत्कालिनजिनसमाने ।
तस्याग्रजायुः पञ्चाशीतिवर्षलक्षमानं ज्ञेयं । तस्मिन्नपि पारंगते निर्वृतिनवोढागाढसमालिङ्गनसमुद्भूतनूत-
नाननुभूतपूर्वरम्यतमसुखवितानसमयतां संप्राप्ते सति ततस्तीर्थेशितुः षड्विंशतिसहस्राण्यधिकर्तुनयन (६६)
मितशरल्लक्षसमधिकसागरोपमशतन्यूनैककोटिप्रमितार्णवोपमसमये गते पञ्चदशो जिनेशः शरदेकपूर्वलक्षा-
युर्नवतिधनुर्देहः कलधौतवर्णः भद्दिलपुरेऽवतरति । तस्मिन्नपि षड्विधजीवनिकायपालके शिवं प्राप्ते तस्मा-
द्वीतरागतो नवकोटिसागरोपमेषु गतेषु षोडशस्तीर्थेशश्चन्द्रवर्णः शतधनुर्देहः स्मरहरिणनयना (२) प्रमेय-
पूर्वलक्षायुः काकन्दीनगर्यामुत्पद्यते । अस्मिन्नपि बोधिदे मुक्तिं गते तस्मात्तीर्थपतेर्नवतिकोटिसागरोपमेषु
गतेषु सप्तदशस्तीर्थेशो दशपूर्वलक्षायुः सार्धशतधनुर्मितमूर्तिमानश्चन्द्राननपुर्यां समुत्पद्यते । अस्मिन्नपि
प्रवर्तिततीर्थे सकलकर्ममलसमूलप्रोन्मूलनसमासादितमहानन्दपदे तद्देवाधिदेवसमुद्भवक्षणतः समतीतेषु
नवकोटिशतमितार्णवोपमेषु जिनेशोऽष्टादशो विंशतिपूर्वलक्षायुर्धनुर्द्विशतीप्रमाणमूर्तिः कनकवर्णो वाणा-

रस्यामुत्पद्यते। अस्मिन्नपि जिनेशे प्रद्योतन इव प्रदर्शितयथास्थितशिवायतने प्राप्तशिवशर्मणि सति नन्द (९) मितार्णवोपमकोटिसहस्रप्रमाणानेहसि अतीते एकोनविंशस्तीर्थेशः सार्धधनुःशतद्वयप्रमेयकायोत्सेधस्त्रिंशत्पूर्वलक्षायुः कौशाम्ब्यां जायते। अस्मिन्नपि प्रबोधितसकलकुवलये लब्धसिद्धिसौधसौख्ये नवतिकोटिसहस्रसागरोपमसमयान्तरितस्तीर्थकृद्विंशतितमस्त्रिशतधनुर्देहभृच्चत्वारिंशत्पूर्वलक्षायुर्जातरूपकान्तिर्जगद्वत्सलः कोशलापुरीं पवित्रयति। अस्मिन्नपि त्रिकालविदि केवलालोकप्रकाशितसमस्तमूर्तामूर्तभेदपदार्थसार्थे निर्वृतिपुरीपतित्वमापन्ने सति नवलक्षार्णवकोटिप्रमाणसमयापगमे जिनेश एकविंशतितमस्तमस्तोमविध्वंसनसूर्यरूपः सार्धशतत्रयसङ्ख्येयधनुःप्रमाणकायः पञ्चाशत्पूर्वलक्षायुर्विनितायां महत्तमनरनाथकुले संपद्यते। अस्मिन्नपि जिने रत्नत्रयवितरणकृतानेकभव्यप्राणिसुखे सिद्धत्वं निष्पन्ने सति दशलक्षार्णवकोटिप्रमाणकालातिक्रमे द्वाविंशस्तीर्थपतिर्धनुश्चतुःशतमितमूर्तिः षष्टिपूर्वलक्षायुः सुवर्णदेहभृत् श्रावस्त्यामुत्पद्यते। अस्मिन्नपि प्रभौ व्यवच्छिन्नमृत्युजन्मनि संजाते सति तस्मादर्हतः समतिक्रान्ते त्रिंशल्लक्षार्णवकोटिप्रमाणसमये त्रयोविंशो जिनेश्वरः सार्धचतुःशतीप्रमिततनूत्सेधभृत् नयनतुरग (७२) मितपूर्वलक्षायुर्जाम्बूनददेहकान्तिरयोध्यायां जायते। तस्मिन्नेव समये एकादशः सार्वभौमस्तस्यामेव नगर्यामवतरति। तस्य देहायुर्मानं जिनसमानं ज्ञेयं। अस्मिन्नप्यजितजिनसदृशि जिने निरस्तसमस्तभवप्रपञ्चे सति एतस्य तीर्थाधिपतेरुत्पत्तिसमयतः समतीते पञ्चाशल्लक्षार्णवोपमकोटिप्रमाणसमये दुःषमसुषमाख्यस्तृ-

१ सूर्ये।

तीयारकः समाप्यते । अस्मिंश्चारके त्रयोविंशतिर्जिना एकादश चक्रिणः षट्त्रिंशत्प्रतिवासुदेवाद्या (नवनारदसहिताः) एवं सप्ततिर्नरोत्तमा उत्सर्पिण्याख्यकालचक्रदले संजायन्ते । अस्यारकस्य प्रारम्भे त्रिंशदधिकवर्षशतमायुर्मानं नराणां, तदनु च तावत्प्रवर्धते यावदेका पूर्वकोटिर्वत्सराणां परिपूर्णा । अस्यारकस्य द्विचत्वारिंशत्सहस्रवर्षन्यूनकोटिकोटिसागराणां प्रमाणं प्रोक्तं पूज्यैः ॥

दुषमसुषमाख्यायां त्रयोविंशतितीर्थपाः । उत्सर्पिण्यां भविष्यन्ति सन्तु लक्ष्मीप्रदाः सदा ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ चतुर्दशस्तम्भे २०६ व्याख्यानम् ॥

---

## व्याख्यानं ॥ २०७ ॥

अथ भावितुर्यारकस्वरूपमाह—

सुषमदुषमासंज्ञस्तुर्यारको निगद्यते । नाभेयसन्निभो भावी चतुर्विंशतमो जिनः ॥ १ ॥

स्पष्टः । अत्रेयं भावना–अस्यारकस्य सार्धदिक्करीन्द्र (८॥) मितमाससमधिकसमय (३) प्रमितसमासमतिक्रमे चतुर्विंशतितमो धर्मचक्री धनुःपञ्चशतीमूर्तिमान् चतुरशीतिलक्षपूर्वायुः सुवर्णवर्णस्त्रिजगज्जनसमाजपूर्वमहनीयो विनीतापुरीमलङ्करोति । एतस्य जिनस्य वारके द्वादशश्चक्री जिनसमानदेहायुर्भृ-

ज्ञायते । [1]अस्मिन्नपि जिनवरे मुक्तिपतिंवरावरे संजाते सति तत्पट्टपरम्परया सकलश्रीमज्जिनप्रवचनविचारलब्धवर्णा श्रीमद्युगप्रधानसंततिः प्रभूतसमयं यावत् पावयति भरतवर्षावनिमण्डलं । अथ शनैः शनैः प्रवर्धमानसमयसारस्य युगलजमनुजसमुद्भवसमयस्य समासन्नीभूतत्वेन सुखप्राचुर्यात्साधुसंततिव्यवच्छित्त्या तीर्थव्युच्छित्तिरपि जायते । युगलनरसमये कृशानुरपि न संभवेत्, स्वामिसेवकवर्णवाणिज्यनगरव्यवस्थापि च न । तेषां युग्मजानां स्वरूपं श्रीप्रश्नव्याकरणाङ्गे तुरीयाश्रवद्वारे "भूयस्यपि भोगे मुक्तिविषयीकृतेऽपि तृप्तिमनाप्नुवन्त एव जन्तवः कालधर्मणा ग्रस्यन्ते" इत्यधिकारे देवकुरूत्तरकुरुसत्कयुगलजनरवर्णनालापकसूत्रं, तथाहि—"भुजो उत्तरकुरुदेवकुरुवणविवरपायचारिणो नरगणा भोगुत्तमा भोगलक्खणधरा पसत्थसोमपरिपुन्नरूवदरिसणिज्जा सुजायसव्वंगसुंदरंगा" इत्यादिः स्वस्थानात् पाठोऽवधार्यः । युग्मजा नरा नार्यश्चाद्यसंहननसंस्थानान्विताश्छायासमुद्योतिताङ्गोपाङ्गप्रदेशाः पद्मश्वासा वरतुरगसुजातगुह्यदेशाः प्रतनुकोपलोभा मणिमौक्तिकादिके तुरङ्गगजादिसद्भावेऽपि च सति तत्परिभोगपराङ्मुखा ज्वरादिग्रहभूतमारिव्यसनविवर्जिता मिथः प्रेष्यप्रेषकत्वाभावादहमिन्द्राः । तत्र क्षेत्रे विस्रसात एव जातिशा-

१ अस्मिन्नित्यादितो भरतवर्षावनिमंडलमितिपर्यन्तः पाठोऽनाभोगेन लिखितो ज्ञायते; यत उत्सर्पिण्यां चरमजिनेश्वरे निर्वृतिं प्राप्ते शासनं व्युच्छिद्यते, यदाह भगवतीसूत्रे विंशतितमशतकस्याष्टम उद्देशके—आगमेस्सीणं चरमतित्थगरस्स केवइयं कालं तित्थे अणुसिज्जस्सइ गोयमा जावईएणं उसभस्स अरहओ कोसलियस्स जिणपरियाए । वृत्त्येकदेशो यथा—जिणपरियाएत्ति केवलिपर्यायः स च वर्षसहस्रन्यूनं पूर्वलक्षम् ॥

ह्यादिधान्यानि तेषां न यान्ति भुक्तये। तत्र क्षेत्रे पृथ्वी शर्करातोऽप्यनन्तगुणमाधुर्या। योऽपि कल्पवृक्षपुष्पफलानामास्वादः स तु सार्वभौमभोज्यतोऽप्यधिकगुणमाधुर्यः। ततः पृथ्वीकल्पसालफलादीनां तथाभूतमाहारमाहार्य प्रासादादिसंस्थाना ये गृहाकाराः कल्पवृक्षास्तेषु यथासुखमवतिष्ठन्ते। तेषां पानाशनप्रेक्षणादि दशप्रकारकल्पसालेभ्यः संभवेत्। न च तत्र दंशयूकामत्कुणमक्षिकाद्या देहोपद्रवकारिणो जायन्ते। न च श्वापदाः हिंस्यहिंसकभावे प्रवर्तन्ते। तत्र क्षेत्रेऽश्वगजादिचतुष्पदा गोधादयो भुजपरिसर्पा उरःपरिसर्पाश्च पन्नगादयश्चकोरमरालादयश्च खगाः सर्वेऽपि युगलिकरूपा एव जायन्ते। एते च सर्वेऽपि युग्मजा जन्तवो निजायुःसमानेषु हीनायुष्केषु वा देवेषूत्पद्यन्ते, नाधिकायुष्केषु। तेषां युग्मजानामेकगव्यूतोत्सेधता देहस्य। आयुष्कं तु एकपल्योपमप्रमाणं ज्ञेयं। चतुर्थातिक्रमे आमलकप्रमाणमाहारं ते कुर्वन्ति। तेषां चतुःषष्टिः पृष्ठकरण्डकाः स्युः। अस्मिंश्चारके ते नरा एकाशीतिदिनान्यपत्यानि पालयन्ति। तदनूच्छ्वसितादिना परित्यक्तप्राणास्ते समुत्पद्यन्ते त्रिदशेषु। एवं तुरीयारके नयन (२) मितसागरकोटिकोटिप्रमाणे समतीते सति सुषमाह्वः पञ्चमारक उत्पद्यते। आरकस्यादौ युगलिनो नरास्तुरीयारकप्रान्तसमयसमुद्भूतयुग्मजनरसमाना भवन्ति। तदनु शनैः शनैः शरीरायूंषि तावद्वर्धन्ते यावद्वपुषां गव्यूतिद्वयप्रमाणता, नयन (२) प्रमेयपल्योपममानता च तदायुषां संपनीपद्यते। एषां पृष्ठकरण्डका अपि प्रवर्धमानास्तावद्वर्धन्ते यावदेकशतमष्टाविंशत्यधिकं। एषां पूर्वाहारोऽपि हीयमानस्तावद्धीयते यावत् षष्ठातिक्रमे बदरप्रमाणाहारभोजित्वं भवति। चतुःषष्टिदिनान्यपत्यपालनं तेषां। एतस्मिन्नपि पञ्चमारके

समय (३) प्रमितसागरकोटिकोटिप्रमाणे गते सति ऋतु (६) मितारकः प्रवर्त्तते । अस्याप्यारकस्य प्रारम्भे युग्मजाः पञ्चमारकपर्यवसानसमयप्रसूतयुग्मजसमाः शरीरोत्सेधादिमन्तो भवन्ति । ततस्तेषां तनुमानमायुःप्रमाणं च तावद्वृद्धिमवाप्नोति यावद्गव्यूतित्रयमानता तत्तनोः, तदीयायुषश्च पल्योपमानि जातवेदः- (३) प्रमितानि । पृष्ठकरण्डकमानं च षट्पञ्चाशदधिकशतद्वयसङ्ख्यं ज्ञेयं । अमीषां पुनरभ्यवहारहानिरपि तावज्जायते यावदष्टमातिक्रमे तुवरिप्रमाणाहारः स्यात् । एकोनपञ्चाशद्वासरानपत्यपालनममीषां । अस्मिन्नारके गजा नरसमानायुषः स्युः । अश्वादीनामायुर्नरायुषस्तुर्यांशेन ज्ञेयं, छागादीनां वसु (८) तमांशः, गोमहिषखरोष्ट्रादीनां पञ्चमांशः, श्वादीनां दशमांशः, भुजोरःपरिसर्पाणामेका पूर्वकोटिः, खचरादीनां पल्योपमासङ्ख्येयभागः । जलचारिणामेका पूर्वकोटिः । एतेषामुत्कृष्टायुर्मानमस्मिन्नेवारके स्यात् । भुजगानां तु गव्यूतपृथक्त्वं शरीरमानं, उरगाणां तु योजनसहस्रं, खेचराणां धनुःपृथक्त्वं, गजादीनां तु ऋतु (६) प्रमितक्रोशाः । आहारग्रहणं तु षष्ठातिक्रमे गजादीनां । एतदुत्कर्षप्राप्तं तनुमानमेतस्मिन्नेवारके मन्तव्यं । शेषेषु च सूत्राज्ज्ञेयं । एवमसौ षष्ठारकः सुषमसुषमाख्यः श्रुति (४) मितसागरोपमकोटिकोटिभिः समाप्यते । एवमेते उत्सर्पिणीकालसत्काः षडारका भवन्ति ।

तथाऽवसर्पिण्यामपि षडेव भवन्ति । नवरं ते वैपरीत्येन वाच्याः । तथाहि—यदुत्सर्पिण्यां षष्ठारके प्रोक्तं तदवसर्पिण्यां प्रथमारके ६–१ । यत्पञ्चमारके तद्द्वितीये ५–२ । यत्तुरीये तत्तृतीये ४–३ । यत्तृतीये तत्तुरीये ३–४ । यद्द्वितीये तत्पञ्चमे २–५ । यत्प्रथमे तत् षष्ठे १–६ । तीर्थंकरादिस्वरूपमपि वैपरीत्येन

ज्ञेयं । तथाहि—उत्सर्पिण्यां यदुक्तं श्रुतिविंशति (२४) तमतीर्थपतौ तदवसर्पिण्यां प्रथमत्रिकालविदो वाच्यं । एवमग्रेतनानामपि वैपरीत्येन ज्ञाव्यं । चक्रधरादीनामप्येवं । एवं मार्तण्ड (१२) प्रमितारकैरेकं कालचक्रं स्यात् । एषा व्यवस्था पञ्चभरतेषु पञ्चैरवतेष्वपि समानैव वाच्या । न तु विदेहेषु, तत्र नोउत्सर्पिण्यऽवसर्पिण्याख्यः कालः सर्वदैव स्यात् । तेषु पञ्चधनुःशतोत्सेधता नराणां पूर्वकोट्यायुष्कं च सर्वदैव भवति । न च स समयस्त्रिंशदकर्मभूमिषु, तास्वपि समयस्य सनातनत्वात् ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रंथस्य वृत्तौ
चतुर्दशस्तम्भे २०७ व्याख्यानम् ॥

## ॥ व्याख्यानम् ॥ २०८ ॥

अथ सम्प्रति दुःषमारकलक्षणं लिख्यते—

वर्तमानारके भाविस्वरूपं ज्ञानिनोदितम् । स्वप्नादिभिः प्रबन्धैश्च विज्ञेयं श्रुतचक्षुषा ॥ १ ॥

स्पष्टः । स्वप्नप्रबन्धस्तु श्रीव्यवहारचूलिकायां प्रोच्यते, तथाहि—तेणं कालेणं तेणं समएणं पाडलिपुरे चन्दगुत्ते राया समणोवासए । अह अन्नया कयाए पक्खियं पोसहं पडिमाजागरमाणस्स तइयाए पोरसीए सुहपसुत्ते उंहिरमाणस्स सोलसएहं सुमिणं दिट्ठं, जाव पडिबुद्धो चिंता समुप्पन्ना, अहाकमेणं उदयं

दिवायरे पोसहं पारित्ता । तेणं कालेणं तेणं समएणं संभूयविजयसीसे जुगप्पहाणे भद्दबाहुणामं अणगारे गामाणुगामं दुइज्जमाणे पंचसमणसयाइं परिवरिए पाडलिपुरवणखंडे समोसरिए । राया निग्गओ जहा कोणिए, पंचविहे अभिगमेणं वंदइ, वंदित्ता धम्मं सोच्चा तओ पच्छा "कप्परुहसाहा भग्गा" इच्चाइसोलसण्हं सुमिणाणं अत्थो पुच्छइ—"हे भयवं ! एए सुमिणाणुसारेण सासणे किं किं भविस्सइ ?" । भद्दबाहु सुयकेवली सव्वसंघसमक्खं भणइ—चंदगुत्तराया ! सुणेह अत्थो, तं जहा—पढमं कप्परुक्खसाहा भग्गा १, तस्स फलं अज्जप्पभिए कोऽवि राया संजमं न गिण्हइ १ । बीअं सूरअत्थमणं २, तस्स फलं केवलनाणं वोच्छिज्जइ २ । तइए चंदस्स छिद्दभूओ ३, तस्स फलं एगे धम्मे अणेगे मग्गे भविस्सइ ३ । चउत्थे भूआ नच्चंति ४, तस्स फलं कुमतजणा भूता इव नच्चंति ४ । पंचमे सुमिणे दुवालसफणसंजुत्तो अही दिट्ठो किन्हो ५, तेण दुवालसवासाइं दुकालो भविस्सइ, कालिअसुअपमुहा सुया वोच्छिज्जइ, चेइअदव्वअपहारिणो मुणिणो भविस्सइं ति, लोहेण मालारोहेणं उवहाणउज्जमणमाइणं बहवो तवभावा पयाइस्संति, तत्थ जे साहु धम्मकंखिणो ते विहिमग्गं उवइस्संति ५ । छट्ठे सुमिणे आगयं विमाणं चलितं ६, तस्स फलं चारणसमणा भरहेरवएसु न आगमिस्सइ ६ । सत्तमे सुमिणे कमलं उक्करडीआए उग्गयं दिट्ठं ७, तेण चत्तारि वण्णाण मज्झे वइसस्स हत्थे धम्मो भविस्सइ, तेण वणिअग्गा अणेगमग्गा गिण्हिस्संति, सुत्तरुई अप्पजणाणं भविस्सइ ७ । अट्ठमे सुमिणे खज्जुओ उज्जोअं करेइ, तेण राइमग्गं मोत्तूण खज्जुओ इव उज्जोअं करिस्संति, तेण समणाणं निग्गंथाणं पूआसक्कारे थोवे भविस्सइ ८ । णवमे सुमिणे महासरोवरं सुक्कं,

दाहिणदिसाए थोवं जलं दिट्ठं ए, तेण जत्थ जत्थ पंच जिणकल्लाणा तत्थ तत्थ देसे धम्महाणि भविस्सइ, दाहिणदिसाए जिणमग्गं पन्नवइस्संति ए। दसमे सुमिणे सुवन्नथाले सारमेयो पाइसं भक्खेइ १०, तेण उत्तमलोही मज्झिमघरम्मि गच्छिस्सइ, कुलकम्मं मोत्तूण उत्तमा नीयमग्गे पवत्तिस्संति १०। एक्कारसमे सुमिणे गयारूढो वानरो दिट्ठो ११, तेण सुहिआ पारधी समा दुज्जणा, दुहिया अवमाणपयडिया सज्जणा, इक्खागहरिवंस जाव पहाणकुले रज्जहाणि भविस्सइ ११। बारसमे सुमिणे सायरो मज्जायं मुंचइ १२, तेण राया उम्मग्गचारिणो खत्तिया विस्संभभंगायं करिस्संति १२। तेरसमे सुमिणे महारहे वच्छा जुत्ता दिट्ठा १३, तेण वेरग्गभावे चारित्तं न गिण्हिस्संति, जे वुड्ढभावे गिण्हिस्संति ते महापमाइणो गुरुकुलवासचाइणो भविस्संति। जे बालभावे गिण्हिस्संति ते लज्जाए गुरुकुलवासं न मुंचइस्संति १३। चउदसमे सुमिणे महग्घरयणं तेअहीणं दिट्ठं १४, तेण भरहेरवयसमणा कलहकरा डमरकरा असमाहिकरा अविणयकरा थोवसनेहा भविस्संति १४। पनरसमे सुमिणे रायकुमरो वसहारूढो दिट्ठो १५, तेण रायकुमरा रज्जभट्ठा भविस्संति जुवणा सव्वं गिण्हिस्सइ १५। सोलसमे सुमिणे गयकिन्हजुअला जुज्झंता दिट्ठा १६, तेण अप्पमेहा पुत्ता य सीसा य अकालभासिणो देवगुरुअम्मापियरस्स सुस्सुयगा न भविस्संति, भायगा अमरिसेण कलहं करिस्सइं १६। जिणभणियं अन्नहा न भविस्सइ दुसमआरउ दुहदाइ लोगाणं" तं सोच्चा राया वेरग्गभावे चारित्तं गहिऊण देवलोगं गउ। इति स्वप्नप्रबन्धः।

आदिशब्दाज्ञाविस्वरूपं कल्किसम्बन्धेन ज्ञेयं। तच्चेदं—श्रीवीरनिर्वाणात् सप्तत्यधिकचतुःशतवर्षेषु

गतेषु विक्रमनृपसंवत्सरोऽभूत् । ततः संवत् चतुर्दशाधिकैकोनविंशतिशतेषु गतेषु पाटलिपुरे म्लेच्छपुरे चाण्डालिनीयशाख्यीकुक्षौ त्रयोदशमासानुषित्वा मधोः[1] सिताष्टम्यां कल्किजन्म भविष्यति, कल्की रुद्रश्चतुर्मुख इति त्रिधाऽभिधाधरः त्रिहस्तोच्चः कपिलशीर्षः पीतनेत्रश्च । जन्मतः पञ्चमे वर्षे जठररोगं बिभ्रत् भविष्यति । तस्याष्टादशे वर्षे कार्तिकसितप्रतिपद्दिवसे राज्याभिषेको भविष्यति । तस्य मृगाङ्काख्यो मौलिरदन्ताह्वोऽश्वो दुर्वासनामा कुन्तो दैत्यसूदनाख्यः खड्गश्च भविष्यति । तथा तस्य पादकटके चन्द्रसूर्यौ, तथा त्रैलोक्यसुन्दरं वासगृहं भावि । स स्वर्णदानेन विक्रमसंवत्सरमुत्थाप्य भूतले स्वकीयं संवत्सरं स्थापयिष्यति । तस्य चत्वारः पुत्रा भविष्यन्ति तन्मध्याद्दत्ताह्वसुतस्य राजधानीं राजगृहे स्थापयिष्यति, विजयस्य राजधानीमणहिल्लपत्तने स्थापयिष्यति, मुञ्जस्यावन्तिदेशं दास्यति, अपराजितस्यापरमण्डलं दास्यति । तस्य कल्किनो राज्यसमये म्लेच्छक्षत्रियभूपानां रुधिरप्रवाहैः पृथ्वी स्नानं करिष्यति । तथा तत्कोशे नवनवतिकोटयः सौवर्णकानां भविष्यन्ति, चतुर्दशसहस्रा गजाः, पञ्चाशदधिकचतुःशतीमिता हस्तिन्यः, सप्ताशीतिलक्षा हयाः, पञ्च कोटयः पदातयश्च भविष्यन्ति । स च नभःकेलिस्त्रिशूलास्त्रभृत् पाषाणाश्ववाहनो निर्दयश्च । षट्त्रिंशद्वर्षवयास्तु त्रिखण्डभरताधिपो भावी । तद्राज्यसमये सहसा मथुरायां वासुदेवबलदेवप्रासादौ पतिष्यतः । क्रमेणातिलोभेन कल्की निजपुरं खानयित्वा सर्वतो निधानानि ग्रहीष्यति । तत्र खनतां जनानां भूमितः पाषाणमयी लवणदेव्याह्वा सप्रभावा धेनुर्निर्गमिष्यति ।

[1] चैत्रस्य ।

सा चतुष्पथे स्थापिता भिक्षार्थमटतः साधून् दिव्यशक्त्या शृङ्गाभ्यां धर्षयिष्यति । तदा साधवस्तत्र भाविजलोपसर्गं ज्ञात्वा विहरिष्यन्ति । ततः सप्तदशाहोरात्रान् यावत्पयोधरो वर्षिष्यति । तेन कल्किपुरं प्लावयिष्यते । कल्की तु नंष्ट्वा क्वापि उच्चस्थले स्थास्यति । ततो नीरप्रसरतो नन्दभूपकारितान् स्वर्णगिरीन् वीक्ष्य भृशमर्थलोलुपो भविष्यति । पुनस्तत्र नवं पुरं संस्थाप्य द्विजादीनां सर्वेषां करं ग्रहीष्यति । पृथिव्यां सुवर्णादिनाणकं नाशयिष्यति । चर्मणो नाणकैर्व्यवहारो भविष्यति । कम्बलवस्त्राणि तृणवासांसि च परिधास्यन्ति जनाः । कल्किभयभ्रान्ता जनाः पत्रावल्यादौ भोजनं करिष्यन्ति । अन्यदा राजवर्त्मनि साधून् वीक्ष्य भिक्षायाः षष्ठांशमर्थयिष्यति । ततः साधुकृतकायोत्सर्गाहूता शासनदेवी तं वारयिष्यति । ततः पञ्चाशत्तमे वर्षे वामजङ्घायां दक्षिणकुक्षौ च दुष्कर्मतः प्रहारो भविष्यति । पुनः कल्की भिक्षाषष्ठांशहेतवे गोवाटके प्रातिपदाचार्यसाधून् रोत्स्यति । तदा सकलसङ्घसंस्मृता शासनसुरी समेत्य तं वोधितमपि यावन्न वोधं प्राप्स्यति तावदासनकम्पेन कृतवृद्धद्विजदेह इन्द्रः समेत्य तं कथयिष्यति—"भो नृप ! तव निर्ग्रन्थपीडनं नार्हं"। तदा स इति वक्ष्यति, यतः—"मम राज्ये सर्वेऽपि भिक्षवः करदाः संजाताः, इमे तु किञ्चिदपि न ददति, तेन वाटके निरुद्धाः सन्ति"। तत इन्द्रेण द्विस्त्रिरुक्तं यदा न स्वीकरिष्यति तदा रुषा चपेटाभिः प्रहतः षडशीतिवर्षायुष्कः कल्किराण्नरकं गमिष्यति । तत इन्द्रस्तस्याङ्गजं दत्तं शिक्षां दत्त्वा राज्ये न्यस्य गुरून्नत्वा दिवं गमिष्यति । दत्तः पितुः पापफलं ज्ञात्वा जिनचैत्यमण्डितां महीं कारयिष्यति शत्रुञ्जयोद्धारं चेति । ततः परं जिनधर्मप्रौढिः प्रवर्त्स्यतीति ।

अथेदृशेऽपि काले केचित् प्रभुमार्गज्ञा भविष्यन्तीत्याह—

लवणाब्धावपि मिष्टं पिबन्ति शृङ्गिमत्स्यकाः । शुद्धं तोयं तथा प्राज्ञाः कालेऽप्यस्मिन् श्रुतौ रताः ॥ १ ॥
दुःषमारे भविष्यन्ति युगामात्याः सुसूरयः । चतुर्विधास्तथा सङ्घा भूपाश्च धर्मकर्मठाः ॥ २ ॥

स्पष्टौ । नवरं युगप्रधानादिसङ्ख्या कालसप्ततिकायां देवेन्द्रसूरिकृतायां । तत्रोक्तं च—

जिणभत्तनिवा इगारलक्का सोलसहस्स होहिंति । इग्गारकोडि तित्थसासणपभावगा दुसमसमयम्मि ॥१॥
सुहम्माइ डुप्पसहंता तेविसुदएहिं चउजुअडुसहस्सा । जुगपवरगुरू तस्सम इगारलक्का सहस सोल ॥ २॥

इह सर्वौघैः पञ्चमारे तत्समयागमवेत्तारः सुधर्मस्वाम्यादिदुष्प्रसहान्ता चतुरधिकसहस्रद्वययुगामात्या भविष्यन्ति । तन्मध्ये सुधर्मजम्बूस्वामिनौ तद्भवसिद्धौ, शेषाः सर्वे एकावतारिणः प्रोक्ताः । प्रभावका अष्ट गणभृतश्च संयमधरा यत्र यत्र विहरन्ति तत्र तत्र चतुर्दिक्षु सार्धद्वियोजनक्षेत्रमध्ये दुर्भिक्षमरा-द्युपद्रवा न भवन्ति । तथा "पावयणी धम्मकही" इत्यादि द्विकक्रियागुणयुक्ता युगप्रधानसमा एकादश लक्षाणि षोडश सहस्राणि सूरयः पञ्चमारे भविष्यन्ति । तथा दीपालिकल्पे तु त्रिधा सूरयः प्रोक्ताः, तथाहि—

पंचमअरम्मि पणपन्न लक्कपणपन्नसहस्सकोडीणं । पंचसयकोडि पणपन्ना नमामि सुचरणसयलसूरी ॥१॥

५५ कोटयः, ५५ लक्षाः, ५५ सहस्राः, ५ शतानि, ५५ पञ्चपञ्चाशच्च, एतत्सङ्ख्यया सूरयो निर्ग्रन्था उत्कृष्टक्रियापरा ज्ञेया इति ।

तित्तीसं लरकाउं चउ सहस्सा चउ सयाइं च । इगनवइ दुसमाए सूरिणं मज्ञिमगुणाणं ॥ २ ॥

३३०४४९१ अङ्कसङ्ख्ययेमे सूरयो मध्यमगुणयुक्ताश्चरणशिथिला ज्ञातुं योग्या इति ।

पंचावन्ना कोमि पंचावन्नं च लरकाइं । पंचावन्नसहस्सा पंचसया चेव पणसहिया ॥ ३ ॥

५५५५५५५५५ एते नवपञ्चका आचार्याः प्रमादपरा अनाचारिणो ज्ञेयाः । अथोपाध्यायसङ्ख्या—

पंचावनकोमीउं लरकाणं हुंति तहा सहस्साइं । चउपन्न कोमिसया चउआलीसा उ कोमीउं ॥ ४ ॥

एते वाचनाचार्याः पञ्चमारे नविष्यन्ति । अथ साधुसङ्ख्या—

सत्तरकोमी लरका नव कोमि सहस्स कोमिसयमेगं । इगतीसकोमि इगलरक सहि सहस्सा सुसाहूणं ॥५॥

सप्तदश लक्षकोटयः, नव सहस्रकोटयः, एका शतकोटिः, एकत्रिंशत्कोटयः, एकं लक्षं, षष्टिः सहस्राणि, एतत्सङ्ख्याः साधवः । अथ साध्वीसङ्ख्या—

समणीण कोमिसहस्सा दस नव सय कोमि वार कोमीउं । उप्पन्न लरक उत्तीस सहस्स एगुणउन्निसया ॥६॥

दश सहस्रकोटयः, नव शतकोटयः, द्वादश कोटयः, षट्पञ्चाशल्लक्षाः, षट्त्रिंशत्सहस्राः, एकोनशतद्वयं च, तावत्यः सुसाध्व्यः । अथ श्राद्धसङ्ख्या—

तह सोल कोमिलरका तिकोमिसहस्सा य तिन्नि कोमिसया । सत्तर कोमी चुलसी लरका सुसावगाणं तु ॥७॥

अथ श्राविकासङ्ख्या—

पणवीस कोमीलरका सुसाविया कोमिसहस्स बाणउइ । पण कोमिसया वत्तीस कोमि तह बारमन्नहिया ॥८॥

एतत् दुःषमारकसङ्घप्रमाणं प्रोक्तं । अत्र केचिद्वदन्ति–इदं प्रमाणं जम्बूद्वीपभरतसत्कं । पुनः केचिद्वदन्ति–वीरबोधितसङ्घैः सहैतत्प्रमाणं। पुनः केचित्कथयन्ति–इदं पञ्चभरतसत्कं। तत्त्वमत्र दुःषमारकयन्त्रपटतस्तथा बहुश्रुतमुखतो ज्ञेयं। अथ पञ्चमारकप्रान्तोत्पन्नसङ्घनामानि कालसप्ततिकानुसारेण लिखामि—

तह सग्गचूर्ण सूरी दुप्पसहो साहुणी अ फग्गुसिरी । नाइलसड्ढो सड्ढी सच्चसिरी अंतिमो संघो ॥ १ ॥

जणियं च, एगो साहू एगा साहुणी सावओ य सड्ढी वा । आणाजुत्तो संघो सेसो पुण अट्ठिसंघाओ ॥२॥

दसवियालियजियकप्पावस्सयअणुओगदारनंदिधरो । सययं इंदाइनओ बहुग्गतवो दुहत्थतणू ॥ ३ ॥

गिहिवयगुरुत्त वारस चउ चउ वरिसो कयछमो अंते । सोहम्मि सागराऊ होइ तओ सिज्झिही भरहे ॥४॥

सुअसूरिसंघधम्मो पुवन्हे छिज्जिही अगणि सायं । निव विमलवाहणो सुहुममंति नयधम्म मझन्हे ॥ ५ ॥

वीरजिनतो वक्ष्यमाणकालं यावत् पञ्चमारे जिनधर्मप्रवृत्तिर्भविष्यति—

वासाण वीससहस्सा नव सय तिमास पंच दिणपहरा ।
इका घडिया दो पल अरकर अरुयाल जिणधम्मो ॥ १ ॥ इति ॥

स्वप्नप्रबन्धेन च कल्किराज्ञो (जो), ज्ञातेन ज्ञा(म)त्वा समयस्वरूपम् ।
प्राज्ञा युगामात्यमुनीश्वरादिश्रीमज्जिनाज्ञां न विराधयन्ति ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थस्य वृत्तौ
चतुर्दशस्तम्भे २०८ व्याख्यानम् ॥

अथानागतजिनवर्णनमाह—

भाविनां पद्मनाभादिजिनानां प्राग्भवास्तथा । नामानि स्तूयन्तेऽस्माभिः प्राप्य पूर्वोक्तशास्त्रतः ॥ १ ॥

स्पष्टः । नवरं प्राग्भवादिस्वरूपं त्विदं—उत्सर्पिण्या द्वितीयारकः श्रावणकृष्णप्रतिपद्दिने स्थास्यति । तदाऽम्बुदाः पञ्च वर्षिष्यन्ति क्रमेण । तेष्वाद्यः पुष्करावर्तो भूतापमपनेष्यति । द्वितीयः क्षीरोदः सर्वौषधिबीजानि निष्पादयिष्यति । तृतीयो घृतोदः सर्वसस्यादि स्नेहभावं निष्पादयिष्यति । चतुर्थः शुद्धोदकः सर्वौषधिं परिपाकं नेष्यति । पञ्चमो रसोदः क्षिताविक्ष्वादि सुरसं निष्पादयिष्यति । इमे पञ्च पञ्चत्रिंशद्दिनानि यावद्वर्षिष्यन्ति । तेन स्वयं वृक्षलतौषधिसस्याद्युत्पत्स्यते । तद्वीक्ष्य बिलवासिनो जीवा निःसरिष्यन्ति । क्रमेण द्वितीयारकपर्यन्ते मध्यदेशक्षितौ सप्त कुलकरा भविष्यन्ति । तेष्वाद्यो जातजातिस्मृतिः राज्यादिस्थितिं स्थापयिष्यति । ततस्तृतीयारकस्य एकोननवतिपक्षे गते शतद्वारपुरे सप्तमकुलकरसुमतिभूपतेर्भद्रादेव्याः कुक्षौ प्रथमस्वर्गतश्च्युत्वा श्रीवीरजिनच्यवनसमये तस्मिन्नेव दिने तस्यामेव वेलायां श्रेणिकभूपजीवोऽवतरिष्यति । वीरस्वामिजन्मदिने जन्म भविष्यति, प्रथमः श्रीपद्मनाभजिनो महावीरतुल्यो भविष्यति । महावीरपद्मनाभयोरंतरं त्विदं, यत उक्तं च प्रवचनसारोध्धारे

चुलसी वाससहस्सा वासा सत्तेव पंच मासा य । वीरमहापउमाणं अंतरमेअं वियाणाहि ॥ १ ॥

दीपालिकादिने निर्वाणकल्याणकं भविष्यति १। द्वितीयः सुरदेवनामा जिनो, देहवर्णायुर्लाञ्छनदेहोच्चत्वं पञ्चकल्याणकदिनादि च पार्श्वनाथसन्निभं भविष्यति। स ज्ञातपुत्रस्य पितृव्यः सुपार्श्वाख्यजीवो द्वितीयतीर्थकृद्भविष्यति २। तृतीयः सुपार्श्वनामा जिनाधिनाथो द्वाविंशतितमश्रीनेमिजिनसदृशो विग्रहकान्त्यादिभिस्तुल्यो भविष्यति। यः पाटलीपुराधिपोदायिनृपजीवो ज्ञेयः कोणिकनृपपुत्रो भंभसारभूपपौत्रश्च पौषधागारे विनयरत्नाख्याभव्यसाधुतो घातं प्राप्तवान् तस्य जीवः तृतीयजिनः ३। चतुर्थः स्वयंप्रभाख्यो नमिप्रभुसदृशः पोट्टिलमुनिवरजीवो भविष्यति ४। पञ्चमः सर्वानुभूतिनामार्हन् दृढायुःश्रावकजीवो मुनिसुव्रतसन्निभो भावी ५। षष्ठो देवसुताह्वः पारंगतः कार्तिकात्मा भविता, नवरमधुना कार्तिकश्रेष्ठिजीवो यः सौधर्मसुरलोकेशत्वमनुभवति द्विसागरोपमायुष्कत्वात् तस्य जीवस्तु न, किंत्वत्र तुल्यान्तरवान् कश्चिदन्य एव मल्लिनाथतुल्यो न तु स्त्रीवेदयुक्तः ६। सप्तम उदयनामा त्रिकालवित् शङ्खस्य जीवो भविता, न चायं पञ्चमाङ्गवर्णितशङ्खश्राद्धः अयं तु कश्चिदन्य एवारनाथसन्निभो भविष्यति, नवरं चक्रित्वानुभवनस्य निश्चयो न वाच्यः ७। अष्टमः पेढालनामा क्षीणाष्टकर्मा आनन्दस्य जीवो भविता। नवरं नायं सप्तमाङ्गवर्णितानन्दश्राद्धः, स तु महाविदेहे सिद्धिं प्राप्स्यति, अतः कुन्थुनाथार्हत्तुल्यः कश्चिदन्यो ज्ञेयः ८। नवमः पोट्टिलाकः परमेश्वरः सुनन्दात्मा शान्तिजिनानुरूपो भविष्यति ए। दशमः शतकीर्तिनामा जिनाधीश्वरः शतकात्मा भविता, अयं शतकस्य जीवः पुष्कलीत्यपरनाम्ना पञ्चमाङ्गे ख्यातः श्राद्धो ज्ञेयः, तस्यात्मा धर्मजिनतुल्यो भविष्यति १०। एकादशो मुनिसुव्रताह्वः परमात्मा दशार्हसिंहस्य कृष्णस्य

जननीदेवक्या जीवोऽनन्तनाथतुल्यो भविष्यति ११ । द्वादशोऽममनामा भगवान्नवमवासुदेवजीवस्त्रयोदशविमलजिनसदृशो भावी । समवायाङ्गसूत्रे त्रयोदशो जिनो भावीत्युक्तमस्ति, तत्त्वं तु बहुश्रुता एव विदन्ति १२ । त्रयोदशो निष्कषायाख्यो जगत्प्रभुः सत्यकिविद्याधरजीवः सुज्येष्ठासाध्वीसुतो लोके रुद्रसदाशिवेत्याख्यया प्रसिद्धः, तस्यात्मा वासुपूज्यसन्निभः, समवायाङ्गे द्वादशः प्रोक्तोऽस्ति, तत्त्वं तु बहुश्रुता विदन्ति १३ । चतुर्दशो निष्पुलाकाख्यस्तीर्थाधिपो बलदेवस्यात्मा भविता, नवरं न चायं कृष्णस्य बान्धवः, यतः 'श्रीहेमचन्द्रकृतनेमिचरित्रमध्ये बलभद्रजीवः कृष्णतीर्थे सिद्धिं प्राप्स्यति (इत्युक्तमस्ति), अतः कश्चिदन्य एव श्रेयांससदृशो भावी १४ । पञ्चदशो निर्ममाह्वो जगत्प्रभुः सुलसाजीवो भावी, यां प्रति श्रीवीरस्वामिना धर्मलाभोऽम्बडमुखेन प्रहितः, तस्या जीवः शीतलजिनसदृशो भविता १५ । षोडशश्चित्रगुप्तनामा सर्वज्ञो बलदेवमातृरोहिण्या जीवो भविष्यति सुविधिजिनसदृशः १६ । सप्तदशः समाधिनामा सर्वदर्शी भविता, तज्जीवो रेवतीश्राविकाया ज्ञेयः, यया बीजपूरपाकं प्रतिलाभ्य गोशालमुक्ततेजोलेश्योत्पन्नरोगे श्रीवीरदेहे समाधिः कृतः, तस्या जीवश्चन्द्रप्रभुसमो भावी १७ । अष्टादशः संवराह्वः सर्ववेत्ता शतालिश्राद्धस्य जीवः श्रीसुपार्श्वतुल्यो भावी १८ । एकोनविंशो यशोधराख्यः पुरुषोत्तमो द्वीपायनस्य जीवो लोके वेदव्यासेतिनाम्ना प्रसिद्धः पद्मप्रभसदृशो भविष्यति १९ । विंशतितमो विजयाख्यः परमेष्ठी कर्णजीवः सुमतितुल्यो भावी । केचिदमुं कर्णं कौरवभ्रातरं वदन्ति, केचिच्च चम्पापतिं वासुपूज्यवंशजं कथयन्ति, तत्त्वं तु केवलिगम्यं २० । एकविंशः पुनर्मल्लनामा जिनोत्तमोऽभि-

नन्दनतुल्यो नारदात्मा भावी। केचिदमुं नारदनिर्ग्रंथं भगवतीसूत्रवर्णितं कथयन्ति, केचिच्च रामलक्ष्मणकालीनं च २१। द्वाविंशो देवनामा जिनोऽम्बडात्मा संभवजिनतुल्यः। अत्रौपपातिकसूत्रवर्णितो योऽम्बडः स तु महाविदेहे सिद्धिं प्राप्स्यति, अतः सुलसापरीक्षक एव चिन्त्य इति तत्त्वं २२। त्रयोदशोऽनन्तवीर्याभिधो जिनोऽमरात्मा भविताऽजितनाथतुल्यः २३। चतुर्विंशो भद्रकृतनामा स्वामी बुद्धजीवो भविता ऋषभजिनतुल्यः २४। एतेषां—

आयुःप्रमाणकल्याणान्तरलाञ्छनवर्णकाः। एतत्पश्चानुपूर्व्या तु वर्त्तमानजिनैः समाः॥ १॥

॥ इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ
चतुर्दशस्तम्भे २०९ व्याख्यानम्॥



## ॥ व्याख्यानं ॥ २१० ॥

अथ दीपोत्सवदिनस्वरूपमाह—

विश्वे दीपालिकापर्व विख्यातं केन हेतुना। पृष्टं सम्प्रतिभूपेनार्यसुहस्तिगुरुर्जगौ॥ १॥

स्पष्टः। उज्जयिन्यां सम्प्रतिभूपेन महासङ्घपरिवृता आर्यसुहस्त्याचार्या राजपथे व्रजन्तो दृष्टाः। तत्र नृप आगत्य गुरुं नत्वा व्यजिज्ञपत्—"हे पूज्याः! यूयं मां जानीथ न वा?"। गुरुः प्राह—"हे सम्प्रते!

कस्त्वां न वेत्ति ? जनपदस्वामित्वात् ।" नृपः प्राह—"नहि नहि, स्वामिन् ! अनेनाल्पहेतुना नोपलक्षणं पृच्छामि, अन्यप्रकारेण मामुपलक्ष्यथ ?" । दशपूर्वधरो गुरुः श्रुतेन तत्पूर्वभवस्वरूपं ज्ञात्वोवाच—"नृप ! त्वं पूर्वभवेऽस्माकं शिष्योऽभूः, एकदिनात्तसंयममहिम्ना त्वमत्र भूधववरोऽभूः" । गुरूक्तं सत्यं मत्वाऽऽह—"युष्मत्प्रभावतो लब्धमिदं राज्यं युष्माभिर्ग्राह्यं, इदं गृहीत्वा विभो ! मामनुगृहाण, मामनृणं कुरु" इति पादयोः पतित्वा पुनः पुनर्व्यजिज्ञपत् । तं प्रति गुरुराह—"संयमसाम्राज्यतुल्यं राज्यं नाभवति, अतो हे नृप ! त्वया धर्मयोगेन प्राप्तं राज्यं ततो धर्मोद्यमे तत्परो भव" । एवं गुरुणोदिते जातसंशयो नृपः पप्रच्छ—"हे पूज्य ! जैनागमे षरूष्टाह्निकादिपर्वाणि विख्यातानि । परं लोके लोकोत्तरे च कुतो दीपालिकापर्व विख्यातं ? अत्र दिने जनो विविधवस्त्राणि परिधत्ते, पशुगृहहट्टश्रेणिवृक्षादयो विभूष्यन्ते" । "हे नृप ! शृणु, श्रीवीरस्य दशमस्वर्गतश्च्युत्वाऽऽषाढसितषष्ठ्यां च्यवनकल्याणकमभूत्, चैत्रसितत्रयोदश्या मध्यरात्रौ जन्मकल्याणकमजनि, तदनु त्रिंशद्वर्षाणि गृह उषित्वा कृतषष्ठतपा मार्गशीर्षबहुलदशम्यां संयमं जग्राह, तदैव मनःपर्यवज्ञानं जातं । ततो दुस्तपं तपः कुर्वतः श्रीवीरस्य वैशाखशुक्लदशम्यां घातिकर्माभावे सति केवलमुत्पन्नं । किञ्चिदूनत्रिंशद्वर्षाणि यावत् केवलज्ञानपर्यायान्वितः श्रीवीरः स्वायुरल्पं विदन्नपापापुर्यां हस्तिपालनरेशस्य राज्यसंसदि अन्तिमचतुर्मासकमकरोत् । तदवसरे स्वामी अनेकेषां भव्यानां संशयान्निवार्य भाविभावस्वरूपमुक्त्वा षोडश प्रहरान् लोकानुकम्पया धर्मदेशनां जगौ । तदा श्रीवीर आदिमगणभृतं देवशर्माह्वद्विजप्रबोधार्थं प्राहिणोत् स्वामिप्रेमबन्धविच्छेदाय च ।

अथ कार्तिकामावास्यादिने षष्ठतपाः प्रभुः पर्यङ्कासनमासीनश्च निशापश्चिमयामार्धे स्वातिनक्षत्रे च शक्रेण स्वामीति भाषितः—"हे भगवन् ! यूयं क्षणमेकमायुर्वृद्धिं कुरु, प्रतीक्षस्व, युष्मजन्मदिने संक्रान्तो भस्मग्रहः द्विसहस्रवर्षस्थितिकोऽधुना स्थास्यति, तेन तीर्थोन्नतिर्न स्यात्, तव दृष्टिप्रभावेण तु तस्य निष्फलोदयो भविता" इति । प्रभुराह—"हे इन्द्र ! आयुःकर्मपुद्गलाः पूर्वभवे बद्धास्तेषां न्यूनाधिकत्वं जिना अपि कर्तुमक्षमाः, अपरं चाभाव्यं न भवेद्भाविनो भावस्य च नाशो न स्यात्" इति । तदा पञ्च-पञ्चाशदध्ययनानि शुभफलविपाकानि पञ्चपञ्चाशदध्ययनानि चाशुभफलविपाकानि जगत्प्रभुर्निजगाद । षट्त्रिंशदपृष्टव्याकरणानि चोक्तानि गणधरसाधुश्रावकादिभिरपृष्टेनापि स्वयमेव लोकानुकम्पया प्रोक्तानि । अथ प्रभुः कृतयोगनिरोधः शैलेशीकरणं विधाय सिद्धिसौधमुपागतः । तदा सूक्ष्मानुद्धरकुन्थुषु भूयस्सु समुत्पन्नेषु दुष्पालं संयमं मत्वा साधवोऽनशनं व्यधुः । तदा सर्वसङ्घः साश्रुनेत्र इति व्यलपत्, तथाहि—

जगद्बन्धुः कृपासिन्धुः स्वामिन् ख्यातोऽसि किं ततः । दत्त्वाऽस्मभ्यं महादुःखं महानन्दं श्रितः स्वयम् ॥ १ ॥
हहा महाधमतमा विश्वतारक नारकाः । प्रमोदं कलयामासुर्ये ननु त्यजति त्वयि ॥ २ ॥
विश्वत्रयाधार कृपानिधे त्वं, विज्ञप्तिमेकां शृणु सङ्घनाथ ।
सङ्घस्य रागो विविधानुभावो, विघ्नस्य कर्ता किमु नात्र जातः ॥ ३ ॥
वीरेति वीरेत्यभिधानमुक्त्वा, कस्याभिमुख्यं च विधाय पृच्छाम् ।
निःसंशयाः स्याम कथं च मुग्धा—नाश्वास्य मुक्तिं गतवान् स्वयं यत् ॥ ४ ॥

त्वत्सदृशो नास्त्यधुना जगत्यां, यः सङ्घसारां कुरुते निरीह ।
भावाब्धिसद्दायक जीवनेत-रमोघ कस्त्वामभिधास्यते च ॥ ५ ॥
त्राताऽसि धातः किमुपेक्षसेऽस्मान्, ज्ञात्वापि चित्तस्य गतिं जनानाम् ।
मूर्तेन ज्ञानेन भवत्स्वरूपं, तूर्णं ग्रहीष्यामि विभोः कथं हा ॥ ६ ॥

तदा कस्मैचित्कार्याय एकीभूताः काशीकौशलभूभृतश्चेटकनृपाज्ञाकारिणश्च नव मल्लकीज्ञातीया नव च लच्छकीज्ञातीया अष्टादश राजानोऽमावास्यादिने सपौषधमुपवासं कृत्वा जिनवाणीं शृण्वन्ति स्म। तदा श्रीजिनस्य निर्वाणकल्याणके जाते समस्तनृपाः पाश्चात्यनिशायां श्रीवीरे भावोद्योते गते द्विधाऽन्धकारसहनेऽक्षमा द्रव्योद्योताय दीपान् व्यधुः । तथा गच्छद्भिरागच्छद्भिर्देवदेवीभिर्ज्योतिर्मयी निशाऽभूत्। देवगणास्तमोहररत्नानि करे कृत्वाऽऽगच्छन्त ऊचुः—"जिनं प्रति सत्कृतमिदमारात्रिकोत्तारणम्" अनेन हेतुना सर्वत्र "मेराइय मेराइय" इतिशब्दः प्रसृतः । लोका अपि दीपावलिं करे धृत्वा "मे आरात्रिकमिदं" इति वदन्तस्तत्राययुः।इत्थं परस्परं सर्वत्र दीपान् व्यधुः उद्योतार्थं। ततः प्रभृति महीतले दीपोत्सवाभिधं पर्व प्रावर्तत दीपश्रेणिकरणात् । अन्यच्च वीरशासने निरङ्कुशा मिथ्यात्विदेवा भस्मग्रहश्च दुष्टत्वं कुर्वन्ति, तत्कृतदुष्टफलहननार्थं मेराइयमभूत् वीरसङ्घस्यार्तिः पीडा च दूरीभवत्विति कृत्वा परं रूढ्या पर्व जातं। अथ प्रभाते द्विजं प्रबोध्य वीरवन्दनायागच्छता गणभृता निरुत्साहान्निरानन्दान् देवान् नरान्नारीश्च दृष्ट्वोचे—"यूयं कथं सर्वेऽद्य निरुत्साहाः ?"। देवैः प्रोक्तं—"श्रीवीरपरमात्मा स्वधाम

प्राप्तः, किं कुर्महे ?"। इति श्रुत्वा स्तिमितनेत्रो मनसि दध्यौ—"अहो ! जगच्चक्षुः ! मादृशां निक्षुणामिक्षुरसादिसमया वाण्याऽधुना कः प्रतिबोधयिष्यति ? ईदृशे समये स्वाश्रितोपजीविनां दूरीकरणं नार्हं, मामन्तराले मुक्त्वा शिवं गतः। किमहं भवद्वस्त्राञ्चलं गृहीत्वा बालचेष्टितमकरिष्यम् ?। मोहादिमहायोधेभ्यस्त्वं न भीतः, परं मत्तः शिशुतः कथं भीतः ? मदवगाहनया मोक्षमार्गः मुक्तिस्थलं च किं संकीर्णमभविष्यत् ?। तत्र त्वनन्ताः स्वस्वधर्मयुक्ता अनन्तगुणपर्यायान्विताः परस्परबाधासंघट्टनाद्यभावेन स्थिताः सन्ति स्थास्यन्ति चेत्यादि सिद्धिवर्णनं त्वयैवादिष्टं। सहसाऽत्र वियोगः कथं विहितः ?।

वीतराग तव दर्शनमुक्तौ, भ्रान्तवान्निखिलयोनिनिकाये।
भूरिशोऽहमथ तद्यदि लब्धं, तेन माऽस्तु सहसाऽत्र वियोगः ॥ १ ॥
वीतराग सफलः स वासरः, स क्षणः स पलः सुलक्षणः।
याम एव स तु सर्वकामदो, यत्र वन्दनमहस्तवाभवत् ॥ २ ॥
मां प्रलोभ्य गमनं तव नार्हं, बालकं प्रतिदिनं कृतमिष्टम्।
गोयमेतिवचनैः श्रुतिमध्ये, को वदिष्यति तवागमसारम् ॥ ३ ॥
देहि देहि जिननाथ दर्शनं, लङ्घनस्य समयो न शोभते।
मुञ्च मुञ्च भगवन्निजाग्रहं, तारकेति कथमन्यथा प्रथा ॥ ४ ॥

१ राहित्ये।

कस्य पादकमलानि(लं च) वन्द्यते, जीवितं त्वयि विधायितं मया ।
युक्तितश्च विविधात्मनिश्चयात्, स्वीकृतोऽसि जिनदेव पाहि माम् ॥ ५ ॥

इत्यादिप्रशस्तरागरञ्जितचेताः क्षयोपशमरत्नत्रयीधारको गणभृत् किञ्चिदुपालभ्य वीतरागशब्दस्यार्थं चिन्तयन् क्षपकश्रेण्यारूढः केवलज्ञानं प्राप। पूर्वं केवलज्ञानकृतेऽनेक उपायाः कृतास्तथापीदृशो भावोऽनन्तानन्तकालं परिभ्रमता तस्मिन्नेव क्षेत्रे काले भावे च तदैव प्राप्तः । अथ शक्रः श्रीवीरस्य मोक्षमहिमानं कृत्वा प्रतिपदः प्रगे श्रीगौतमप्रभोः पूर्णज्ञानोत्सवं चक्रे । यतः—

स्वर्णाष्टाग्रसहस्रपत्रकमले पद्मासनस्थं मुनिं, स्फूर्जल्लब्धिविभूषितं गणधरं श्रीगौतमस्वामिनम् ।

श्रीगौतमोक्तसूरिमन्त्राराधकसूरयोऽत्र दिनेऽक्षतार्चनां चन्दनादिभिः कुर्वन्ति । अथ श्रीवीरप्रभुरहितां पृथ्वीं वीक्ष्य मोहरूपमहाचरटः सर्वत्र धर्मधनं लुण्टति स्म । तं चौरं प्रति प्राप्तज्ञानेन गणभृतेत्युक्तं—"हे मोह ! यद्यपि श्रीवीरप्रभुर्मोक्षं प्राप्तस्तथापि तत्स्थापितधर्मराज्येऽहं स्थितोऽस्मि, किं न जानासि ? अहो पापैकनिष्ठ ! अधुना मुमूर्षुः क्व यासि ? कियद्दूरं प्रणष्टः सन् यास्यसि ?" । तन्मिषं कृत्वाऽधुना लोका दीपं करे कृत्वा स्वगृहात् शूर्पछलात्तं चरटं वित्रास्य मन्दिरान्निष्कासयन्त्येव किमु ? मोहाविरतिरूपामलक्ष्मीं निर्वासयन्ति गौतमज्ञानोत्पत्तिरूपां महालक्ष्मीं स्वात्ममन्दिरे स्थापयन्तीति भावार्थः ।

अथैषु दिनेषु मध्ये एकोपवासेन सहस्रगुणं पुण्यं स्यात्, अष्टमतपसा कोटिगुणं पुण्यं स्यात्, यतो यत्र दिनेषु सर्वे जनाः पञ्चेन्द्रियसुखाभिलाषिणो जायन्ते, महान्ति कर्मबन्धकारणानि रचयन्ति, भोगो-

त्सुका नवन्ति च, अतस्तत्त्यागिनां परमार्थज्ञानां महान् लाभो नवत्येव। अथवा चतुर्दश्याममावास्यायां च पोरुशप्रहरानुपवासौ विधाय चन्दनाक्षतपूजाभिः कोटिपुष्पसहिताभिः श्रीवीरादिजिनान् पञ्चचत्वारिंशत्सिद्धान्तांश्च पूजयेत्, "श्रीवीरस्वामिसर्वज्ञाय नमः" इत्यस्य जपो विधेयः। अमावास्यायां चरमयामार्धे "श्रीवीरं पारंगताय नमः" इति, प्रतिपत्प्रगे तु "श्रीगौतमस्वामिकेवलज्ञानाय नमः"। सहस्रसुवर्णपत्रकमले निषण्णं पद्मासनस्थं पञ्चाशत्सहस्रसाधुसाध्वीस्वदीक्षितपरिषत्परिकलितं च चित्ते संस्मृत्य जिनाग्रे तथा गौतमस्वाम्यग्रेऽखण्डाक्षतैः पञ्चाशत्सहस्रसङ्ख्यैः स्वस्तिकं कृत्वाऽखण्डयत्नतो दीपं विधाय गौतमप्रभुं ध्यायेत्, महत्फलं स्यात्। इत्युपदेशः सुहस्तिसूरिणा सम्प्रत्यग्रे प्रोक्तः। सोऽपि तत्पर्वाराधने तत्परो जातः ॥

वर्धमानजिन आप निर्वृतिं, यत्र केवलरमां च गौतमः।
राजभिर्व्यरचि दीपमालिका, तत्ततोऽस्ति न हि पर्व नूतले ॥ १ ॥

॥ इत्यब्ददिनपरिमितहितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रंथस्य वृत्तौ चतुर्दशस्तंभे व्याख्यानम् ॥ २१० ॥

॥ समासोऽयं चतुर्दशः स्तम्भः ॥



## ॥ पञ्चदशः स्तम्भः ॥

### ॥ व्याख्यानम् ॥ २११ ॥

अथ ज्योत्कारोऽद्भुतोऽभवत्तत्स्वरूपमाह—

अन्योऽन्यं जनज्योत्कारा भवन्ति प्रतिपत्प्रगे । तत्स्वरूपं तदा पृष्टं पुनर्जगाद साधुपः ॥ १ ॥

स्पष्टः । हे नृप ! सम्प्रते ! एकस्त्वयं हेतुरस्ति—गौतमस्य केवलमुत्पन्नं नवीनराज्येशमिव सर्वैरागत्य गणभृद्वन्दितः, तेन प्रणामविधिर्जातः । अन्यं हेतुं शृणु—पुराऽवन्त्यां धर्मभूपः । तस्य नमुचिनामा धीसखो बभूव । एकदा तत्र मुनिसुव्रतस्वामिशिष्याः श्रीसुव्रतसूरय आजग्मुः । तेषां वन्दनार्थं श्रीधर्म-भूपो नमुचिना सह समागात् । देशनायां स धीसखो वादममुं चकार—"स्वप्नोपमं वै सकलं, भूते नष्टे सर्वं नष्टं, न परलोकेऽयं गतिं प्राप्नोति" इत्यादि स्थापयन् सूरिशिष्येण निर्जितः । तदनु क्रोधवशो रात्रौ करवालं करे कृत्वा हन्तुमना निष्कृपः साधुसमीपमुपागतः, जैनदेवतया तथैव स्तम्भितः, चित्रलिखित इव प्रभाते भूपादिभिर्दृष्टः, देवतां गुरुं च क्षमयित्वा मोचितः, पौरैर्धिक्कृतश्च लज्जितो पुरान्निर्गत्य भ्रामन् हस्तिनागपुरं गतः । तत्र पद्मोत्तरो राजा । तस्य प्रिया सम्यक्त्वशीलालङ्कृता ज्वालादेव्यस्ति । तयोः सुतौ विष्णुकुमारमहापद्माह्वौ । राज्ञा विष्णुकुमारस्य राज्यपदं दत्तं, तस्यानुजस्य यौवराज्यं च । अन्यदा

स नमुचिः स्वकलाकौशलं युवराजायादर्शयत्, तेन हृष्टस्तं सचिवपदं ददौ । सोऽन्यदा नमुचिर्महायोधं सिंहरथं जिगाय । ततस्तुष्टो युवराजो वरं ददौ । स च तं वरं कोशे न्यासीचकार । एकदा ज्वालादेव्या मुदा रथयात्राचिकीर्षया स्वर्णरत्नैरलङ्कृतो जैनरथो निर्मापितः । तदा तस्याः सपत्नीनिर्ब्रह्मरथः स्पर्धया कारितः । अथ तौ रथौ चतुष्पथे परस्परमभिमुखौ मिलितौ । तयोर्द्वयोर्वादे जाते एकस्या अपि रथं मार्गं दत्त्वा नाग्र आकर्षयन्ति आकृष्टिकरा नराः । तदा कलहनिवृत्त्यर्थं राजा द्वावपि रथा अवारयत् । तदनु महापद्मस्तथा कृतं मातुरपमानं वीक्ष्य स्वान्ते दुःखितो देशान्तरमगच्छत् । क्रमेण चक्रियोग्यां संपदमुपार्ज्य जन्मभूमावागतः । पित्रा महामहसा पुरे प्रवेशितः । ततो महापद्मस्य द्वात्रिंशत्सहस्रनृपा-दयो राज्याभिषेकं द्वादश वर्षाणि यावच्चक्रुः । तदनु पिता विष्णुकुमारेण सह सुव्रताचार्यसमीपे दीक्षां लात्वा त्रिदिवं प्राप । विष्णुकुमारस्य तु षष्टिशतानि वर्षाणि तीव्रं तपः कुर्वतो वैक्रियादिलब्धयो जाताः । अथ महापद्मश्चक्री मातू रथयात्रामनोरथं प्रौढोत्सवपूर्वं पूर्णीचकार । ततः स्वपापत्यागार्थं मातृवाक्येन जिनचैत्यभूषितां महीं चकार । अथ ते सुव्रतसूरयो हस्तिनागपुरे बहुसाधुयुताश्चतुर्मासाभिग्रहास्तस्थुः । तदा स्मृतपूर्ववैरो नमुचिश्चक्रिपार्श्वे स्ववरं ययाचे—"हे नृपेन्द्र ! कार्तिकराकां यावन्मे षट्खण्डराज्यं देहि" । श्रुत्वा नृपस्तस्मै सर्वं राज्यं दत्त्वा स्वयमन्तःपुरमलञ्चकार । अथ नमुचिः षट्खण्डराज्यमपाल-यत् निरङ्कुशः सर्वधर्मद्वेषी । संजातनूतनसर्वपृथ्वीपतित्वात्सर्वे नृपादय उपायनानि दत्त्वाऽऽज्ञामङ्गी-चक्रुः । नमुचिना जीवहिंसात्मको यज्ञः प्रारब्धः । द्विजादयः सर्वे आशिषं दत्त्वा तत्कृत्यं प्रशशंसुः ।

तदा तान् सूरीनाकार्य प्राह—"भवतो मुण्डान्मुक्त्वाऽन्ये सर्वेऽपि लिङ्गिनो द्विजाश्च मां सार्वभौमं यज्ञधर्मकृत्यं च ज्ञात्वा नमन्ति स्तुवन्ति च। यूयं किं मत्तोऽधिकाः स्थ ?। तस्मान्मे भूमौ साधुभिर्नि-स्थेयं सप्तवासराधिकं यदि मद्भूमौ स्थास्यन्ति तेषामहं हन्ता, अत्र दूषणं मम न देयं"। ततः पौरैः सामवचोभिः शिक्षितोऽपि स्वाभिनिवेशं नामुञ्चत्। ततः सूरयो दध्युः—"सर्वत्रास्य राज्यं, वयं चतुर्मास्यां सप्तदिनमध्ये क्व गच्छामः ?" इति विचिन्त्य साधून् पप्रच्छुः—"एतेषु मध्ये गगनमार्गलब्धिमान् कोऽप्यस्ति ? यो मेरुशृङ्गस्थं विष्णुतपस्विनमत्राह्वयति ?"। तत एकः शिष्यो गुर्वाज्ञां प्राप्य तत्र गतः। विष्णुमुनिरपि चतुर्मासकेऽतर्कितं तस्यागमनहेतुं पप्रच्छ। तेन यथातथं प्रोक्तं। ततो विष्णुमुनिस्तेन साधुना सह नमुचिराजसंसदि इयाय। नमुचिं विना शेषै राजादिभिर्वन्दितः, नमुचिं प्राह—"हे भूप ! धृताभिग्रहा मुनयोऽधुना क्व यास्यन्ति, तस्मात् स्थित्यर्थं कियतीं भूमिं देहि"। नमुचिना त्रिपदीमिता पृथ्वी दत्ता। तन्निशम्य कोपाटोपवान् विष्णुर्वैक्रियलब्ध्या कृतलक्षयोजनमिताङ्ग एकं क्रमं पूर्वदिश्यन्यं चापरदिशि विन्यस्योवाच—"अरे पापिन् !तृतीयचरणस्थापनभूमिं क्व ददासि ?"। स भयविह्वलो मौनेन स्थितः। तदा तृतीयक्रमो नमुचेः पृष्ठे निहितः, तेन द्विधापि रसातलं गतवान् यथा त्रिविक्रमेण बलि-रिपू रसातलं क्षिप्तः। तदाऽचला अपि चला जज्ञिरे, ग्रहा भयभ्रान्ता जाताः, इन्द्रादयोऽपि "इदं किं ?" इति संभ्रान्ता अवधिज्ञानात्तन्निमित्तं ज्ञात्वा वासवो विष्णुमुनेः क्रोधोपशान्तये गन्धर्वान् गीतज्ञान्

प्राहिणोत् । तैर्मुनिकर्णसमीपे शमामृतमयं गीतनृत्यं प्रारब्धं, तेन प्रशान्तकोपाग्निर्जज्ञे, ततो मूलरूपं चकार । सार्वभौमोऽपि लज्जान्वितो नमन् विष्णुनोपालम्भितः—"त्वयि राज्ञि सति ईदृशी शासनहीलना पीडा च भवेत् तर्ह्यन्येषां क्षुद्रनृपानां राज्ये को दोषः ?" इत्यादिशिक्षां चक्रपतेर्दत्त्वाऽऽचार्यान्तिकमागत्यालोचितं यथास्थितकथनेन प्रतिक्रान्तं प्रायश्चित्तग्रहणेनेति । अत्र शासनभक्त्यर्थं विहितं, तेन न कश्चिद्दोषः, तथापि किञ्चित्स्वाध्यायध्यानादिभ्यो(षु) भ्रष्टत्वं विभावप्रसङ्गत्वं च जातं तद्गुरुसमक्षमीर्यापथिकादिनाऽऽलोचितं । ततः शिवगतिमवाप । अथ तदुत्पात उपशान्ते पुनर्जन्म चैतन्यं च लब्धमिव जनाः प्रतिवर्षं प्रतिपद्दिने वस्त्रान्नपानज्योत्कारगेहभूषादिमहोत्सवाः कुर्वन्ति । अथ यः साधूनां निन्दादिकारकः स नररूपोऽपि मृग एव–पशुरेवेति सर्वत्र ख्यातिकृते ज्ञापनार्थं च गृहे गृहे राज्ञा गोहिसः कारितः, अद्यापि मरुदेशादौ भगणस्य कुर्वन्तीति ॥

ज्योत्कारयस्रे प्रथमो गणेशः, कैवल्यलक्ष्मीं जिनतीर्थराज्यम् ।
विस्तारयामास गुणौघशक्तिं, श्रीवीतरागार्थविभावनातः ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ पञ्चदशस्तम्भे २११ व्याख्यानम् ॥

## ॥ व्याख्यानम् ॥ २१२ ॥

अथ पूजाविधिः—

निश्चयाद्भव्यजीवेन पूजा कार्या जिनेशितुः । दमयन्त्येव कल्याणसुखसन्ततिदायिनी ॥ १ ॥

स्पष्टः । ज्ञातं चेदं—कोशलापुर्यां निषधो नृपः । तस्य सुतौ नलकूबरौ जातौ । इतो विदर्भदेशे भीमभूपसुता दमयन्ती सर्वाङ्गसुभगा सकलकलाखानिर्वर्धमानाऽष्टादशवर्षाण्यतिचक्राम । ततो भीमनृपः सुताया वरलिप्सया स्वयंवरमारेभे । तत्र नलकूबराभ्यां सह निषधादयो नृपाः समीयुः । ततः स्वप्रतिहारीवर्णनपूर्वकं नलकण्ठे दमयन्ती वरमालां न्यधात् । शुभक्षणे पाणिमोचनपर्वणि नलाय भीमनृपो रथरत्नाश्वेभान् ददौ । कियतो दिनान् यावत्तत्र स्थित्वा पुत्रवधूयुक्तः कोशलान् प्रति प्रस्थितो निषधः । तदा भीमः स्वसुतामनुशास्य न्यवर्तत । मार्गे व्रजन्तः सन्तोऽरण्यं प्रापुः । तदा सूर्योऽस्तं गतः । तमोभरेण मार्गशुद्धिर्निरीक्ष्या जाता । पदे पदे संचलत्तस्य सैन्यं दिङ्मूढं जातं । तदा दमयन्ती स्वभालमुन्मृज्याङ्गरागेण तिरोहितं तिलकमुत्तेजयामास । तस्य तेजसा दम्पती अग्रे प्रतिमास्थितं मुनिमेकमपश्यतां । तदा साधोः शरीरेण सार्धं मदोन्मत्तो वनगजः शुण्डादण्डेन संघर्षणं कुरुते, तेन गजमदः साधुदेहे लग्नः, तस्य गन्धेन भ्रमरा गुञ्जन्तो निःस्पृहं मुनिं पीडयन्ति स्म । ईदृक् साधोः स्वरूपं वीक्ष्य निषधादयस्तं नत्वा तेनोक्तां धर्मदेशनां श्रुत्वा पप्रच्छुः—"अहो! स्वामिन्! दमयन्त्या भालस्थलादुद्योतः कथं प्रादुर्भूतः ?"।

मुनिस्तस्याः प्राग्भवस्वरूपमाह—“पूर्वभवेऽनया पञ्चशताचाम्लानि कृतानि, पुनः श्रीशान्तिनाथस्य पूजा कृताऽभूत्, तपःसमाप्तौ जातायामुद्यापनं विधिपूर्वकं कृतं, चतुर्विंशतिजिनभालस्थले रत्नखचितानि स्वर्णमयानि तिलकानि कारयित्वा समारोपितानि । तत्पुण्यप्रभावादिह भवे सहजस्तिलकाकारः सूर्यख-एडवद्भालस्थल उद्योतो जातः” । इति श्रुत्वाऽमृतसमां वाचं ते हृष्टाः स्वपुरं प्रापुः । ततो निषधो नलं राज्येऽभिषिच्य स्वयं दीक्षामादाय देवभूयमाश्रयत् । ततो नैषधेयस्त्रिखण्डभोक्ताऽभूत् । अथ तद्राज्य-कामुकः कूबरो नित्यं रन्ध्राणि वीक्षते । नलोऽपि बन्धुना सह द्यूतक्रीडां चक्रे । अनेकाप्तशिक्षामवगण-यन् दैवात्क्रमेण स्वपत्नीमप्यहारयत् । कूबरः सानन्दः प्राह—“हे भ्रातः ! मुञ्च महीं स्वस्त्रियं च” । ततो नल एकाकी वस्त्रैकभृन्निरगात् । पौरामात्यैरभ्यर्थ्य भीमजा प्रहिता । महारण्ये पतितौ जायापती मध्य-न्दिनमतीत्य फलाहारैः सायं क्वापि लतागृहे श्रान्तौ रात्रिमतीयतुः । अथ नलो महाबन्धनरूपां स्त्रियं सुप्तां त्यक्तुमिच्छन् गलद्बाष्पो हस्ते छुरिकामादाय निजासृजा तस्याः पटप्रान्ते वर्णानिति लिलेख । यतः—

“वामभूर्वामतः पन्था वटैः कुण्डिनगामुकः । किंशुकैर्दक्षिणेनायं कोशलामुपतिष्ठते ॥ १ ॥

यत्र तव रुचिस्तत्र गन्तव्यं, अहं लज्जितोऽस्मि” इति संलिख्य चचाल । प्रगे पुरो गच्छन्नितः प्रसृतं दवानलमैक्षतानेकजीवाक्रन्दं । तन्मध्ये इति मानुषीं भाषामश्रौषीत्—“हे इक्ष्वाकुकुलावतंस ! मां रक्ष रक्ष” । इति श्रुत्वा इतस्ततः पश्यन् वह्निनिकुञ्जे एकमहिं वीक्ष्येदमाह—“हे महानाग ! कथं मन्नाम त्वया ज्ञायते नृभाषा च ?” । स प्राह—“प्राग्भवजन्मसंस्कारात् वेद्मि, अतो मां रक्ष रक्ष” । नलस्त-

माकर्षत्, सद्यः कृतघ्नः स नृपमदशत्। तद्विषव्याप्त्या नृपः स्वाङ्गं कुब्जाकृति दृष्ट्वा दूनो व्यलपत्। तदा सोऽहिस्तमाख्यत्—"वत्स! तवाहं पिता, मया मायया त्वं वञ्चितः, ब्रह्मलोकतोऽहं समेतोऽस्मि। वत्स! अद्यापि भरतार्धं त्वया भोक्तव्यं, इदं श्रीफलं करण्डिकां च गृहाण। श्रीफलमुन्मुद्य दुकूलानि परिधाय करण्डिकान्तःस्थाभरणानि च निजं रूपमवाप्स्यसि" इत्यादिश्य नृपप्रार्थनया सुसुमारपुर्यां तत्क्षणं मुक्त्वा तिरोऽभूत्। तदा तत्पुरे प्रजासंहारकृन्मत्तगजोपद्रवोऽस्ति, तं स्वबुध्या वशीकृत्यालाने निबध्य स्वयं पौरजनैः सह दधिपर्णनृपान्तिकमाययौ। भूपस्तं कुब्जं सत्कृत्य तद्देशादिकं पप्रच्छ। कुब्जः प्राह—"नलस्य सूपकारोऽस्मि सूर्यपाकरसवतीज्ञश्च। नलस्तु कुरोदरेण सर्वस्वं हारयित्वा सभार्यः क्वापि गतः"। इति श्रुत्वा दधिपर्णः प्रेतकार्याणि सशोकश्चक्रे। ततोऽन्यदोपवनश्रियं पश्यन्तं कुब्जमेको वाडव एत्य गीतान्तरे श्लोकद्वयमिदं जगौ, यतः—

अनार्याणामलज्जानां दुर्बुद्धीनां हतात्मनाम्। रेखा मन्ये नल एव यः सुप्तामत्यजत् स्त्रियम् ॥ १ ॥
विश्वास्य वल्लभां स्निग्धां सुप्तामेकाकिनीं वने। त्यक्तुकामोऽपि जातः किं तत्रैव हि न भस्मसात् ॥ २ ॥

ततः कुब्जः साधु गीतमित्युपश्लोक्य "कस्त्वं? कथं कुत्रेदं नलोदन्तं श्रुतवान्? अथ शेषमग्रे जातमुच्यतां" इत्युवाच। तदा द्विजो जगाद—सा प्रातः स्वपतिमदृष्ट्वा इतस्ततोऽन्वेषयन्ती शोकविह्वला क्वापि पटप्रान्ते तान् वर्णान् वाचयति स्म। तदर्थं प्राप्य वटाध्वना पितृगृहे यामीति विचिन्त्य सा चचाल। अग्रे सार्थेशं लुण्टितुं प्र...त्तान् चौरान् सा हुङ्कारैस्त्रासयामास। ततः सार्थेशः कुलदेवीमिव तां नत्वा

तदास्यतो ज्ञातं श्रुत्वा नलप्रियां ज्ञात्वा तां भगिनीमिव मेने। प्रावृट्काले प्रसृते चिरं विलम्बमाशङ्क्य तमनापृच्छ्य एकाकिनी निर्गता। अग्रे राक्षसोपद्रवैरप्यक्षुब्धा, तत्सत्त्वसंतुष्टः पलादः प्राह—"मा दुःखमुद्वह, द्वादशाब्दानां प्रान्ते तव भर्तृसमागमो भावी"। ततो गिरिकन्दरां प्राप्य मृण्मयं श्रीशान्तिनाथबिम्बं संपूज्य स्वभावपतितवृक्षफलैः कृतपारणा सा तस्थौ। वृष्ट्यन्ते सार्थपः श्रीशान्तिबिम्बपूजापरां तां वीक्ष्य हृष्टस्तद्वचसा जैनीभूय तस्थौ। तद्वनवासितापसपञ्चशती तद्वाग्भिः प्रबुद्धा, तत्र तापसपुरं जातं। तत्रैकदा यशोभद्रसूरयः समीयुः। वैदर्भ्या पृष्टास्ते पूर्वभवं जगुः—"प्राग्भवे त्वं मम्मणनृपस्त्री वीरमती नामाभूः। अन्यदा दम्पतिभ्यां क्वापि गच्छद्भ्यां संमुखो मुनिर्दृष्टः, सोऽकुशलं ज्ञात्वा द्वादश नाडिका यावद्धृतः, क्षणान्तरे युवाभ्यां स क्षामितः, तेनायं द्वादशाब्दिको युवयोर्विरहो जातः। एकदा कश्चिदेत्य तां बभाण—"तव पतिरधुना नातिदूरे मया दृष्टः"। श्रुत्वा सा शीघ्रं वने विलोकितुं गता। तत्रोत्पन्नो राक्षस्या उपद्रवः शीलेन स्तम्भितः। क्रमेणाचलपुरं प्राप्ता। तत्पुरेशपत्नी भैमीमातुःष्वसा चन्द्रयशाह्वा तां सुशीलां दृष्ट्वा गृहेऽनयत्। साऽथ सत्रे दानं ददौ। तत्र पिङ्गलनामानं वध्यं चौरममोचयत्। अथ हरिविप्रः कुण्डिनात् समेतः, दानग्रहणार्थं गतः, तत्र दमयन्तीं वीक्ष्य तेन तन्मातृष्वस्रे निवेदितं सर्वं मूलज्ञातं। ततश्चन्द्रयशा तां गृहे नीत्वोपालभ्य भागिनेयीं बहुयुक्त्या सत्कृत्य पितृगृहे साडम्बरं प्रेषितवती।

इतश्च स्वकार्यार्थं भीमदूतो दधिपर्णान्ते प्राप्तः। तत्र नलसूपकृत् कुब्जः सूर्यपाकरसवतीज्ञः, तद्वर्णनं

पदे पदे पुरमध्ये श्रुत्वा स्वपुरेशं प्रति तन्निवेदयामास । दूतवाक्यं श्रुत्वा भीमो मां विप्रं अत्र प्रेषयामास । "हे कुब्ज ! त्वां वीक्ष्य सखेदोऽहमस्मि, यतः—

क्व कल्पवृक्षः क्वैरण्डः क्व माणिक्यं क्व च दृषत् । दृष्ट्वा त्वामद्य मे चित्ते कुब्जो भैमीमनोरथः ॥ १ ॥"

इति श्रुत्वा भूयः कुब्जो रुदित्वा विप्रं सूर्यपाकरसवतीं भोजयित्वा बहु काञ्चनं ददौ । ततो विप्रेण तत्स्वरूपं लक्षटङ्कादिदानं रोदनं च भीमाय निवेदितं ।

भैमी प्राह ततस्तात नात्र कार्या विकल्पधीः । विज्ञेयः कुब्जरूपेण स्वजामातैव स ध्रुवम् ॥ १ ॥

ततो भीमो मिथ्या स्वयंवरं प्रारभ्य सुसुमारेशमाह्वातुं नरान् प्राहिणोत् । यतः—

नलः सपदि तत्तेन सार्धं नूनं समेष्यति । भार्यापराभवो यस्मात् पशूनामपि दुःसहः ॥ १ ॥

दधिपर्णनृपस्तु कुब्जसारथिसाहाय्येन तस्मिन्नेव दिने भीमपुरे गतः रविपाकरसवतीं कुब्जेन कारयित्वा सपरिच्छदं भीमभूपमभोजयत् । ततो दमयन्त्याह—

निषधात्मज एवायं कुब्जरूपेण तिष्ठति । तात श्वेताम्बरमुनेर्वचो भवति नान्यथा ॥ १ ॥

तदनु लज्जापूर्वकं स्वामिनं साऽमुं श्लोकमश्रावयत्—

उत्कण्टके च जातेऽङ्गे भीमजा स्पष्टमब्रवीत् । सुप्ता मुक्ता तदा नाथ कथं मोक्ष्यसि जाग्रतीम् ॥ १ ॥

तदनु नलः सर्वं स्वरूपं प्रकटीचकार । ततो भीमराट् नैषधं स्वासने निवेश्य हर्षप्राञ्जलिर्जगौ—

राज्यं प्राज्यमिदं चैताः संपदो विधुतापदः । वयमादेशकर्तारो यथारुचि नियोज्यताम् ॥ १ ॥

दधिपर्णोऽपि नलं वीक्ष्य नत्वा ससंभ्रमं प्राह—"यदज्ञानान्मयाऽऽचीर्णं हे देव! तत्त्वया क्षम्यतां"। ततो नलः सर्वभूपालैः द्विधाऽपि सबलैः सह सैन्यभरेण काश्यपीं कम्पयन् कोशलां प्रति प्रतस्थे। रणाङ्गणे हेलामात्रेण कूबरं निर्जित्य स्वयं राज्याधिकारी बभूव। यतः—

भरतार्धनृपाः सर्वे नलं भेजुरुपायनैः। मारेर्निवारणं सोऽपि यावदाज्ञमथाकरोत्॥ १॥

क्रमेण पुष्कलनामानं सुतं राज्ये निवेश्य तौ दम्पती श्रुतसम्मतां जैनीं दीक्षां जगृहतुः। ततः—

स्वभावसुकुमारत्वात्संयमे शिथिलाशयः। पुनर्दृढीकृतः साधुरेत्य निषधनाकिना॥ १॥
मनः कथञ्चिद्रुन्धानो भैम्याः कामवशंवदः। शिश्रायानशनं दीक्षापालनापत्यलो नलः॥ २॥
मृत्वा कुबेरनामाऽभूदुत्तराशापतिः सुरः। भीमजाऽप्यभवत्तस्य कान्ताऽनशनमृत्युना॥ ३॥

ततः कालक्रमेण दमयन्ती द्वारिकायां वसुदेवप्रिया कनकवती नाम जाता। जैनधर्मरक्ता सांसारिकसुखमनुभवन्ती विचरति स्म। तदवसरे श्रीनेमिनाथः समवसृतः। कृष्णः सर्वर्द्ध्या वंदितुं गतः। भगवद्भिर्धर्मदेशना कथिता। देशनान्ते कृष्णेन पृष्टं—"हे स्वामिन्! एषा द्वारिका नगरी सक्षया किंवाऽक्षया भविष्यति?"। तदा स्वामिना प्रोक्तं—"हे कृष्ण! अस्या नगर्या द्वैपायनर्षितो भ्रंशो भावी"। इति श्रीनेमिपार्श्वे द्वारिकादाहं श्रुत्वा बहवो यादवकुमाराः तथा यादववंशीया नार्यः प्रव्रज्यां प्रपेदुः। तदा वसुदेवभार्या द्वासप्ततिसहस्रसंख्याकास्ता अपि प्रभुपार्श्वे दीक्षां जगृहुः। तदा कनकवती गृहे

स्थिता सती परमभावनां भावयन्ती शुक्लध्यानं ध्यात्वा केवलज्ञानं प्राप्ता देवदत्तमुनिवेषं प्राप्य कर्मक्षयं कृत्वा मुक्तिं गतेति ॥

॥ इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ पञ्चदशस्तम्भे २१२ व्याख्यानम् ॥

## व्याख्यानं ॥ २१३ ॥

अथ दीपपूजा—

जिनेन्द्रस्य पुरो दीपपूजां कुर्वन् जनो मुदा। लभते पृथुराज्यादिसंपदं धनदुःस्थवत् ॥ १ ॥

अत्र ज्ञातं चेदं—इहेव जंबूदीवे भारहे वासे दाहिणड्ढभरहे मगधदेसे पउमपुरं नाम नयरं होत्था। तत्थ कलाकेलिनामा राया होत्था। वण्णओ। तस्स रण्णो पण लक्खा तुरया आसी, हत्थया मयमत्ता, रहाणी अस्ससंखा न नज्जइ। एरिसी रज्जसंपया लद्धा पुण्णप्पभावओ। एवं रज्जसिरिं कारेमाणे भोगाइं भुंजमाणे सुहंसुहेण कलाकेलीराया विहरइ। अह अन्नया कयाइ पउमवणे चेइए पोमुज्जाणे तेवीसमो तित्थंकरो अणेगगणहरसाहुपरिवारसंजुओ भुवणवइवाणवंतरजोईसविमाणवासिदेवकोडीहिं परिवुडो पासो पुरिसादाणीओ केवली सवन्नू सबदरिसी समोसरिओ। चउविहसुरगणेहिं समोसरणं रइयं। इत्थ

समोसरणवत्तव्वया नाणियव्वा, जाव पुव्वदारेण समागया पहु सीहासणे उवविठा, बारस परिसा आगया। कलाकेलिराया अन्नेऽवि णयरवासिणो लोगा वंदणत्थं समागया। ता तीए महइमीलयाए परिसाए पुरउ धम्मो कहिउ, तं जहा—

"मन्नह जिणाण आणं मिछत्तं परिहरह धरह सम्मत्तं। छव्विह आवस्सयम्मि य उज्जुत्ता होइ पइदिवसं ॥१॥
पव्वेसु पोसहवयं दाणं सीलं तवो य नावो य। सज्झाय नमुक्कारो परोवयारो य जयणा य ॥ २ ॥
जिणपूआ जिणथुणणं गुरुथुई साहम्मियाण वछ्छं। सव्वविरइमणोरह एमाइं सड्ढकिच्चाइं ॥ ३ ॥

नो नो नवजीवा! मोहाइअठकम्मवसेण संसारिजीवो चउगइ संसारघोरकंतारे जम्ममरणाइदुक्खबहुले वारंवारं परिन्नमइ। सो अकामनिज्जरापुण्णोदयउ अव्ववहाररासीउ ववहाररासिम्मि आगछ्इ। अहापवित्तिकरणाउ जीव सत्तकम्मपयडीणं संपत्तेयं संपत्तेयं एगा कोडाकोडीउ कुणइ, पलिअस्स य असंखिज्जनागूणा एगा कोडाकोडी करइ। गिरिनिवडियउवलनाएण लहुठिइ करेइ, सुहणं नावं बंधइ। तउ अहापवित्तिकरणेणं जीवा बायरपुढविसु पज्जत्तनावे उपज्जइ। तउ पछा कोई नवजीवो सन्निपंचिंदिउ मणुस्सेसु परित्तसंसारी आरियखित्ते सुकुले उपज्जइ। तउ माणुस्सखित्तकुलगुरु इच्चाइ धम्मसामग्गीं पप्प सुद्धप्पसहावं एवं चिंतेइ, अहवा गुरूवदेसाउ अप्पधम्मनावणं नावेइ, तं जहा—एसो मम अप्पा असंखिज्जपएसिउ दव्वठ्याए एगो पज्जवठियाए अणेगपरिणामइउ नाणदंसणसुद्धगुणपज्जवमउ अणंता अत्थिधम्मा अणंता नत्थिधम्मा अणेगसामन्नविसेसधम्मा समत्थपुग्गलनावरहिउ तिहुवि कालेण वत्थु-

गतभावओ अणंतचउओ कम्मपयडिओ सागारोवओगरूवो अणागारोवओगसहावो कयाचि-पि चेयणभावं न जहइ, एसो मे अप्पा सासओ असरीरी अलेसी अजोगी अकसाई अकिलेसी परमचिदानंदसरूवी दव्वट्ठियमुक्कयाए निच्चो पज्जवट्ठियाए से णं अणिच्चो रयणत्तयमइओ अप्पा सद्धाभासणरमणलक्खणो निमित्तधम्मेण उवादाणपरिसुज्झे, तेण कारणेण जीवो सुद्धरूवो निच्चं झायव्वो”। एयारिसी अमियसरिसी पासनाहेण धम्मदेसणा कहिआ। तं निसम्म रायाइया पुरजणा हट्ठतुट्ठ चित्तमाणंदिया पइमणा परमसोमणसिया हरिसवसविसप्पमाणहियया धाराहयकयंबपुप्फोवचियसमुस्ससियरोमकूवा अहिमिज्जापज्जंतधम्माणुरागरत्ता जाया। केइ जीवा चारित्तधम्मं पडिवन्ना, दुवालसविहं सावगधम्मं पडिवन्ना, पुणरवि केऽवि जीवा राइभोयणविरमणअणंतकायवज्जणअभक्खभोयणपरिहाणिवासीविदलवज्जणाइपच्चक्खाणं करेइ। तयाणंतरं परिसा पडिगया। तओ पच्छा कलाकेली राया करकमलं संयोजिऊण पुच्छइ—“अहो भयवं! करुणासायर! जयपरमभंकार! भुवणदिणेसर! केण कम्मुणा मए रज्जसिरी पत्ता? तस्स कारणं मम परिकहय”। तया पाससामिणा भणियं—“अहो नरेसर! तव पुव्वभवचरित्तं सुणेह—तेणं कालेणं तेणं समएणं इहेव जंबूदीवे भारहेवासे दाहिणड्ढभरहे अंगजणवए रम्मापुरी होत्था। जियारिनिवो रज्जं करेइ। तत्थ पुरि एगो धणनामा निद्धणो वाणिओ परिवसइ। सो येण तेण आजीविआएणं उअरपूरणं करेइ। अन्नया कयाइ रम्मापुरीआसन्नउज्जाणे वावीसमो तित्थयरो बालबंभयारी अट्ठारसगणहरसंजुत्तो अट्ठारससहस्ससाहुपरिकलिओ छत्तीससहस्सअज्जिआगणाण परिवरिओ नेमिनाहभगवओ

नीलुप्पलदेहधरो दसधणुउच्चूढसरीरो चउविहदेवनिकायसंसेवियचलणो (समोसरिउ)। देवेहिं समोसरणं रइयं। समज्ञागे सीहासणे सामी उवविठो। परिसा आगया। धम्मो कहिउ। तं जहा—

"ज्ञवे जीवा विबझंति मुच्चंतिय तहेव य। सबं कम्मं खवेऊण सिद्धिं गछइ नीरया॥ १॥"

इच्चाइधम्मदेसणासमए धन्नवाणिउ आगउ। तम्मि समए ज्ञगवया एवमुवदिस्सइ—"जो ज्ञवजीवो जिणेसरस्स पुरउ दीवपूअं कुणइ सो नरो रज्ञसिरी पाविऊण मुरकं गछिजाइ"। एवं धम्मोवएसं सोच्चा निसम्म हठतुठो धणो मणसि एवं चिंतेइ—"अहं जिणेसरस्स अग्गे दीवपूअं निरंतरं करेमि" एवं अज्ञिग्गहं गिएहेऊण नेमिनाहं वंदिऊण नियगेहे धणो गउ। तउ पच्छा विहिपुवं दीवपूआ निरंतरं कुणइ, जहा जीवहिंसा न ज्ञवइ तहा नियरयणत्तयजोइउज्जोअनिमित्तं विहेइ। एवं कारेमाणे मणुस्सीउणं बंधिऊण कलाकेलिनामा राया तुमं एरिसी लछी पत्ता। एरिसं धम्मुवएसं पाससामिणा ज्ञणियं निसम्म हठतुठो कलाकेलिनिवो पइदिवसं विसेसउ दवज्ञावे पूया करेइ, सुहं सुहेणं चिठइ, परंपरया सिझिस्सति॥

विधिसमन्वितबोधविकासकृ–द्विविधदीपकपूजनकारकः।
जिनगृहे निजजाड्यहरे कृते, दधतु दीपमदो नृपवज्ञनाः॥ १॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ
पंचदशस्तम्ज्ञे २१३ व्याख्यानम्॥

अथाल्पाक्षरपठनेनापि सुखं स्यादित्याह—

ज्ञानं शिक्षयेदल्पं हि भवेत्तन्न निरर्थकम् । स्वल्पाक्षरमहिम्नाऽपि यवेन जीवो(नात्मा हि) रक्षितः ॥ १ ॥

स्पष्टः । यवर्षिसंबन्धश्चायं—विशालायां यवनामा राजा । तस्याङ्गजो गर्दभिल्लः, सुता चाणुल्लिका । अमात्यो दीर्घपृष्ठश्च । नृपोऽन्यदा निशान्तसमये प्रबुद्धोऽचिन्तयत्—"नूनं प्राग्भवे किमप्यद्भुतं सुकृतं मया कृतं, तस्य प्रभावादब्धिमेखलां भुवमखण्डिताज्ञः शास्मि, तत्पुनः सुकृतं कुर्वे यत आगामिभवोऽपि सुन्दरः स्यात्" इत्यादि । ततः प्रातः सुतं राज्ये न्यस्य सुहितमनुशिष्य च वनप्राप्तान् गुरून्नत्वा तदुपान्तेऽग्रहीद्व्रतं । तीव्रं तपस्तपति । वैयावृत्त्यरतः सह गुरुभिर्विहरति । परं गुरुभिर्बहूक्तोऽपि श्रुतं न पठति, "वृद्धोऽहं, मम नायाति पाठ" इत्यादि ब्रूते । अन्यदा लाभं दृष्ट्वा श्रीगुरुभिः सुतं प्रतिबोधयितुं विशालायां प्रहितः । गुरुवचः शिरसा प्रपद्य चलितः । पथ्यचिन्तयत्—"मम पाठः स्वल्पोऽपि नायाति, ततः पुत्रस्यान्येषां च किमुपदिश्यते ?" इति । अत्रान्तरे क्वचित्क्षेत्रे यवधान्यं भक्षयितुकामं भिया चपलदृशं खरं प्रति क्षेत्रपालेन गाथैका प्रोचे—

उंहावसि पहावसि ममं चेव निरिक्कसि । लक्खिउं ते अभिप्पाउं जवं पत्थेसि गद्दहा ॥ १ ॥

तां श्रुत्वाऽमोघायुधं प्राप्तमिवामन्यत, राजर्षिर्महाविद्यामिव तां स्मारं स्मारं ग्रामाद्बही रममाणेषु शिशुषु

एकेन काष्ठखण्डरूपाऽणुल्लिकोत्क्षिप्ता, साऽन्यैः शिशुभिर्गवेषयद्भिर्न दृष्टा, तावदेकेन शिशुना गाथोचे—
अर्उ गया तर्उ गया जोइज्जंति न दीसई। अम्हे न दिठ्ठी तुम्हे न दिठ्ठी अगडे बूढा अणुल्लिआ ॥ २ ॥
साऽपि मुनेर्मुखे शीघ्रं समागता। तां पुनः पुनः पठन् कियद्भिर्दिनैर्विशालायां प्राप्तः, कुम्भकारगृहे निश्यस्थात्। तत्रेतस्ततो भ्रमन्तं मूषकं प्रति कुम्भकृदूचे—

सुकुमालयकोमलभद्दलया तुम्हे रत्तिहिंरुणसीलणया।
अम्ह पसार्उ नत्थि ते भयं दीहपिठ्ठार्उ तुम्ह भयं ॥ ३ ॥

एतां गाथात्रयीं कल्पद्रुचिन्तामणिकामधेनुत्रयीमिव प्राप्तां मेने स मुनिः पुन पुनः परावर्तयते च। अत्रान्तरे तत्र पुरे दीर्घपृष्ठामात्येन राज्ञः स्वसाऽणुल्लिका स्वगृहान्तर्भूगृहे गोपिताऽस्ति भूपं केनाप्युपायेन निहत्य स्वसुतं राज्ये निवेश्य तेनैतस्याः पाणिग्रहणं कारयिष्यामीति कृत्वा। राज्ञो भटैः शोधिताऽपि स्वसा न लब्धा। तावन्मन्त्री यवराजर्षिमागतं श्रुत्वा "तपसा ज्ञानप्राप्तोऽयं भावी, ज्ञानेन च ज्ञात्वा मत्स्वरूपं नृपाय निवेदयिष्यति चेत्तदा नृपः सकुलं मां निग्रहीष्यति, अतः कमप्यनागतमुपायं करोमि" इति ध्यात्वा निश्येव नृपसमीपं प्राप्तः। भूपेनानवसरागमनहेतुं पृष्टः प्राह—"व्रताग्रस्ते पिताऽत्रागत्य कुम्भकृद्गृहे स्थितः प्रातस्त्वद्राज्यं ग्रहीष्यति"। इत्याकर्ण्य नृपः प्रोचे—"पिता चेद्राज्यं लाति तर्हि भाग्यं मे, तत्पादौ सेविष्ये"। मन्त्री प्रोचे—"नैतद्युक्तं, स्वराज्यं नार्प्यते, वध्यः पिता कोणिकवत्" इतिविविधयुक्तिभिर्मन्त्रिणा कपटवृत्त्या प्रतिपादितो नृपः पितुर्वधाय निशीथे खड्गहस्तः कुम्भकृद्गृहे

गतः । कपाटच्छिद्रेण पितरं वीक्षते तावद्यवर्षिणा सहजबुध्ध्याऽऽद्या गाथा गुणिता । तां श्रुत्वा दध्यौ—"अहो ! ममाभिप्रायोऽनेन ज्ञातः, यतः, स कथयति—उंहावसि० किं यवं यवार्षं भक्षयसि त्वं हे गद्भहा हे गर्दभिल्ल !" इति स्वमत्या नृपेणार्थो निर्णीतः । पुनर्दध्यौ—"मत्पित्रा ज्ञानेन ज्ञातोऽहमितस्ततः पश्यन्, अपि च यद्ययं ज्ञानी सत्यस्तर्हि मम स्वसुः शुद्धिं वक्ति" इति चिन्तनकाले एव मुनिना द्वितीया गाथा गुणिता । तेन तां श्रुत्वाऽयमर्थश्चिन्तितो नृपेण—"सर्वत्र गवेषिताऽपि साऽणुल्लिकाऽगरूभूमिगुप्तगृहे क्षिप्तास्ति" इत्यवगम्य जातप्रत्ययः पुनर्दध्यौ—"मत्स्वसा येन गोपिता तन्नाम प्रकाशयति चेत्तदा वरं" । तावत्तृतीया गाथा परावर्तिता । तां श्रुत्वा तस्या अर्थोऽयं ध्यातः—"त्वं सुकोमलोऽसि, रात्रौ गमनं त्वदीयं शीलं आचारः, अस्मत्तस्त्वं बिभेषि परमस्मत्प्रसादात्ते भयं न, किंतु दीर्घपृष्ठाह्वस्त्वन्मन्त्री तत्कृतं भयं तवास्ति" । ततो भग्नसंदेहो द्वारमुद्घाट्य पितरं ज्ञानिनं जिघांसुं स्वं निन्दन्नुदश्रुर्मुनिं नत्वा स्वापराधप्रकाशनपरः क्षमितवान् । मुनिर्मौनमेवाकरोत् "तदेव हि सर्वार्थसाधनं" इति । ततो नृपः स्वगृहागतो रात्रिशेषमतिवाह्य प्रातर्मन्त्रिगृहं भटैः शोधयित्वा भूमिगृहे भगिनीं लब्ध्वा मन्त्रिणं देशान्निरकासयत् । ततो ज्ञानिनं मुनिं प्रशस्य तं च नत्वा तदुक्तं धर्मं प्रत्यपद्यत । पौरैश्च सह बन्धुवर्गं प्रतिबोध्य यवर्षिगुरुपार्श्वे गतः गुरवोऽपि तदुक्तं श्रुत्वा विस्मयं प्रापुः ।

त्यक्त्वालस्यं श्रुतं पश्चात् पपाठ विनयान्वितः । पठनाध्ययफलं दृष्ट्वा तपस्तप्त्वा शिवं ययौ ॥ १ ॥

अथ व्यतिरेकेण ज्ञातमाह—

यैर्नाधीतः श्रुतग्रन्थः कर्णाघातेन यच्छ्रुतम् । स्वमतिकल्पनापूर्वं वदेत्स मौढ्यमश्नुते ॥ १ ॥

स्पष्टः । अत्रार्थे वक्ष्यमाणं ज्ञातं—कस्मिंश्चिद्गच्छे गुरुभिः स्वायुःपर्यन्तमवगम्य उपदेशात् किञ्चिच्छ्रुतज्ञः स्थूलसामाचारीज्ञ उत्सारकल्पं कृत्वाऽनूचानपदे स्थापितः । अनधीतागमोऽपि गुरुमहिम्ना सर्वत्र ख्यातिं प्राप्तः । अन्यदा विहरन् पृथ्वीपुरे प्राप, श्राद्धैः प्रौढोत्सवः कृतः । तत्र पुरे प्राग्जैनाचार्यैः परे वादिनो नृपसभायामनेकशः पराभूतास्ते च तदानीं पुनस्तस्योन्नतिं वीक्ष्येर्ष्यालवः प्राग्जितत्वेन पुनः स्वमहत्त्वहतिभीरवः सूरेः शास्त्रपरिज्ञानपरीक्षां चिकीर्षवः स्ववर्गीयमेकं श्राद्धं तस्य पार्श्वे प्रेषुः । स च सूरिमन्यदाऽप्राक्षीत्—"भगवन् ! पुद्गलस्य कतीन्द्रियाणि ?" । ततः सूरिर्लब्धश्रुतार्थश्चिरं विमृश्य प्राक् क्वचिच्छ्रुतं—"पुद्गलः समयेन लोकान्तं यावद्गच्छति" इत्यस्मार्षीत्, "पञ्चेन्द्रियं विना कथमेतावती शक्तिः?" इति स्वहृदि निर्धार्य स्वमत्या न तु गीतार्थादिसापेक्षतया तं प्रत्युत्तीर्णवान्—"हे भद्र ! पुद्गलः पञ्चेन्द्रियः" । इति श्रुत्वा "स्वसमयेऽप्येतस्य ज्ञानं नास्ति परसमयादिपरिज्ञानं पुनः कुतः ?" इत्येवं विचार्य लब्धतज्ज्ञानपारैस्तैर्वादिभिर्नृपसभायां स पराबभूवे, जाता च महती श्रीजिनमतापभ्राजना बहूनां धर्महानिश्च । ततः सङ्घेन स दूरतरं विहारितः । इति कल्पवृत्तौ । एवंविधाश्च गुरवश्चारित्रभृतोऽप्युपदेशपरा अपि तादृग्ज्ञानविकलत्वादुत्सूत्रमपि प्ररूपयन्तीति स्वाश्रितान् भवाब्धौ प्रत्युत मज्जयन्ति । अबहुश्रुतस्य धर्मदेशनामपि कर्तुं न युज्यते उत्सूत्रभाषणादिति तत्त्वं ॥

इति विविधनिदर्शनैर्निबुध्य, प्रकटगुणं श्रुतगोचरं विचारम् ।
भवरिपुविजयार्थमाश्रयध्वं, श्रुतवरसूरिमवाप्य सद्विवेकम् ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ पञ्चदश-
स्तम्भे २१४ व्याख्यानम् ॥

## ॥ व्याख्यानम् ॥ २१५ ॥

ज्ञानस्य विराधना न कर्तव्येत्याह—

जघन्योत्कृष्टभेदाभ्यां त्याज्या ज्ञानविराधना। ज्ञानस्य ज्ञानिनां भक्तिर्वृद्धिर्नेया च धर्मिभिः॥ १ ॥

स्पष्टः। ज्ञानस्य जघन्यविराधना चेत्थं—पुस्तकपट्टिकास्थापनिकारुमालघटीलेखिनीप्रमुखज्ञानोपकरणानां चरणादिना संघट्टनमनाछादितमुखेन च शास्त्रभणनं पाठनं च, पुस्तकस्य कक्षायां रक्षणं च। आहारनीहारभोगादिसमये शब्दोच्चारणादिना महाज्ञानावरणीयकर्मणो बन्धः स्यात्। पत्रपुस्तकलिखितकग्गला(लेखा)दिनि स्वपार्श्वे सति लघुनीतादिकरणान्महाज्ञानावरणीयकर्मणो बन्धः स्यात्। नवकारवालीपुस्तकादिपूज्योपकरणैः सह मुखपट्टीरजोहरणस्य संपर्को न कार्यः। मुखनिष्ठ्युतादिभिरुच्छिष्टा जाता वखिका पुस्तकैः सह स्थापनागुरुणा च साकं न रक्षणीया, भिन्नैव धार्या, अन्यथा महाज्ञानावरणीय-

कर्मबन्धः । पुस्तकसंबन्धिरुमालाद्यपि केवलभूमिस्पर्शनाद्रक्षणीयं । लिखितपत्रखण्डदलमपि उच्छिष्टभूमितो गृहीत्वोन्नतस्थाने स्थाप्यं, तेन ज्ञानस्फुरणं स्यात् । अस्य तु महिमा सम्प्रतिकालेऽपि प्रत्यक्षेण दृष्टोऽस्ति । लिखितपत्राणि सर्वथा न विक्रेयाणि । लोभार्थीभूय कुट्टककरणार्थं न देयानि । तथा दीपोत्सवादिषु गन्धकादिनोत्पन्नदारुभिः शृङ्गाटकफूत्कणिकाटोट्टकादयो जायन्ते तेषामर्थे न देयानि न ग्राह्याणि न विक्रेतव्यानि च, यतस्तन्मध्ये यान्यक्षराणि तानि भस्मसाद्भवन्ति, तेन महाज्ञानावरणीयकर्मबन्धः । पुस्तकादि उच्छीर्षके न स्थाप्यं, तदुपरि च न स्थेयं, तेन महाज्ञानावरणीयकर्मबन्धः । इत्यादिप्रकारा विवेकिभिः स्वयमभ्यूह्याः । उत्कृष्टविराधना चेत्थं ज्ञेया—श्रीमज्जिनागमसूत्रार्थोभयवितथकरणमुत्सूत्रभाषणं मरीचिजमालिलक्ष्मणार्यासावद्याचार्यादीनामिव न कार्यं, तेन महाज्ञानावरणीयकर्मबन्धः । अथ ज्ञानस्य ज्ञानिनां च भक्तिस्तथा वृद्धिश्चेत्थं विधेया, तथाहि—पुस्तकानां जिनागमजिनचरित्रादिसत्कानां न्यायार्जितद्रव्येण विशिष्टपत्रविशुद्धाक्षरादियुक्त्या लेखनं, तथा वाचनं संविग्नगीतार्थेभ्यः प्रौढप्रारम्भाद्युत्सवैः प्रत्यहं पूजादिबहुमानपूर्वकं व्याख्यापनं चानेकभव्यप्रतिबोधहेतोर्विधेयं । तद्वाचनभणनादिकृतां वस्त्रादिभिरुपष्टम्भदानं । श्रुतं हि दुःषमाकालवशाद्द्वादशवर्षीयदुर्भिक्षादिभिरुच्छिन्नप्रायं मत्वा भगवद्भिर्नागार्जुनस्कन्दिलाचार्यप्रभृतिभिः पुस्तकेषु न्यस्तं । ततः तल्लेखनीयं दुकूलादिभिः पूज्यं च । श्रीधर्मघोषसूरिदत्तोपदेशेन संघविपेथडेनैकादशाङ्गी सूरिमुखाच्छ्रोतुमारब्धा । तत्र पञ्चमाङ्गमध्ये यत्र यत्र गोयमेतिपदमेति तत्र सुवर्णटङ्कैः पुस्तकं पूजयति । प्रतिप्रश्नं मुक्ताः सौवर्णिकाः ।

षट्त्रिंशत्सहस्रमितवहुद्रव्यव्ययेन समग्रागमपुस्तकलेखनपट्टकूलवेष्टनयुताः सप्त ज्ञानकोशा भृगुकच्छसुरगिरिमण्डपदुर्गार्बुदाचलादिस्थानेषु चक्रिरे। तथा श्रीकुमारपालेन सप्तशतीलेखकपार्श्वात् षड्लक्षषट्त्रिंशत्सहस्रागमस्य सप्त प्रतयः सौवर्णाक्षरा हेमाचार्यप्रणीतसार्धत्रिकोटिश्लोकानामेकविंशतिप्रतयो लेखिताः, एकविंशतिज्ञानभाण्डागाराः कारिताः। यतः—

> कालानुभावान्मतिमान्द्यतश्च, तच्चाधुना पुस्तकमन्तरेण।
> न स्यादतः पुस्तकलेखनं हि, श्राद्धस्य युक्तं नितरां विधातुम्॥ १॥

जिनप्रतिमाविधानतो हि (ऽपि) शास्त्राङ्कलेखने श्रवणे च महत्पुण्यं, यतो ज्ञानेन विना तस्या महत्त्वं कथं ज्ञायते? अतो ज्ञानकोशा धर्मसत्रागारा इव भान्ति। पुस्तकैर्विना पाण्डित्यमपि नायाति गुरूणां नव्यशिष्याणां च, इत्याद्युपदेशान्मन्त्रिवस्तुपालेनाष्टादशकोटिद्रव्यैस्त्रयो ज्ञानकोशा लेखिताः। स्थिरापद्रीय संघविश्राजूनाम्ना तु त्रिकोटिटङ्ककैः सर्वाङ्गप्रतिरेका सौवर्णाक्षरैर्द्वितीया च सर्वग्रन्थप्रतिर्मषीवर्णैर्लेखिता। यतः—

> न ते नरा दुर्गतिमाप्नुवन्ति, न मूकतां नैव जडस्वभावम्।
> नैवान्धतां बुद्धिविहीनतां च, ये लेखयन्त्यागमपुस्तकानि॥ १॥

तथा जिनागमस्य च केवलज्ञानादप्यतिशायिता दृश्यते। यदाहुः—

उद्दोसु उवउत्तो सुअनाणी जइ वि गिएहइ असुद्धं ।
तं केवली वि भुंजइ अपमाणं सुअं भवे इहरा ॥ १ ॥

अतः सम्यक्सूत्रार्थोपयोगपूर्वं सततं सदनुष्ठानं विधेयं । उपयोगं विना द्रव्यरूपतां भजतीति ।

अथ ज्ञानविराधनोद्भवपापानि ज्ञानपञ्चम्याराधनतो निष्फलानि भवन्तीत्याह, इन्द्रवज्राछन्दः—

उत्सूत्रजल्पाच्छ्रुतिशब्दव्यत्ययात्, क्रोधादनाभोगहठाच्च हास्यतः ।
बद्धानि यज्ज्ञानविराधनोद्भवात्, कर्माणि यान्ति श्रुतपञ्चमीव्रतात् ॥ १ ॥

स्पष्टः । भावार्थस्तु गुणमञ्जरीवरदत्तज्ञातेन विचार्यः, तथाहि—

अत्र भरते पद्मपुरस्वाम्यजितसेननृपोऽभूत् । तस्य प्रिया सुशीलप्रिया यशोमती राज्ञी । तयोस्तनुजो वरदत्ताह्वः । जाताष्टवर्षोऽसौ पठनार्थं पाठकान्तिकेऽजस्रं पठति, परमेकमप्यक्षरं तन्मुखे न स्फुरति । क्रमेण यौवने पूर्वकर्मविपाकोदयात् कुष्टैर्विनष्टदेहोऽभूत् । इतश्च तत्रैव पुर्यां सप्तकोटिसुवर्णाधिपः सिंहदासाह्व इभ्योऽस्ति । तस्य कर्पूरतिलका भार्या । तयोरात्मजा गुणमञ्जरी शैशवात्सामयदेहा मुखे मूकत्वं च प्राप्ताऽस्ति । तद्रोगनिवर्तनार्थं कृता अनेके उपाया ऊषरक्षेत्रे वृष्टिरिव खलवाक्यमिव शरद्गर्जितमिव निष्फला जज्ञिरे । षोडशवर्षायास्तस्या न कोऽप्युद्वाहं करोति । एकदा तत्र चतुर्ज्ञानधराः षट्त्रिंशत्यधिकद्वादशशतगुणाकराः स्वधैर्याधरीकृतमेरवो विजयसेनगुरव आययुः । तदागमनं वनपवाक्याच्छ्रुत्वा पारि-

तोपिकं दत्त्वा सपौरो नृपो वन्दनार्थमागत्य विधिना नत्वा गुरोः पुरः स्थित्वा देशनां शुश्राव । यतः—

क्षपयेन्नारकः कर्म बह्वीभिर्वर्षकोटिभिः । यत्तदुच्छ्वासमात्रेण ज्ञानयुक्तस्त्रिगुप्तिमान् ॥ १ ॥

छट्ठट्ठमदसमदुवालसेहिं अबुहस्सुअस्स जो सोहि । इत्तो अ अणेगगुणा सोही नाणिस्स जिमिअस्स ॥२॥

ज्ञानं पञ्चविधं प्रोक्तं, तथाप्यत्र श्रुतं स्वपरोपकारितया विशिष्टं । मूकं ज्ञानचतुष्टयं स्वस्वरूपं नैवाभिधातुं क्षमं, दक्षं चात्मपरप्रकाशनविधौ सम्यक्श्रुतं दीपवत् । दाने ग्रहणे च श्रुतमेव क्षमं, न पुनः शेषाणि कश्चित्क्षमो दातुं । तीर्थंकरनामकर्मापि धर्मोपदेशेनैव निर्जरत्वं नीयते । अतोऽध्ययनश्रवणादिभिः सततं ज्ञानस्याराधने यत्नो विधेयः । अज्ञानिजीवास्त्रिभिर्योगैर्ज्ञानस्याशातनां कुर्वन्ति, ते सरोगदेहत्वं शून्यमनस्कत्वं चानुभवन्ति, बहुभवभ्रमणं च । यतः—

अज्ञानतिमिरग्रस्ता विषयामिषलम्पटाः । भ्रमन्ति शतशो जीवा नानायोनिषु दुःखिताः ॥ १ ॥

इत्यादिदेशनां श्रुत्वा सिंहदासो व्यजिज्ञपत्—"भगवन् ! मत्सुतातनौ केन कर्मणा व्याधयो जाताः?"। सूरिरुवाच—"हे श्रेष्ठिन् ! शृणु अस्याः पूर्वकर्माणि—धातकीखण्डे खेटकपुरवासिसुन्दरीगेहिन्याः प्राणप्रियो जिनदेवश्रेष्ठी आसीत् । तयोः पञ्च पुत्राः पुत्र्यश्च चतस्रो बभूवुः । अथ श्रेष्ठिना तनयाः पञ्च पाठकपार्श्वे समहोत्सवं स्थापिताः । परं ते परस्परं चापल्यं कुर्वन्ति, आलस्यमविनयित्वं च वितन्वन्ति । यत उक्तं च—

आरोग्यबुद्धिविनयोद्यमशास्त्ररागाः, पञ्चान्तराः पठनसिद्धिकरा नराणाम् ।
आचार्यपुस्तकनिवाससहायभिक्षाः, बाह्याश्च पञ्च पठनं परिवर्धयन्ति ॥ १ ॥

एकदोन्मत्तास्ते पण्डितेन शिक्षिताः "कम्बाग्रे वसति विद्या" इति विचार्य ताडिताः । ततस्ते रुदन्तो गृहे एत्य दुःखं कम्बाघातोद्भवक्षतावल्यङ्कं चादर्शयन् । तदा माताह—"हे वत्साः ! किं पठितेन स्यात्? जन्मजरामरणं च केनापि न त्यक्तं । यदुक्तम्—

पठितेनापि मर्तव्यं शठेनापि तथैव च । उभयोर्मरणं दृष्ट्वा कण्ठशोषं करोति कः ॥ १ ॥

यस्यास्ति वित्तं स नरः कुलीनः, स पण्डितः सः श्रुतिमान् गुणज्ञः ।
स एव वक्ता स च दर्शनीयः, सर्वे गुणाः काञ्चनमाश्रयन्ते ॥ २ ॥

महामूर्खाणामप्यग्रे पण्डिता दीनतां भाषन्ते । तथा पण्डिते निर्धनत्वमायाति । अतो मूर्खत्वमेव श्रेष्ठं । हे वत्साः ! अद्यप्रभृति पठनार्थं न गन्तव्यं । कदाचिदध्यापको युष्मदाकारणार्थं समेति तदा स दृषद्भिः सत्वरं ताड्यः । युष्मन्मारणफलं सर्वमेकहेलया दर्शनीयं" । इत्यादिशिक्षां दत्त्वा लेखिनीपट्टिका-पुस्तकादि पञ्चाग्नौ निक्षिप्तं रागाच्च द्वेषाच्च । एकदा तं व्यतिकरं श्रेष्ठिना विज्ञाय तां प्रति प्रोक्तं—"हे जडे ! किं मूर्खचेष्टितं कृतं ? एषां पञ्चानामुद्वाहश्चोद्धारश्च कथं भविता । यतः—

क्षणं रक्ता विरक्ताश्च क्षणं सर्वेषु वस्तुषु । अज्ञानेनैव कार्यन्ते प्राणिनः कपिचापलम् ॥ १ ॥
माता शत्रुः पिता वैरी पुत्रा याभ्यां न पाठिताः । सभामध्ये न शोभन्ते हंसमध्ये बका यथा ॥ २ ॥"

इति श्रुत्वा साऽऽह हास्यतः—"यूयं पण्डितास्तेन किं जातं ? किं जगद्दारिद्र्यमुन्मूलितं ? सौख्यं च पुण्येनैवावाप्यते, न च पठनपाठनप्रपञ्चेन"। इत्याकर्ण्य श्रेष्ठी मौनं चकार । यतः—

उपदेशो हि मूर्खाणां प्रकोपाय न शान्तये । पयःपानं भुजङ्गानां केवलं विषवर्धनम् ॥ १ ॥

एकदा श्रेष्ठ्यूचे—"हे प्रिये ! एषां न कोऽपि स्वां कन्यां दत्ते प्रत्युतैवं कथयन्ति—

मूर्खनिर्धनदूरस्थशूरमोक्षाभिलाषिणाम् त्रिगुणाधिकवर्षाणामेषां कन्या न दीयते ॥ १ ॥

अथ त्वयाऽवतारो निरर्थको विहितः"। साऽऽह—नात्र मनाग्मम दोषः, तवैव दोषः, यतः—पित्रायत्ताः पितुर्नामवर्धकाश्च पुत्राः प्रोक्ताः, पुत्र्यो मात्रनुगाः स्मृताः । ततः श्रेष्ठी रुष्टो जगौ—"हे दुर्भगे ! पापिष्ठे ! स्त्रीचतुर्थजातिके ! मम संमुखं भाषसे ?" सा प्राह—"हे शठजातिनर ! पापी त्वदीयः पिता एव, येन श्वपुच्छसमो वक्रमतिः त्वं प्रकटीकृतः"। इत्याकर्ण्य क्रुद्धेन तेन सा पाषाणेन झटिति हता शिरोमर्मणि मृता । ततस्तवौकसि पुत्रित्वेनोत्पन्ना । ज्ञानविराधनातो महादुःखिन्यस्ति"। एतद्गुरोर्वाक्यं सत्यं जातिस्मृत्या च ज्ञात्वा प्राह—"सत्यं भगवद्वचनं स्वेच्छया मया बद्धं कर्म, तत्फलमुदयमागतं विलापात्यां च न व्यवच्छेदः"। ततो गुरून् श्रेष्ठी व्यजिज्ञपत्—"भगवन् ! येन व्याधेरादाननिदाने प्रोक्ते, स एव चिकित्सकः, युष्मान् विना क आन्तरीयनिमित्तं वेत्ति ?"। गुरुः प्राह—"हे श्रेष्ठिन् ! विधिना ज्ञानपञ्चम्याराधनात्सर्वसुखं संपद्यते । विधिस्त्वयं—कार्तिकशुक्लपञ्चमीघस्रे स्थापनिकां नान्दीं च स्थापयित्वाऽष्टाभिः स्तुतिभिर्देवान् वन्दित्वा श्रुतपञ्चम्यालापकसूत्रं गुरुमुखतः श्रुत्वा तत्तपः स्वीकार्यं पञ्च वर्षाणि

पञ्च मासांश्च यावत् द्विःप्रतिक्रमणत्रिकालदेववन्दनसंपूर्णपौषधोपवासादिभिः विधिनाऽऽराधयेत् । तद्दिने मूलभेदाः पञ्च उत्तरभेदाश्चैकपञ्चाशत्, तन्नामग्रहणवर्णनपूर्वकमेकपञ्चाशदुद्योतकरैः कायोत्सर्गः कार्यः, स्थापनिकास्थपुस्तकस्य परित एकपञ्चाशत्प्रदक्षिणा देयाः, एकपञ्चाशत्क्षमाश्रमणानि च देयानि । तद्दिनेऽपूर्वश्रुतस्य पठनं पाठनं श्रवणं च कार्यं । यतः—

अपूर्वज्ञानग्रहणं महती कर्मनिर्जरा । सम्यग्दर्शननैर्मल्यात् कृत्वा(ता) तत्त्वप्रबोधतः ॥ १ ॥

अथवा तद्दिने पट्टे पुस्तकं संस्थाप्य पञ्चवर्तिमयो दीपः पञ्च स्वस्तिकाश्च क्रियन्ते, ज्ञानकोशाः पूज्यन्ते, ज्ञानधनवृद्धिर्वितन्यते च । "ॐ ह्रीं नमो नाणस्स" इत्यस्य द्विसहस्रमितो जापो विधेयः । इत्थं यदि मासे मासे कर्तुं न क्षमस्तर्हि यावज्जीवं कार्तिकसितपञ्चमी अवश्यमाराध्या । अथवा पञ्चमीदिने जिनाभ्यर्णे पुस्तकान्तिके च चैत्यवन्दनं विधाय शक्रस्तवं पठित्वा प्रथमं मतिज्ञानाराधनार्थं करेमि काउस्सग्गं, वंदण० अन्नत्थ० १ नमस्कारस्य कायोत्सर्गं कृत्वा नमोऽर्हत्सिद्धा० इत्याद्युक्त्वेदं काव्यं गम्भीरस्वरेण कथयति—

अष्टाविंशतिभेदभिन्नगदितं ज्ञानं शुभाद्यं मतिः, सप्रज्ञाभिनिबोधिकश्रुतनिधेर्हेतुश्च बुद्धिप्रभे ।
पर्यायाः प्रथिता इमे बहुविधा ज्ञानस्य चैकार्थिनः, सम्यग्दर्शनिसत्कमाप्तकथितं वन्दामि तद्भावतः ॥ १ ॥

पुनश्चैत्यवन्दनादि पूर्वोक्तं विधाय काव्यं—

अन्यज्ज्ञानचतुष्टयं स्वविषयं नैवाभिधातुं क्षमं, श्रीमत्केवलिनोऽपि वर्णनिकरज्ञानेन तत्त्वं जगुः ।
स्पष्टं स्वात्मपरप्रबोधनविधौ सम्यक्छ्रुतं सूर्यवत्, भेदाः पूर्व(१४)मिताःश्रुतस्य गणिभिर्वन्द्याः स्तुवे तान्मुदा २

पुनस्तथैव प्रोच्य तृतीयमवधिज्ञानाराधनार्थं काव्यं—

अल्पं तत्पनकावगाहनसमं चासङ्ख्यलोकाग्रगं, ज्ञानं स्यादवधेश्च रूपिविषयं सम्यग्दृशां तद्गुणम् ।
देवादौ भवप्राप्तिजं नृषु तथा तिर्यक्षु भावोद्भवं, षड् भेदाः प्रभुभिश्च यस्य कथिता ज्ञानं भजेत्तत्सदा ॥ ३ ॥

पुनस्तथैव चतुर्थं मनःपर्यवज्ञानाराधनार्थं काव्यं—

साधूनामप्रमादतो गुणवतां तुर्यं मनःपर्यवं, ज्ञानं तद्द्विविधं त्वनिन्द्रियभवं तत्स्वात्मकं देहिनाम् ।
चेतोद्रव्यविशेषवस्तुविषयं द्वीपे च सार्धद्विके, सकृज्ज्ञानगुणाञ्चितान् व्रतधरान् वन्दे सुयोगैर्मुदा ॥ ४ ॥

पुनस्तथैव पञ्चमकेवलज्ञानाराधनार्थं काव्यं—

निर्भेदं विशदं करामलकवज्ज्ञेयं परिच्छेदकं, लोकालोकविभासकं चरमचिन्नान्त्यं भजेत्स्वात्मतः ।
निद्रास्वप्नसुजागरातिगदशं तुर्यां दशां संगतं, वन्दे कार्तिकपञ्चमीश्रुतदिने सौभाग्यलक्ष्म्यास्पदम् ॥ ५ ॥

इति पञ्चज्ञानाराधनविधिर्ज्ञेयः । अथ पञ्चषष्टिमासैस्तपसि पूर्णे जाते सति चैत्यज्ञानादिरत्नत्रयोपयोगीन्युपकरणानि पञ्चपञ्चसङ्ख्याकानि संमील्योद्यापनं कार्यं । यतः—

उद्यापनं यत्तपसः समर्थने, तच्चैत्यमौलौ कलशाधिरोपणम् ।
फलोपरोपोऽक्षतपात्रमस्तके, ताम्बूलदानं कृतभोजनोपरि ॥ १ ॥

इत्यादिगुरुवचनानि श्रुत्वा यथाविधि तत्तपो गुणमञ्जर्या प्रतिपन्नं ।

अत्रावसरे राज्ञा सूरीश्वरः पृष्टः—"स्वामिन् ! मत्सूनोर्वरदत्तस्य कथं कुष्ठरोगोऽभवत् ? किञ्चित्पठनं नायाति तत्कुतः ?" । गुरुर्जगौ—अस्य पूर्वभवं शृणु—

अत्र भरते श्रीपुरे वसुनामेभ्योऽभवत् । तस्य पुत्रौ वसुसारवसुदेवौ । एकदा तौ क्रीडार्थं वनं जग्मतुः । तत्रागतसूरिदेशनां निशम्य तातमापृच्छ्य तौ व्रतं जगृहतुः । लघुर्वसुदेवसाधुः सिद्धान्तपारगामी सूरिपदं क्रमात्प्राप । नित्यं पञ्चशतवाचनाः प्रदत्ते । एकदा संस्तारके सुप्तं सूरिं कोऽपि तपोधन आगमार्थमपृच्छत्, तस्मिन्मुनौ गते द्वितीयोप्येत्यार्थं पृष्ट्वा गतः । एवमन्येषु भूयस्सु पृष्ट्वा पृष्ट्वा गतेषु सूरिः किञ्चिन्निद्रायमाणः सन् केनापि साधुना पृष्टः—"पूज्य ! अग्रेतनं पदं वाक्यं पदार्थोऽपि प्रकाश्यतां" । तदा सूरिर्दध्यौ—"अहो ! मम भ्राता वृद्धः सुखं शेते स्वैरं भुङ्क्ते भाषते च । ईदृशं सौख्यं मम जातु जायते तदा सुन्दरं । यत उक्तम्—

मूर्खत्वं हि सखे ममापि रुचितं तस्मिन् यदष्टौ गुणा, निश्चिन्तो बहुभोजनोऽत्रपमना नक्तंदिवा शायकः ।
कार्याकार्यविचारणेऽन्धबधिरो मानापमाने समः, प्रायेणामयवर्जितो दृढवपुर्मूर्खः सुखं जीवति ॥ १ ॥

अतः परं पठनं पाठनं च सर्वं मया न कार्यं" । एवं पुण्यामृतघटस्तेन भग्नः पापघटं भृत्वा द्वादश दिनान् यावन्मौनं चकार । तत्पापमनालोच्य रौद्रध्यानपरो मृतः । सोऽयं तवाङ्गजो जज्ञे । पूर्वकर्मणा मूर्खः कुष्ठादिरोगाक्रान्तश्च जातः । सूरेर्बृहद्भ्राता मृत्वा मानससरसि हंसबालोऽभवत्" । इति श्रुत्वा वरदत्तो जातिस्मरणं प्राप्य प्राह—"अहो ! सत्यं भगवद्वचः, अहो ज्ञानं !" । नृपो बभाण—"भगवन् !


॥ ९१ ॥

पुनस्तथैव प्रोच्य तृतीयमवधिज्ञानाराधनार्थं काव्यं—

अल्पं तत्पनकावगाहनसमं चासङ्ख्यलोकाग्रगं, ज्ञानं स्यादवधेश्च रूपिविषयं सम्यग्दृशां तद्गुणम् ।
देवादौ भवप्राप्तिजं नृषु तथा तिर्यक्षु भावोद्भवं, षड् भेदाः प्रभुभिश्च यस्य कथिता ज्ञानं भजेत्तत्सदा ॥ ३ ॥

पुनस्तथैव चतुर्थं मनःपर्यवज्ञानाराधनार्थं काव्यं—

साधूनामप्रमादतो गुणवतां तुर्यं मनःपर्यवं, ज्ञानं तद्द्विविधं त्वनिन्द्रियभवं तत्स्वात्मकं देहिनाम् ।
चेतोऽन्यविशेषवस्तुविषयं द्वीपे च सार्धद्विके, सकृज्ज्ञानगुणाञ्चितान् व्रतधरान् वन्दे सुयोगैर्मुदा ॥ ४ ॥

पुनस्तथैव पञ्चमकेवलज्ञानाराधनार्थं काव्यं—

निर्भेदं विशदं करामलकवज्ज्ञेयं परिच्छेदकं, लोकालोकविभासकं चरमचिन्नान्त्यं व्रजेत्स्वात्मतः ।
निद्रास्वप्नसुजागरातिगदशं तुर्यां दशां संगतं, वन्दे कार्तिकपञ्चमीश्रुतदिने सौभाग्यलक्ष्म्यास्पदम् ॥ ५ ॥

इति पञ्चज्ञानाराधनविधिर्ज्ञेयः । अथ पञ्चषष्टिमासैस्तपसि पूर्णे जाते सति चैत्यज्ञानादिरत्नत्रयोपयोगीन्युपकरणानि पञ्चपञ्चसङ्ख्याकानि संमील्योद्यापनं कार्यं । यतः—

उद्यापनं यत्तपसः समर्थने, तच्चैत्यमौलौ कलशाधिरोपणम् ।
फलोपरोपोऽक्षतपात्रमस्तके, ताम्बूलदानं कृतभोजनोपरि ॥ १ ॥

इत्यादिगुरुवचनानि श्रुत्वा यथाविधि तत्तपो गुणमञ्जर्या प्रतिपन्नं ।

अत्रावसरे राज्ञा सूरीश्वरः पृष्टः—"स्वामिन्! मत्सूनोर्वरदत्तस्य कथं कुष्ठरोगोऽभवत्? किञ्चित्पठनं नायाति तत्कुतः?"। गुरुर्जगौ—अस्य पूर्वभवं शृणु—

अत्र भरते श्रीपुरे वसुनामेभ्योऽभवत्। तस्य पुत्रौ वसुसारवसुदेवौ। एकदा तौ क्रीडार्थं वनं जग्मतुः। तत्रागतसूरिदेशनां निशम्य तातमापृच्छ्य तौ व्रतं जगृहतुः। लघुर्वसुदेवसाधुः सिद्धान्तपारगामी सूरिपदं क्रमात्प्राप। नित्यं पञ्चशतवाचनाः प्रदत्ते। एकदा संस्तारके सुप्तं सूरिं कोऽपि तपोधन आगमार्थमपृच्छत्, तस्मिन्मुनौ गते द्वितीयोऽप्येत्यार्थं पृष्ट्वा गतः। एवमन्येषु भूयस्सु पृष्ट्वा पृष्ट्वा गतेषु सूरिः किञ्चिन्निद्रायमाणः सन् केनापि साधुना पृष्टः—"पूज्य! अग्रेतनं पदं वाक्यं पदार्थोऽपि प्रकाश्यतां"। तदा सूरिर्दध्यौ—"अहो! मम भ्राता वृद्धः सुखं शेते स्वैरं भुङ्क्ते भाषते च। ईदृशं सौख्यं मम जातु जायते तदा सुन्दरं। यत उक्तम्—

मूर्खत्वं हि सखे ममापि रुचितं तस्मिन् यदष्टौ गुणा, निश्चिन्तो बहुभोजनोऽत्रपमना नक्तंदिवा शायकः।
कार्याकार्यविचारणेऽन्धबधिरो मानापमाने समः, प्रायेणामयवर्जितो दृढवपुर्मूर्खः सुखं जीवति ॥ १ ॥

अतः परं पठनं पाठनं च सर्वं मया न कार्यं"। एवं पुण्यामृतघटस्तेन भग्नः पापघटं भृत्वा द्वादश दिनान् यावन्मौनं चकार। तत्पापमनालोच्य रौद्रध्यानपरो मृतः। सोऽयं तवाङ्गजो जज्ञे। पूर्वकर्मणा मूर्खः कुष्ठादिरोगाक्रान्तश्च जातः। सूरेर्बृहद्भ्राता मृत्वा मानससरसि हंसबालोऽभवत्"। इति श्रुत्वा वरदत्तो जातिस्मरणं प्राप्य प्राह—"अहो! सत्यं भगवद्वचः, अहो ज्ञानं!"। नृपो बभाण—"भगवन्!

अस्य गदाः कथं गमिष्यन्ति ?" । गुरुः प्राह—"पूर्वोक्तविधिना यथाशक्ति पञ्चमीतपसा सर्वं सुस्थं भावि" । कुमारेण गुणमञ्जर्या च विधिवत्तपोऽङ्गीकृतं, तेन सर्वे गदा गताः । वरदत्तः स्वयंवरसमेतानां सहस्रसङ्ख्यया कन्यानां पाणिग्रहणं चकार । क्रमेण राज्यं भुक्त्वा स्वसूनवे राज्यं दत्त्वा दीक्षामग्रहीत् । जातोत्तमरूपा साऽपि जिनचन्द्रेण परिणीता । चिरं गृहसौख्यं भुक्त्वा विधिना तपस उद्यापनं विधाय दीक्षां कक्षीकृत्य क्रमात्तौ कालं कृत्वा वैजयन्ते सुरोत्तमौ बभूवतुः । ततो वरदत्त आयुःक्षये च्युत्वा जम्बूद्वीपस्थविदेहे पुण्डरीकिणीपुर्याममरसेननृपपत्नीगुणवतीकुक्षौ शूरसेननामा पुत्रोऽभूत् । यौवने कन्यानां शतमेकमुपयेमे । ततः पिता तस्मै निजं राज्यं दत्त्वा परलोकमगात् । अन्यदा तत्र श्रीसीमन्धरस्वामिसमवसरणं जातं, तज्ज्ञात्वा विधिना जिनं नत्वेति देशना श्रुता—"भो भव्याः ! सौभाग्यपञ्चमी ज्ञानपञ्चमी च, तस्या आराधनं वरदत्तवत् क्रियतां" । राजा पप्रच्छ—"कोऽयं वरदत्तः ? यो भवद्भिः स्तुतः ?" । भगवद्भिर्यथाज्ञातं प्रोक्तं । तदा स हृष्टः । तत्रापि सपौरो नृपस्तत्तपोऽङ्गीचकार दशसहस्रवर्षाणि यावद्राज्यं प्रपाल्य स्वपुत्रं राज्येन्यस्य तीर्थङ्करपार्श्वे व्रतमग्रहीत् । एकवर्षसहस्रं राजर्षिश्चारित्रं प्रपाल्य पञ्चमज्ञानमुत्पाद्य मोक्षमवाप । अथ गुणमञ्जरीजीवस्ततश्च्युत्वा जम्बूद्वीपस्थरमणीविजयेऽमरसिंहनृपभार्याऽमरवतीकुक्षाववातरत् । पित्रा सुग्रीव इति नाम कृत्वा विंशतितमे वर्षे तस्मै स्वसूनवे राज्यं दत्त्वा दीक्षा जगृहे । अथ सुग्रीवभूपेन बह्वीनां कन्यानां करपीडनमकारि । तस्य चतुरशीतिसहस्राः पुत्रा जज्ञिरे । ततो राज्यं पुत्रेभ्यो वितीर्य संयमेन तपसा च केवलज्ञानं प्राप । देशनासु सर्वत्र

स्वचरित्रं जगौ । एवं स राजर्षिर्लक्षपूर्ववर्षाणि यावच्चरणमासेव्य परमं चिन्मयं चिद्रूपं चिदानन्दं चिद्घनं मोक्षं जगामेति ॥

यस्याः समाराधनतो द्वयोस्तयोः, सौभाग्यसिद्धिर्द्विविधाऽपि सङ्गता ।
नैतादृशो वासरवृद्धिवर्धको, विश्वे ततोऽर्च्यो विधिवद्धितेच्छुभिः ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ पञ्चदशस्तम्भे २१५ व्याख्यानम् ॥

## ॥ व्याख्यानं ॥ २१६ ॥

अभयं सर्वसत्त्वेभ्यो यो ददाति दयापरः । तस्य देहाद्विमुक्तस्य भयं नास्ति कुतश्चन ॥ १ ॥

स्पष्टः । अत्राभयदानोपरि दृष्टान्ताः—जयपुरे धनाभिधारामिकेण पञ्च पूतरा द्वीन्द्रिया दयापरिणामेन रक्षिताः । कालेन मृत्वा कुलपुत्रको जातः । बाल्ये मातापितृमरणाद्देशान्तरं गच्छन् रात्रावरण्ये वटवृक्षाधः स्थितः । तत्रस्थैः पञ्चभिर्यक्षैः स दृष्टः । पूर्वभवोपकारीति ज्ञात्वा कथितं—"तव पञ्चमदिवसे राज्यं भावि" । तच्छ्रुत्वा हृष्टः । पञ्चमे दिने मृतापुत्रनरपालनृपतेर्वाणारसीनगरीराज्यं जातं ।

१ समासश्चिन्त्यः ।

अमात्यारोपितराज्यभारः सुखान्येवानुभवति। सीमालनृपा राज्योच्छेदनार्थं समेताः, तदाऽमात्यैर्द्यूतक्रीडां कुर्वन् स रुद्धः, रोधस्वरूपं प्रोक्तं, तथापि न मुञ्चति द्यूतं। पश्चाद्भार्ययाऽपि पाशकान् पातयन्त्या प्रोक्तं, तदा तेनोक्तं—

"स वटः पञ्च ते यक्षा ददन्ति च हरन्ति च। अक्षान् पातय कल्याणि यद्भाव्यं तद्भविष्यति॥ १॥"

इत्युक्ते तैरेव राज्योच्छेदका बद्ध्वा पादयोः क्षिप्ताः। लोके आश्चर्यं जातं। एकदा ऋषिसमायोगे पूर्वभवपृच्छा कृता। गुरुणा कथितं—"त्वया पूर्वभवे पञ्चपूतररक्षणं कृतं, क्रमेण ते यक्षा जाताः, तैरेव राज्यं रक्षितं"। ततस्तेन राज्ञा वापीकूपतटाकादिजलेषु गलनकस्थापनममार्युद्घोषणं च कृतं।

अथ पापरता मांसमश्नन्ति तान् प्रतीयं शिक्षा-एकदा श्रेणिकेन सभायामभाणि—"संप्रति नगरमध्ये किं वस्तु सुलभमस्ति?"। तत्र क्षत्रिया निर्दयाः प्रोचुः—"अधुना पलं सुलभमस्ति"। तच्छ्रुत्वाऽभयामात्येन चिन्तितं—"अहमद्यैषां परीक्षां करोमि"। ततो रात्रौ सर्वक्षत्रियगृहेषु पृथक् पृथग्गत्वाऽवोचत्—"भो राजपुत्रा! अद्य राज्ञो महाव्याधिरुत्पन्नोऽस्ति, वैद्यैर्बहुभिरप्यौषधैश्चिकित्सितोऽपि गुणो न दृश्यते, किंतु यदि मनुष्यसत्कं कालिजमांसं[1] टङ्कद्वयप्रमाणं भवति तदा जीवति, अन्यथा मरिष्यत्येव, यूयं तदीयग्रासोपजीविन एतावदपि न करिष्यथ?"। तेनोक्तं—"दीनारसहस्रं गृह्यतां, परं मां मुञ्च, अन्यत्र गच्छ"। अभयेन गृहीतं द्रव्यं। गतः पुनरन्यगृहे। तथैव चोक्तं। तेनापि दीनारसहस्रमर्पितं, न

१ हृदयमांसं।

तु मांसं । एवमपरापरगृहेषु सकलां रात्रिं परिभ्रम्य मेलितं दीनाराणां लक्षं । प्रगे सभायां दर्शितं सर्वक्षत्रियाणां—"भोः ! यूयमेवं वदथ यन्मांसं सुलभं, तदद्यैतावता द्रव्येणापि न प्राप्तं" । ततस्ते लज्जिता मौनेन स्थिताः । तदाऽभयः प्राह—"स्वात्मा सर्वेषामपि वल्लभोऽस्ति, मुधैव यूयमेवं मांसलुब्धाः प्रलपथ । यतः—

अमेध्यमध्ये कीटस्य सुरेन्द्रस्य सुरालये । समाना जीविताकाङ्क्षा समं मृत्युभयं द्वयोः ॥ १ ॥

दुर्योनिमपि संप्राप्तः प्राणी मर्तुं न वाञ्छति । स्वाकुमन्तो भवन्ति स्वस्वाहाराः कुत्सितावपि ॥ २ ॥

यस्तु हिंसां करोति स तु दुःखभाग्भवति, तद्यथा—

गोपो बब्बूलशूलाग्रे प्रोतयूकोत्थपातकात् । अष्टोत्तरशतं वारान् शूलिकारोपणान्मृतः ॥ १ ॥

नागपुरे माधवगोपाल एकदा गोचारणार्थं गतो महारण्ये, तापार्तो बब्बूलतरुतले निषण्णः, मस्तकायूका उत्सङ्गे पतिता दृष्ट्वा, बब्बूलतीक्ष्णशूलायां निर्दयत्वेन प्रोता "एषा मद्देहसारचौरिणी" इति विचिन्त्य । तत्पातकोदयात्तस्मिन्नेव भवे चौर्येण शूलाप्रोतो मृतः । एवं सप्तोत्तरशतवारान् पृथक् पृथग्भवेषु चौर्यादिदोषमासाद्य तथैव शूल्यादिविडम्बनया मृतः । सप्तोत्तरशततमे भवे स्तोकतत्कर्मोदयात्तापसी दीक्षा प्राप्ता । सर्वदा वनवासी शुष्कफलपत्रभोजी निःसङ्गव्रतधारी वने तिष्ठति । विभङ्गज्ञानवान् जातः । तस्मिन्नवसरे तत्रासन्ननगरनृपस्य रत्नाभरणपेटी चौरेण गृहीता । यामिकाः पदपङ्क्त्यनुसारेण तत्पृष्ठौ लग्नाः । चौरो नंष्ट्वा तत्तापससमीपे तां मुक्त्वा वटे चटित्वा स्थितः । प्राहरिकास्तत्रागताः ।

तैः सुप्तस्तापसः सरत्नपेटिको धृत्वा भूपतेः पुरो मुक्तः । विभङ्गज्ञानी स्वकृतकर्म निन्दन् मौनी दुष्टनृपेण शूलायां रोपितः । तत्कर्मक्षयेण सुरोऽभूत् । इत्यभयदानं वर्णितम् ।

तथेह जगति दानं पञ्चविधं प्रसिद्धं । यतः—

अभयं सुपत्तदाणं अणुकंपा उचियकित्तिदाणं च । दोहिं पि मुक्को भणिओ तिन्नि भोगाइं दीयंति ॥ १ ॥

तत्राद्यं हननबन्धादिभयभीतानां जन्तूनां प्राणत्राणादिना निर्भयकारणं ज्ञेयं १ । सुपात्रं तु सु-शोभनं पात्रं-स्थानं ज्ञानादिरत्नत्रयाणां, यद्वा सु-अतिशयेन पापात्त्रायत इति सुपात्रं, एवंविधनामानुरूपं सुपात्रदानं दुर्लभं २ । अनुकम्पा तु दीनदुःस्थितादीनां दयया पात्रापात्रविचाररहितं यद्दीयतेऽन्नादिकं तदनुकम्पादानं । यतः—

दानकाले महेभ्यानां किं पात्रापात्रचिन्तया । दीनाय देवदूष्यार्धं यथाऽदात् कृपया प्रभुः ॥ १ ॥

तथा दुःषमारेऽपि जगडुश्राद्धेन वक्ष्यमाणधान्यमूढकाः कृपया दत्ताः—

अठ य मूढसहस्सा विसलरायस्स वार हम्मीरे । इगवीस य सुरत्ताणे दुभिक्खे जगडुसाहुणा दिन्ना ॥१॥

नवकरवाली मणिअभा ते पर अलगा चार । दानशाला ( ११२ ) जगडुतणी दीसे पुहवीमुझार ॥ २ ॥

प्रभाते यत्रोपविश्य जगडुर्यथेच्छं दानं ददाति तत्र यवनिकां बन्धयति लज्जया ये कुलीनाः स्त्रियश्च प्रकटं न गृह्णन्ति तेषां दानार्थं । एकदा विसलदेवः स्वभाग्यपरीक्षार्थं वेषं परावर्त्यैकाकी निजकरं यवनिकान्तरे प्रसारयामास । जगडुस्तं करं लक्षणोपेतं भाग्यशालिनो वीक्ष्य "जगज्जनमान्यस्य कस्यापि

नरेन्द्रस्य सम्प्रतीदृशीमवस्थां प्राप्तस्य तथा करोमि यथा यावज्जीवं सुखी स्यात्" इति विचिन्त्य स्वकराङ्गुलितो मणिमण्डितमुद्रिकामुत्तार्य प्रदत्तवान्। सकौतुकेन नृपेन क्षणं स्थित्वा वामकरः प्रसारितः, तत्रापि तेन द्वितीया मुद्रिका दत्ता। मुद्राद्वयं गृहीत्वा नृपः स्वावासे गतः। द्वितीयदिने जगकुमाकार्य "किमेतत्" इति दर्शितवान् मुद्राद्वयं। जगकुनोक्तम्—

सर्वत्र वायसाः कृष्णाः सर्वत्र हरिताः शुकाः। सर्वत्र सुखिनां सौख्यं दुःखं सर्वत्र दुःखिनाम् ॥ १ ॥

तदनु मत्सरं मुक्त्वा जगकुपार्श्वान्निजप्रणामकरणं निषिध्य हस्तिस्कन्धमारोप्य गृहे प्रेषितः। सुधार्मिकत्वमनुकम्पयैव शोभते इति तृतीयदानं ३। अथ चतुर्थमुचितदानमवसरे योग्यमन्त्रीष्टप्राघूर्णिकदेवगुरुसमागमनप्रासादबिम्बनिष्पत्तिवर्धापनिकादातॄणां काव्यश्लोकसुभाषितविनोदकथादिकथकानां च रञ्जितचेतसा यद्दीयते तदुचितदानं। यथा चक्रवर्तिना प्रतिदिनं प्रभातसमये विहरमानतीर्थंकरस्थितिशुद्धिज्ञापकाय प्रतिवर्षं दीयते। यतः—

वित्तीउ सुवन्नस्स बारस अद्धं च सयसहस्साइं। तावइयं चिय कोडी पीईदाणं तु चक्कीणं ॥ १ ॥

सम्प्रत्यारकेऽपि श्रीविमलाचलप्रासादनिष्पत्तिवर्धापनिकादायकस्य मन्त्रिणा वाग्भट्टेन द्वात्रिंशत्कनकजिह्वा दत्ताः। तथाऽन्यदा जीर्णदुर्गाधिपखेंगाराभिधनृपेनाखेटकचटितेन तुरङ्गमपुच्छबद्धमारितशशकनिवहेन मार्गपरिवारभ्रष्टेन बब्बूलतरुशाखारूढो दुण्ढणाभिधश्चारणः पृष्टः—"भोः! वेत्सि प्राध्वरमार्गं"?। कारुणिकेनोक्तं तेन—

जीव वधंता नरगगइ, अवधंता गइ सग्ग । हुं जाणुं दो वाटमी, जिण भावे तिण लग्ग ॥ १ ॥

वेधकदुग्धघटश्रवणसमुत्पन्नविवेकेन यावज्जीवं प्राणिवधनियमो गृहीतः, अश्वग्रामप्रदानैश्च चारणो गुरुवत् पूजित इति । तथा विक्रमार्केण मनसा प्रणामः कृतः, स सिद्धसेनगुरुणा ज्ञातः, ततो धर्मलाभो दत्तः, तेन राज्ञा पृष्टं—"पूज्य ! अनेन किं स्यात् ?" । सूरिराह—

"दुर्वारा वारणेन्द्रा जितपवनजवा वाजिनः स्यन्दनौघा,
लीलावत्यो युवत्यः प्रचलितचमरैर्भूषिता राज्यलक्ष्मीः ।
उच्चैः श्वेतातपत्रं चतुरुदधितटीसंकटा मेदिनीयं,
प्राप्यन्ते यत्प्रभावात्त्रिभुवनविजयी सोऽस्तु ते धर्मलाभः ॥ १ ॥"

सूरिगुणैर्हृष्टो नृपः कनककोटिं ददौ । निःस्पृहत्वेन तद्धर्मस्थाने स्थापितं । इत्याद्यनेके दृष्टान्ताः स्वयमुचितदाने वाच्याः ४ । कीर्त्यै मार्गणादीनां यद्दीयते तत्कीर्तिदानं । यथैकदा सपादलक्षदेशाधिपतिमर्णराजं प्रति दिग्विजययात्रायां सञ्चरन् कुमारपालः स्वनरैरश्वपर्याणकममार्जयत् । तदा द्वासप्ततिसामन्तैरुपहसितः "वणिगेवायं किं करिष्यति सङ्ग्रामे" ? । ज्ञातराणकाशयेन कुमारपालेन पूगीफलगोणी पोडशमणमिता मार्गे पतिता भल्लाग्रेणोच्छालिता, प्रतरकटाहकसप्तकं च परस्परं मध्यस्थं लोहमयभल्लैकघातेन प्रस्फोटितं । तदावसरोचितवचनचतुर आमभट्टः प्राह—

रे रक्खइ लहु जीवमा, रणे मयगल मारइं । न पीये अणगल नीर, तेही राय संहारइं ॥

अवर न बंधे कोइ, समर रयणायर बंधे । वगे राय परमार, अपररायने रुंधे ॥
ए कुमारपाल कोपे चड्यो, फोमे सत्त कम्नाही । तिम जे जिणधम्म न मन्नसि, तेहनी तेहवी चाक ॥

तुष्टेन राज्ञा प्रत्यक्षरमश्वाः प्रदत्ताः । एकदा द्वादशावर्तवन्दनकदानावसरे कुमारनृपपृष्ठं क्षामणकवेलायां श्रीहेमाचार्यः करेण स्पृशति, तदा गांगिलकविनोक्तम्—

हेम तुमारा करमहीं, दीसइ अच्चप्रुअ सिद्धि । जे चंपे हेठा मुहा, ते पामे हरि सम रिद्धि ॥ १ ॥

करकटकप्रदानं । इत्याद्यनेकप्रबन्धाः कीर्तिदानेऽभ्यूह्याः ।

सुपात्रदानादभयाच्च मुक्तिं, तथानुकम्पात इहेति सौख्यम् ।
औचित्यदानात्समयज्ञतां च, श्लाघां लभेदन्तिमतश्च श्राद्धः ॥ १ ॥

॥ इत्यब्ददिनपरिमितहितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रंथस्य वृत्तौ पञ्चदशस्तंभे २१६ व्याख्यानम् ॥

---

## ॥ व्याख्यानम् ॥ २१७ ॥

अथ दानधर्ममाह—

श्राद्धानां पात्रभक्तानां कार्पण्यदोषमुक्तये । देशना दानधर्मस्य देया तीर्थहितेच्छुभिः ॥ १ ॥

स्पष्टः । नवरं देशना चेयं—

कालेऽल्पमपि पात्राय दत्तं भूयो भवेद्यथा । जिनाय चन्दनादत्ताः कुल्माषाः कल्मषच्छिदे ॥ १ ॥

श्रीवीराभिग्रहः षण्मासान्ते परिपूर्णः, तदा सुरकृतसार्धद्वादशरत्नसुवर्णकोटिवृष्टिभृतधनावहश्रेष्ठिगृहं दृष्ट्वा प्रातिवेश्मिकया चिन्तितं—"अहो ! कुल्माषदानाद्दुर्बलस्तपस्वी यदि महतीमियतीमृद्धिं ददाति तदाहं पुष्टाङ्गं मुनिं सघृतशर्करेण परमान्नेन संतोष्यापारां लक्ष्मीं गृह्णामि"। इति कृत्वा कंचिद् वेषधारिणं मुनिमाकार्य परमान्नं यच्छतीं वारंवारमाकाशसन्मुखं विलोकयन्तीं जरतीं वीक्ष्य ज्ञाततच्चेतसा व्रतिना प्रोक्तं—"मुग्धे ! मत्तपसा तव भावेनाधाकर्मिकाहारदाने नाकाशात्पाषाणवृष्टिरेव भाविनी, न तु रत्नवृष्टिः, द्वयोः शुद्धताऽभावात्"। इत्याद्युक्त्वा प्रतिबोधिता। अन्यच्च पात्रमपि तदेव भव्यं यन्नामानुरूपपरिणामं, नान्यत् । पात्रपरीक्षायामप्येवं प्रोक्तमस्ति यथा युधिष्ठिरभीमसंवादे हस्तिनागपुरे धर्मपुत्रे सदसि स्थिते द्वारस्थभीमेनागत्य विज्ञप्तः—

मूर्खस्तपस्वी राजेन्द्र विप्रोऽश्च वृषलीपतिः । उभौ तौ तिष्ठतो द्वारे कस्य दानं प्रदीयते ॥ १ ॥

युधिष्ठिर उवाच—

सुखसेव्यं तपो भीम विद्या कष्टदुराचरी । विद्यां संपूजयिष्यामि तपोभिः किं प्रयोजनम् ॥ २ ॥

भीमेनोक्तम्—

शुनश्चर्मगता गङ्गा क्षीरं मद्यघटस्थितम् । कुपात्रे पतिता विद्या किं करोति युधिष्ठिर ॥ ३ ॥

कृष्णद्वीपायनेनोक्तम्—

न चैकविद्यया पात्रं तपसाऽपि च पात्रता । यत्र विद्याचरित्रे च तद्धि पात्रं प्रचक्ष्यते ॥ ४ ॥

अत एव पात्रे धनवितरणं श्रेयस्करं, तदपि भावनया, यदुक्तम्—

दातव्यमिति यद्दानं दीयतेऽनुपकारिणे । क्षेत्रे काले च भावे च तद्दानं सात्त्विकं स्मृतम् ॥ १ ॥

श्रीशालिभद्रादिवत् ।

यस्तु प्रत्युपकाराय फलमुद्दिश्य वा पुनः । प्रदीयते परिक्लिष्टं तद्दानं राजसं स्मृतम् ॥ २ ॥

अत्र चन्दनाप्रातिवेश्मिकवृद्धा निदर्शनम्—

क्रोधाद्बलाभियोगाद्वा मनोभावं विनाऽपि वा । यद्दीयते हितं वस्तु तद्दानं तामसं स्मृतम् ॥ ३ ॥

श्रेणिकदासीवत् इति । तथा दाताऽपि मुधादायी दुर्लभः, यतः—

दुल्लहाओ मुधादाइ मुधाजीवी वि दुल्लहा । मुहादाइ मुहाजीवी दोऽवि गछंति सुग्गइं ॥ १ ॥

ति बेमि । अत्र भागवतोदाहरणं, यथा कश्चित्तापसः कमपि भक्तिमन्तं नरमवादीत्—"तव गृहे वर्षायां तिष्ठामि" । तेनोक्तं—"यदि प्रत्युपकारं न करोषि तदा तिष्ठ" । तेन प्रतिपन्नं । ततः प्रदत्तस्तस्मै समाश्रयः । आहारादिभिर्भक्तिं चकार । एकदा चौरैस्तस्याश्वोऽपहृतः "प्रभातं जातं" इति विचिन्त्य न शक्तास्तमश्वं ग्रहीतुं । ततोऽतिवृक्षगहने तं बद्ध्वा तेऽन्यत्र गताः । अत्रान्तरे प्रातरेव स्नातुं परिव्राजकस्तटाकं जगाम, दृष्टश्च तेन सरःसमीपवर्तिन्यां नाड्यामश्वः, प्रत्यभिज्ञातश्च "सोऽयमश्वोऽस-

ऽुपकारिणो भागवतस्य चौरैर्हृतः" । ततस्तेन जाह्नव्यां धौतवासो विस्मृतम् । गृहमागत्य तदानयनाय गृहपतेर्दासः प्रहितः । स गतस्तत्र । तेन दृष्टोऽश्वः समानीतश्च, कथितो गृहपतये । ततस्तेन गृहपतिना चिन्तितं—"अहो ! व्याजेन व्रतिना ममोपकारः कृतः" । ततः परिव्राजकमाहूय प्रोक्तं—"भद्र ! व्रज त्वं, यस्मादुपकारिणे दत्तं दानं निष्फलमुपजायते ।"

अथ मुधाजीविनि उदाहरणं—कश्चिन्नृपो जातवैराग्यो धर्मपरीक्षां चक्रे "को वाऽनिःसृष्टं भुङ्क्ते? ततस्तं परीक्षे" इति संप्रधार्य पुरुषानादिदेश यथा "राजा मोदकान् प्रयच्छति समागत्य गृह्यतां" इत्याकर्ण्योद्‌घोषणां जग्मुः कार्पटिकप्रभृतयो जना मोदकार्थिनः, पृष्टाश्च ते नृभुजा "केन भवन्तो जीवन्ति ?" । तत्रैकेनोक्तं—"अहं तावन्मुखेन" । अपरेणोक्तं—"अहं पादाभ्यां" । अन्येनोक्तं—"अहं हस्ताभ्यां" । अन्येनोक्तं—"अहं लोकानुग्रहेण" । ततो जैनक्षुल्लक आकारितः,पृष्टः, तेनोक्तं—"अहं मुधेति" । ततस्तान् सर्वान् नृपः पुनर्जगाद—"कथमिति ?" ततः प्रथमः प्राह—"अहं तावत्कथको जनानां रामायणादिकथां कथयामि, तेन जीवामि" । द्वितीयः प्राह—"अहं लेखवाहकः घटीद्वयमध्ये योजनं लङ्घयामि, तेन पादाभ्यां जीवामि" । तृतीयो जगौ—"अहं लेखको हस्ताभ्यां जीवामि" । भिक्षुणोक्तं—"अहं लोकानुग्रहेण जीवामि" । क्षुल्लकसाधुनोक्तं—"संसारासारतां वीक्ष्य महेभ्यसुतोऽहं दीक्षां प्रतिपद्य ततो मुधिकया यथोपलब्धेनाहारेण जीवामि" । इति श्रुत्वा नृपः "अहो ! एष धर्मः सर्वदुःखप्रमोक्षसाधक" इति निश्चित्य स्वयं तं धर्ममङ्गीचकार ।

अन्यच्च दानालङ्काराभावे लक्ष्मीः पाषाणमलरूपैव, यथा नवनन्दनृपाणां कृपणतादिमपात्राणां लोकपीडनोपार्जितनवकनकगिरयोऽप्यभाग्ययोगादश्ममयाः संजाताः । ते च सम्प्रति पाटलीपुरे गङ्गातीरे पीतोपलमया दृश्यन्ते । राजगृहे च श्रेष्ठिमम्मणस्यापि मणिमया बलीवर्दा दानाद्यभावेन मुधैव मह्यां विनाशं प्राप्ताः । अतो धनं सुपात्रे स्थाप्यं ।

पात्रे मुक्तिनिबन्धनं तदितरे प्रोद्यद्दयाख्यापकं, मित्रे प्रीतिविवर्द्धनं रिपुजने वैरापहारक्षमम् ।
भृत्ये भक्तिभरावहं नरपतौ सन्मानपूजाप्रदं, भट्टादौ च यशस्करं वितरणं न काप्यहो निष्फलम् ॥ १ ॥

तदपि सुपात्रे दत्तं श्रेयस्करं । यतः—

जले तैलं खले गुह्यं पात्रे दानं मनागपि । प्राज्ञे शास्त्रं सतां प्रीतिर्विस्तारं यात्यनेकधा ॥ १ ॥

अत्राह—ननु पात्रापात्रविचारं कृपण एव करोति, न पुनरुदारः । यतः—

पत्तपरिक्खह किं करु, दीजे मग्गंताहिं । किं वरिसंतो अंबुहरु, जोवे समविसमाइं ॥ १ ॥

तदुत्तरं—

वरिसो वरिसो अंबुहर, वरसीमा फल जोइ । धत्तूरे विख इक्खु रस, एवडो अंतर होइ ॥ २ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ पञ्चदश-
स्तम्भे २१७ व्याख्यानम् ॥

अथ पात्रदानफलमाह—

पात्रे यच्छति यो वित्तं निजशक्त्या सुभक्तितः । सौख्यानां भाजनं स स्याद्यथा धन्योऽभवत् पुरा ॥ १ ॥

स्पष्टः । ज्ञातं चेदं—पृथ्वीपुरग्रामादेकं इभ्यकुटुम्बं दैवात्प्रतिष्ठानपुरे समागतं । तत्कुलमध्य एको दारको लोकानां वत्सरूपाणि वृत्तितश्चारयामास । एकदा कस्मिंश्चित् पर्वणि परमान्नभक्षणपरान् जनान् वीक्ष्य तदभिलाषुकः पुनः पुनः स्वाम्बां स्माह—"मम परमान्नं प्रयच्छ" । यतः—

चौरा वालकाऽवि य ढुजाण विजाय विप्प पाहुणया । नच्चणि धुत्त नरिंदा परस्स पीडं न याणंति ॥ १ ॥

परमान्नाभावेन सा शुचार्दिताऽरोदीत् । तदा प्रातिवेश्मिकीभिर्दयया तस्यै क्षीरादिकं ददे, तेन पायसं संस्कृत्य खण्डाज्याभ्यां सार्धं सा सुतस्य परिवेश्य केनचित्कार्येण गृहस्यान्तर्ययौ । इतश्चैको महात्मा मासक्षपणपारणे तत्रागात् । दृष्ट्वा हृष्टः "हे दयानिधे ! इदं पायसं गृहाण" इत्युक्त्वा मुनिपात्रे पायसं न्यधात् । तदा नरस्यायुर्बबन्ध । पुनर्मात्रा प्रदत्तं भूरि पायसं बुभुजे, तेन विसूचिकादोषान्मृत्वा तत्रैव पुरे धनसारेभ्यसुतो जातः । तस्याग्रजा अन्ये त्रयः पुत्राः सवधूकाः सन्ति, तेषामुपरि चतुर्थपुत्रो धन्यनामाऽजनि । ततः प्रभृति श्रेष्ठी धनेनाधिकं ववृधे । समये चाधीतसकलकलागुणेन मातापित्रोर्महान् रागो ववृधे । तदाऽन्ये त्रयो ज्येष्ठसोदराः पितरावूचुः—"अस्य लघोरत्यादरः कथं क्रियते ?" तावू-

चतुः—"गुणैरेष पूज्यः" । ते प्रोचुः—"तर्हि परीक्षा क्रियतां" इति । ताभ्यां द्वात्रिंशतं द्वात्रिंशतं रूप्यकान् पृथक् पृथगर्पयित्वा इत्युक्ताः—"एषां लाभं नौ दर्शयेत।" धन्यस्तु बलाढ्यं मेंढकं क्रीत्वा राजपुत्रस्य मेंढकेनायोधयत् दीनाराणां सहस्रं पणीकृत्य । तत्र राजपुत्रस्य मेंढके भग्ने तस्मादसौ तत्सहस्रकं लात्वा गृहेऽगात् । ते तु व्यापारेण कमपि लाभं न प्रापुः । इत्थमनेक उपाया धन्यस्य सफला बभूवुः, इतरे तु निष्फलारम्भा इति । अथ तत्र महाधन एकः श्रेष्ठी, स कृपणगुणत्वाद्गृहस्यान्तर्गर्ते खनित्वा द्रव्येण पूर्तवान् । तथा शयनपल्यङ्ककाष्ठमध्ये वररत्नानि संगोप्य तद्गर्तोपरि निधाय नित्यं शेते । क्रमादवसानकाले पुत्रान् प्राह—"यद्यहं पञ्चत्वं प्राप्नोमि तदाऽनेन पर्यङ्केन सार्धं मम संस्कारः कार्यः"। तदन्वकृतपुण्यः स शीघ्रं मृतः। तथाविध एव स प्रेतवने नीतो रत्नव्यतिकराज्ञैस्तैः । तत्र खट्वाया याचने तेषां चाण्डालेन सह कलिर्जातः । तदा स्वजनैर्निषिद्धाश्चण्डालस्य दद्रुः । चण्डालेन विक्रेतुं चतुष्पथे स्थापितः । तदा लब्धलक्ष्यः सगर्भां तां खट्वां दृष्ट्वा मूल्यं दत्त्वा जग्राह धन्यः । तन्मध्यतो निर्गतद्रव्येण महाधनपात्रमभवत् । तेन तद्भ्रातॄणामतुल्लो मत्सरो जातः । ते त्रयस्तं हन्तुं ध्यायन्ति । तद्वार्ता वृद्धभ्रातृजायया सुतप्रीत्या धन्याय ज्ञापिता। तदाकर्ण्य धन्य एकाकी गेहान्निर्ययौ। पृथिव्यां भ्रमन् राजगृहोद्याने निषेदिवान्।

पूर्वमासीद्वनं सर्वं शुष्कं दैवानुभावतः । धन्यपुण्यप्रभावेण पुष्पितं फलितं तदा ॥ १ ॥

तद्वृदन्तेन विस्मित उद्यानपालः स्वपुत्रीं ददौ । श्रेणिकोऽपि हृष्टः स्वसुतां ददौ । भूपसुतासखी शालिभद्रस्यस्वसा सुभद्राह्वा साऽपि स्वजनैर्दत्ता । तिस्रोऽप्येता नृपो महर्ध्या पर्यणाययत् । ततो राज-

दत्तसौधादिषु मुदा प्राक्सुपात्रदानफलं बुभुजे । अन्यदा गवाक्षस्थो दरिद्रं जातं स्वकुटुम्बं वीक्ष्य ग्रामादिदानेन स्वजनान् पुनः सुखीचकार । कियत्यपि गते काले सोदरास्ते त्रयस्तं प्राहुः—"गृहवित्तं विभज्यास्माकं प्रयच्छ" । पिता प्राह—"हे मूर्खाः ! सम्प्रति धन्यार्जितमिदं जेमथ यूयं" ।

तेऽप्यूचिरे यदा पूर्वं धन्यो नंष्ट्वा गृहाद्ययौ । तदा रत्नादिकं सारं लात्वाऽगाच्चौरवन्निशि ॥ १ ॥

तातपादाः प्रकुर्वन्तु राज्यं धन्ययुताः सदा । वयं प्रातर्न भोक्ष्यामः पृथग्भावं विना खलु ॥ २ ॥

इति कुटुम्बकलहं ज्ञात्वा धन्यो निश्येकाकी चचाल । भ्रमन् कौशाम्बीपुरीचतुष्पथे गतः । तत्र मृगावतीपतिना शतानिकेन डिण्डिमो वादितः—"नृपकोशे एकं महामूल्यं रत्नमस्ति, तस्य यः परीक्षां वेत्ति तस्मै तुष्टो राजेदं ददाति—

हस्तिनां शतमेकं च वाजिनां शतपञ्चकम् । सौभाग्यमञ्जरीं पुत्रीं ग्रामपञ्चशतीयुताम् ॥ १ ॥"

अथ धन्यः पटहं वारयित्वा राजसभायां ययौ । रत्नजातिज्ञेन तेन परीक्षा विदधे । सर्वेषां चमत्कारः कृतः । नृपो निजां पुत्रीं सधनां तस्मै ददौ । सुखमग्नस्तिष्ठति । अन्यदा तेन स्वकीर्त्यर्थं लोकरीत्या च पुरान्यर्णे सरः खानयितुं प्रारब्धं । इतो धन्ये गते श्रेष्ठिगृहे दारिद्र्यं प्रसृतं । यतः—

तैलं नास्ति घृतं नास्ति नास्ति मुञ्जो युगन्धरी । वस्त्रार्थं लवणं नास्ति तन्नास्ति यत्प्रभुज्यते ॥ १ ॥

ततः श्रेष्ठी धन्यजायाद्वयं पितृवेश्मनि प्रेष्य शालिभद्रस्वसारं प्रोचे—"याहि वत्से ! स्वभ्रातुर्गृहे" सुभद्राऽऽह—

"सुखे च विभवोल्लासे सेव्यं स्त्रीभिः पितुर्गृहम्। श्वशुरस्य गृहं दुःखे सुखे दौःस्थ्येऽपि सर्वदा ॥ १ ॥"

इति वधूक्त्या हृष्टः श्रेष्ठी त्रिपुत्रस्नुषायुतः पुरान्निशि निर्गतः। कौशाम्बीपुरे क्रमादेत्य लोकमुखेभ्यः स्वाजीविकां धन्यसरोवरमृत्तिकाकर्षणेन विज्ञाय सकुटुम्बस्तत्राययौ।

नराणां दीयते तत्र दीनारद्वितयं सदा। एकं स्त्रीणां प्रवाहेण कटाह्यां भोजनं पुनः ॥ १ ॥

तत्र सरसि श्रेष्ठी कर्मकरैः सार्धं खनन् कुशलो वासरानत्यवाहयत्। अन्यदाऽश्वारूढो धन्यस्तत्राययौ। कर्मकरेषु स्वकुटुम्बं निरीक्ष्य दध्यौ—"अहो! किमेतद्दैवेन विहितं?

गोभद्रो जनको यस्या भद्रा यस्या जनन्यहो। शालिभद्रानुजा सेयं शीर्षे वहति मृत्तिकाम् ॥ १ ॥"

इति विचिन्त्य तान् प्राह—"कुतो यूयं समागताः?"। तदा श्रेष्ठी लज्जया कुटुम्बस्वरूपं प्रोच्य ययाचे—"हे जगत्पोषक! मत्कुटुम्बस्य तक्राभावे महादुःखमतस्तद्दीयतां"। धन्यः प्राह—"सुखेन तक्रार्थं मद्गृहे निजा वधूः प्रेष्या"। तदनु प्रत्यहं चतस्रो वध्वः क्रमेण तद्गृहे यान्ति। एकदा गृहागतां सुभद्रां धन्यः स्माह—"हे भद्रे! त्वं काऽसि?"।

लज्जयाऽधोमुखी सोचे देव पृच्छ न मां पुनः। शालिभद्रस्वसा चाहं गोभद्रश्रेष्ठिनन्दिनी ॥ १ ॥

भवतामभिधानेन ऊढाऽहं श्रेष्ठिसूनुना। गृहस्य कलहे जाते स मां त्यक्त्वा क्वचिद्ययौ ॥ २ ॥

धन्य ऊचे—"हे भद्रे! निजनाथवियोगिनी कथं तिष्ठसि? तस्मात्पतिव्रतं त्यक्त्वा मया सह भोगान् भुङ्क्ष्व"। साऽपि तद्वाक्यं श्रुत्वाऽऽह—

गतियुगलकमेवोन्मत्तपुष्पोत्करस्य, त्रिनयनतनुपूजा वाऽथवा भूमिपातः ।
विमलकुलभवानामङ्गनानां शरीरं, पतिकरकरजो वा सेवते सप्तजिह्वः ॥ १ ॥

इत्यादिबहुविधानुपलम्भान् श्रुत्वा दृढशीलां तां निश्चित्य सर्वः पूर्वोदन्तो ज्ञापितः । इत्युक्ते सा प्रियं मत्वा त्रपाभरादधो विलोकयामास । ततः सर्वगृहस्वामिनी कृता । तत्स्वरूपं श्रेष्ठिना ज्ञातं । ततः श्रेष्ठी सकुटुम्बो जनानां पुरो धन्यनिन्दां कुर्वन् धन्यगृह आययौ । धन्योऽपि पितरौ त्रीन् भ्रातॄंश्च नत्वा गृहेऽस्थापयत् । अथ तिस्रो भ्रातृजाया दध्युः—"नूनमस्मच्छ्वशुरादयः स्वामिनश्च धन्येन धृताः । अतो रावां विधातुं शतानीकसभां गच्छाम" । ततस्तत्र गत्वा भूपं नत्वाऽऽशीर्वादं दत्त्वा प्रोचुः—"उदरभरणार्थं युष्मन्नगरे वयं समायाताः, परं धन्येनास्माकं कुलं सर्वं हृतं, को जानाति जीवति मारितं वा ? हे पञ्चमलोकपाल ! त्वं शोधय" । ततः शतानीकः स्वसेवकान् प्रेष्य कथयामास—"मानुष्यान् शीघ्रं हि मुञ्च" । धन्योऽपि स्माह—"नाहमन्यायं करोमि, चेत्करोमि तर्हि नृपेण किं ?" । इति सगर्ववचनात्क्रुद्धो भूपो जामातरं धन्यं हन्तुं चमूं प्रैषीत् । धन्यस्तु पुण्यात्समरे जयं प्राप । तदाऽमात्यादिभिर्नृपो विज्ञप्तः—"एष दुर्नयं न करोति, महान् धर्मात्मा परस्त्रीसहोदरोऽस्ति, अतः स्त्रीणां विशेषतः किञ्चित्कारणं पृच्छ्यते" । अथामात्यैस्ताः पृष्टाः—"भवतीनां धन्याभिधः कोऽपि स्वजनोऽस्ति ?"। ताः प्रोचुः—"देवरोऽस्माकं धन्यनामा पुराऽभवत् । स गृहार्द्धिं त्यक्त्वा कुत्रापि गतः, जीवति वा मृतो वेति न ज्ञायते" । सचिवैः प्रोचिरे—"यूयं धन्यस्य देहलक्षणं वित्थ ?" ।

ताः प्रोचुर्देवरोऽस्माकं बालकोऽभूत्पुरा यदा । तदा प्रक्षालने दृष्टौ पादौ पद्माङ्कितौ किल ॥ १ ॥

तदा सचिवैर्धन्यस्तत्राहूतः, भ्रातृजाया वीक्ष्य नत्वा प्राह—"किं भवतीनां हृदि भ्रमो जज्ञे ? श्रेणिकसुतापतिः स धन्यो युष्माभिः स्मर्यते ?" । ताः प्राहुः—"भक्त्या त्वत्पादौ प्रक्षाल्य क्रमाम्बुजेन देवरं ज्ञास्यामः" ।

ऊचे धन्यः परस्त्रीणां स्पर्शाद्भवति पातकम् । नाहं परस्त्रिया सार्धं वच्मि स्पर्शे तु का कथा ॥ १ ॥

ततो भ्रातृजायात्रयं नत्वा निजौकसि प्रैषीत् । ततस्त्रयाणां बन्धूनां ग्रामपञ्चशतीं दत्त्वा धन्यः पत्नीद्वययुतो राजगृहं ययौ । तत्र महेभ्यैश्चतस्रः कन्यका ढौकिताः, इत्थं प्रियाष्टकं तस्य जज्ञे । इतो धन्याग्रजैः पञ्चशतग्रामेषु स्वाज्ञा प्रदापिता दर्पात्, तेन पञ्चशतग्रामेषु दुर्भिक्षं प्रसृतं, लोकाः काकनाशं नेशुः । ततस्ते निर्भाग्या गोधूमैर्वृषभान् भृत्वा राजगृहे वाणिज्यार्थमेयुः, तादृशा धन्येन दृष्टाः । पुनर्गृहसारं सर्वं विभज्य त्रयो भागास्तेभ्यो दत्ताः, तदा भागे चतुर्दशहेमकोट्य आयाताः । तत्सुवर्णमादाय पुरबाह्यगामुकाः सीमनि वित्ताधिष्ठायकै रुद्धाः । गर्वं मुक्त्वा पुनर्धन्यं भेजुः । अथ चतुर्ज्ञानी धर्मघोषसूरिस्तत्राययौ । धन्यो भ्रातृभिरावृतः सूरिं प्रणम्य देशनान्ते व्यजिज्ञपत्—"स्वामिन् ! ममाग्रजास्त्रिर्निर्धनाः कथं भूताः ?" । सूरिः प्राग्भवं स्माह—क्वापि ग्रामे त्रयो भ्रातरः काष्ठभारान् विक्रीय जीवन्ति स्म । एकदा काष्ठार्थं सशम्बला अरण्यं गताः, मध्याह्ने भोक्तुमुपविष्टाः, साधुं वीक्ष्य दानं ददुः, मुनौ गते पश्चात्तापं चक्रुः—"मुधा लात्वा व्रती गतः, न गोत्रजोऽयं, अथवा न दोषोऽस्य, वयमेव मूर्खाः,

यन्मुधा क्षुधाशोषिताः स्मः"। एवं पश्चात्तापपरा निजं सदनं ययुः। क्रमादायुःपूर्तौ अल्पर्द्धिव्यन्तरत्वं प्राप्यात्रोत्पन्नाः।

पश्चात्तापो न तत्कार्यो दत्ते दाने मनीषिभिः। किंतु पुण्यद्रुमो भावजलेन परिषिच्यते ॥ १ ॥

अथ शालिभद्रभगिनी सूरिं पप्रच्छ—"केन कर्मणा मया मृत्तिका शिरसा व्यूढा?"। गुरवस्तां प्राहुः—"यदा धन्यः पूर्वं गवां चारकोऽभूत्तदा यूयं प्राक्तन्यश्चतस्रो वध्वोऽस्य प्रातिवेश्मिकतां गताः धन्येन भद्रये प्रार्थिते तन्मात्रा रुदितं। तदा चतस्रः प्रमदाः सदया मिमीलुः।

एकया प्रददे दुग्धं तण्डुलाश्च द्वितीयया। खण्डस्तृतीयया प्राज्यमाज्यं वर्यं चतुर्थया ॥ १ ॥

ताभिरपि पुण्यमर्जितं, तेन पुण्येन राजसुतादयोऽत्र जाताः। त्वया सुभद्रया मृद्वहनकर्म यथा बद्धं तथा श्रृणु—

वहन्ती गोमयं शीर्षे दासी किञ्चिद्व्यजिज्ञपत्। त्वं महेभ्यप्रिया तां च सतिरस्कारमब्रवीः ॥ १ ॥

भारमुद्वह रे दासि गिरैवं दूयते स्म सा। स्वसा त्वं शालिभद्रस्याप्यवहो मृत्तिकां ततः ॥ २ ॥

इत्येवं संशयं भित्त्वा सूरिरन्यत्र विजहार। धन्यस्तु सुखमयं सदा समयं गमयामासेति।

यथा धन्यस्य वैराग्यं यथा चायं व्रतं ललौ। तत्सर्वं विबुधैर्ज्ञेयं शालिभद्रकथानकात् ॥ १ ॥

---

१ आवन्तत्वं चिन्त्यम्।

दत्त्वा दानं ये मुनीन्द्रेषु पूर्वं, पश्चात्तापं कुर्वते पुण्यहीनाः ।
भाग्यैर्लब्ध्वा यानपात्रं प्रधानं, झम्पापातं तन्वते दीनमुच्चैः ॥ ३ ॥

॥ इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ पञ्चदशस्तम्भे २१८ व्याख्यानम् ॥

## व्याख्यानं ॥ २१९ ॥

अथ चतुर्धा धर्ममाह—

दानं सुपात्रे विशदं च शीलं, तपो विचित्रं शुभभावना च ।
भवार्णवोत्तारणयानपात्रं, धर्मं चतुर्धा मुनयो वदन्ति ॥ १ ॥

दानं तु पूर्वं वर्णितं १ । शीलस्वरूपं चेदं—

ऐश्वर्यराजराजोऽपि रूपमीनध्वजोऽपि च । सीतया रावण इव त्याज्यो नार्या नरः परः ॥ १ ॥

यथा राज्यशृङ्गारार्पणप्रलोभिताऽपि रावणेन सीता महासती शीलान्न भ्रष्टा । यतः—

सीतया दुरपवादभीतया, पावके स्वतनुराहुतीकृता ।
पावकस्तु जलतां जगाम य—त्तत्र शीलमहिमा विजृम्भितः ॥ १ ॥

एवमपरैः शीले यतनीयं । अथ वसन्तपुरे शिवंकरः श्रेष्ठी परमार्हतो निवसति । तत्र श्रीधर्मदाससूरयः संप्राप्ताः । तद्वन्दनार्थं शिवंकरो गतः । वन्दनकानि दत्तानि । गुरुपार्श्वे आलोचना गृहीता । सहर्षेणाभाणि—"भगवन् ! मम लक्षसाधर्मिकभोजनप्रदानमनोरथोऽस्ति, परं किं करोमि ? धनं तथाविधं नास्ति" । गुरुभिरभाणि—"याहि भृगुकच्छे श्रीमुनिसुव्रतस्वामिवन्दनार्थं, तत्र जिनदासाभिधः श्राद्धः सौभाग्यदेवीभार्यायुतः सर्वशक्त्या भोजनाद्यलङ्करणैः प्रीणनीयः, तद्वात्सल्येन लक्षसाधर्मिकभोजनदानपुण्यं भविष्यति" । ततस्तेन तथा कृतं, भोजनादिभक्त्या जिनदासः प्रपूजितः । तदनु पृष्टं चतुष्पथे—"भो लोकाः ! जिनदासः सुकृतिः कीदृशोऽस्ति ? सत्यो वा दाम्भिको वा ?" । लोकाः कथयन्ति—"शृणु भोः ! अयं जिनदासः सप्तवार्षिकः शालायां प्राप्तः । गुरुमुखाच्छीलोपदेशमालाव्याख्यां श्रुत्वा तेनैकान्तरितं ब्रह्मव्रतं प्रतिपन्नं । एवं सौभाग्यदेव्याऽपि साध्वीपार्श्वे एकान्तरशीलप्रतिपालनं प्रतिपन्नं । भवितव्यतावशात्परस्परं पाणिग्रहणं जातं, ततो यस्मिन् दिने जिनदासस्य मुत्कलता, तत्र दिने तस्या नियमः । यस्मिन् दिने तस्या मुत्कलता तस्मिन् तस्याभिग्रहः । तदनु सौभाग्यदेव्याऽभाणि—"स्वामिन् ! पुनरपरायाः करपीडनं कुरु" । श्रेष्ठिनोक्तं—"अहं दीक्षां ग्रहीष्यामि" । तदनु गुरुपार्श्वे ब्रह्मव्रतमेवाचीर्णं द्वाभ्यां श्रीसङ्घपरिधापनिकापूर्वं । अत आभ्यां तुल्यः सम्प्रति कोऽपि न श्रूयते आबालब्रह्मचारी" । ततस्तत्पादपर्युपासनां कृत्वा शिवंकरो वसन्तपुरमागात् । इत्थमपरेऽपि द्रौपदीकलावती-

शीलवतीसुभद्रासुदर्शनजम्बुप्रभृतीनां दृष्टान्ताः शतशः शीलमालातः स्वयं वाच्याः इति २। अथ तपोवर्णनमिदं—तपसा समं भावमङ्गलमन्यन्नास्ति, यतो नूनं तद्भवमुक्तिगामिभैस्तीर्थंकरैरपि तपश्चक्रे, यथा—

संवच्छरमुसभजिणो छम्मासा वद्धमाणजिणचंदो। इअ विहरिआ निरसणा जइज्जए उवमाणेण ॥ १ ॥

अन्यच्च इष्टार्थकृत्तपः, यथा चक्रवर्तिनोऽष्टमतपसा मागधवरदामगङ्गासिन्धुप्रभासाधिपदेवानां जयः स्यात्, देवाकर्षणं तपसा हरिकेशादिमुनिवत्। तथा श्रीनाभेयपुत्री बाहुबलिसहोदरी, तद्वत्तपः कार्यं। यतः—

सट्ठिं वाससहस्सा अविलंबं अंबिलाइं विहिआइं। जीए निक्कमणकए सा सुंदरि साविया धन्ना ॥ १ ॥

तपसा कुष्ठादिरोगाणां क्षयः स्यात्, तद्यथा—

छज्जइ सणंकुमारो तवबलखेलाइलद्धिसंपन्नो। निट्ठुअखरण्टि अंगुलि सुवन्नसोहं पयासंतो ॥ १ ॥

तस्मात्तपः कार्यं। अन्यच्च—

विरज्य विषयेभ्यो यैस्तेपे मोक्षफलं तपः। तैरेव फलमङ्गस्य जगृहे तत्त्ववेदिभिः ॥ १ ॥

येन शरीरं पुष्टं बहुत्रसस्थावरजीवानां क्षयकारि वज्रायोगोलकप्रायं वस्त्राद्यनेकवस्तुविनाशकमसारमेव दृश्यते, सारं तु तपःसाधकं। यतः—

अथिरेण थिरो समलेण निम्मलो परवसेण साहीणो। देहेण जइ विढप्पइ धम्मो ता किं न पज्जत्तं ॥ १ ॥

तत्तपः शरीरसमाधिना कार्यं, यतः—

सो अ तवो कायव्वो जेण मणो अगुणं (मंगुलं) न चिंतेइ। जेण न इंदियहाणी जेण य जोगा न हायंति ॥१॥

तदपि निर्जरार्थं कार्यं, यतः—नो इहलोगठ्याए तवमहिठिज्जा, नो परलोगठ्याए, नो कित्तिवन्नसिलोगठ्याए, नन्नत्थ निज्जरठ्याए तवमहिठिज्जा। विवेकं विना प्रत्याख्यानं कुर्वतस्तनुतापकृत्। यतः—

तामलितापसतपसा सिध्यन्ति जिनेन्द्रशासने सप्त। अज्ञानस्य तु दोषात्स ययावीशानसुरलोके ॥ १ ॥

इति। तथा तपस्विना क्रोधस्त्याज्यः, यतो विपुलं तपः क्रोधकृशानुः श्रीखण्डमारवद्दहति। उक्तं च—

एकेन दिनेन तेजोव्यूहं षण्मासिकं ज्वरो हन्ति।
कोपः क्षणेन सुकृतं यदर्जितं पूर्वकोट्यापि ॥ १ ॥
द्रुमोत्थं हन्ति विषं न हि द्रुमं, न वा भुजङ्गप्रभवं भुजङ्गमम्।
अतः समुत्पत्तिपदं दहत्यहो, महोल्वणं क्रोधहलाहलं पुनः ॥ २ ॥
कषाया देहकारायां चत्वारो यामिका इव।
यावज्जाग्रति पार्श्वस्थास्तावन्मोक्षः कुतो नृणाम् ॥ ३ ॥

अत्र शुष्काङ्गुलिजनकारकस्य ज्ञातमिति। तथा तपः कुर्वतामपि श्राद्धानामुद्यापनेन महत्फलं। यतः—

वृक्षो यथा दोहदपूरणेन, कायो यथा षड्रसभोजनेन।
विशेषशोभां लभते यथोक्ते-नोद्यापनेनैव तथा तपोऽपि ॥ १ ॥
लक्ष्मीः कृतार्था सफलं तपोऽपि, ध्यानं सदोच्चैर्जिनबोधिलाभः।
जिनस्य भक्तिर्जिनशासनश्री-र्गुणाः स्युरुद्यापनतो नराणाम् ॥ २ ॥

ज्ञातं यथा—पेथडदेसाधुनाऽष्टषष्टिस्वर्णवर्तुलिकामुक्ताप्रवालभृता अष्टषष्टिसर्वफलानि अष्टषष्टिहाटकादिनाणकपुञ्जा अष्टषष्टिसर्वजातिपक्वान्नसुखभक्षिका अष्टषष्टिदुकूलादिमहाध्वजादिविस्तरसुभगं श्रीनमस्कारफलोद्यापनं कृतं सकलविस्मयावहं । एवमपरैरपि स्वशक्त्या कार्यं । इति ३ ।

अथ भावनावर्णनमाह—

दानं तपस्तथा शीलं नृणां भावेन वर्जितम् । अर्थहानिः क्षुधापीडा कायक्लेशश्च केवलः ॥ १ ॥

भावना भरतेश्वरवद्भाव्या भोगयोगेऽपि मुक्तिदा । मरुदेवास्वामिनी भाववशान्मुक्तिं गता कदाप्यकृतैकाशनाऽपि । प्रसन्नचन्द्रवल्कलचिरिगौतमप्रतिबोधितपञ्चदशशततापसानां भावात्केवलोत्पत्तिः । यतः—

थोवंऽपि अणुट्ठाणं भावविसुद्धं हणइ कम्ममलं । लहुओऽवि सहस्सकिरणो तिमिरसमूहं पणासेइ ॥ १ ॥

भावो द्विविधः—प्रशस्तोऽप्रशस्तश्च । जिनाज्ञातत्पराणां निदानवर्जितानां निराशंसया संसारनिस्तारप्राप्त्यर्थं दानादिधर्मं विस्तारयतां प्रशस्तो भावः स्यात् । किञ्चिदाशंसादिदोषसंयुक्तादनुष्ठानान्नृणां दानादिकुर्वतामप्रशस्तो भावः स्यात् ।

भावस्यैकाग्रचित्तस्य सान्निध्याद्भवः शिवम् । ययुनैकोऽपि दानाद्यैर्भावहीनैर्घनैरपि ॥ १ ॥

किं बहुना ?

वित्तसाध्यमिह दानमुत्तमं, शीलमप्यविकलं सुदुर्धरम् ।
दुष्कराणि च तपांसि भावना, स्वीयचित्तवशगेति भाव्यताम् ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ पञ्चदश-स्तम्भे २१९ व्याख्यानम् ॥



## ॥ व्याख्यानम् ॥ २२० ॥

अथ विवेकिकृत्यमाह—

विवेकवान्नरः कश्चित् स्वभावाद्धर्मतत्त्वताम् । शीघ्रं विज्ञाय गृह्णाति कपिलाह्वगुरोरिव ॥ १ ॥

कौशाम्ब्यां नगर्यां जितशत्रू राजाऽस्ति । तस्य पुरोधाश्चतुर्दशविद्यापारगः काश्यपनामा विप्रोऽभूत् । तस्य यशा पत्नी । तयोः पुत्रः कपिलनामा जातः । तस्य शिशोर्बाल्ये काश्यपो दैवात्पञ्चत्वं प्राप । कपिलं बालमज्ञं ज्ञात्वा राजा तस्य पितृपदेऽन्यं योग्यं विप्रं स्थापयामास । सोऽन्वहं हयारूढश्छत्राच्छादितदेहः सेवकैः परिवृतो राजद्वारादिषु याति । तदा कपिलजननी तं तुरगारूढं प्रेक्ष्य रुरोद । कपिलस्तां रुदन्तीं वीक्ष्य कारणं पप्रच्छ—“हे मातः ! त्वमेनं विप्रं दृष्ट्वा कथं रोदिषि ? ममाग्रे सत्यं समाख्याहि” । ततस्तया प्रोक्तं—“वत्स ! तव जनकस्थाने राज्ञाऽयं स्थापितः, यथाऽयं संपदां पदं वर्तते तथा तव पिता

पूर्वमभूत्, तं पतिं स्मृत्वा जातखेदा रोदिमि, अनेन तव पितुः श्रीः प्राप्ता, त्वं त्वपठितः"। पुनः कपिलो जजल्प—"एतत्पितृपदं कथमायाति ?"। तया प्रोक्तं "विद्याभ्यासं कुरु, यथा तव जनकस्थाने राजा पुनस्त्वां स्थापयति"। स प्राह—"हे मातः! अहं कस्य समीपेऽध्ययनं करोमि ?"। साऽवदत्—"अस्यां नगर्यां सर्वोऽपि तव द्वेषी वर्तते, तस्माच्छ्रावस्त्यां पुर्यां तव पितुर्मित्रमिन्द्रदत्तो द्विजः पण्डितस्त्वां सकलकलापूर्णं करिष्यति"। ततस्तत्र गतः कपिलः, तस्य चरणौ नत्वा व्यजिज्ञपत्—"हे तात! मात्रा त्वदुपान्ते प्रेषितः पठनायागतोऽहं"। ततस्तेनोत्सङ्गे धृतः संभाषितो भोजितश्च। ततः प्रोक्तं—"अहं तव विद्याभ्यासं कारयिष्ये, परं तव भोजनचिन्ता कथं भविष्यति ? मम गृहे तु तन्नास्ति यद्भुज्यते"। ततस्तेनोक्तं—"भिक्षयाऽहं भोजनं करिष्ये"। इन्द्रदत्तेनोक्तं—"भो वत्स! भिक्षाभ्रमणे विद्याभ्यासो न भवति, तथा भोजनरहितस्याध्ययनं न भवति, यतो विना भोजनं मुरजोऽपि न गुञ्जति, अतः प्रथमं तच्चिन्ता क्रियते"। ततस्तं बालं करे धृत्वा इन्द्रदत्तः शालिभद्रमहेभ्यगृहे गतः, ॐ भूर्भुवः स्वरित्यादिगायत्रीमन्त्रं गाढस्वरेण पठन् बहिः स्थितः स्वं द्विजन्मानं तमज्ञापयत्। ततः श्रेष्ठिना समाहूय पृष्टः—"भो विप्र! किं याचसे ? यत्तवेप्सितं तद्याचस्व"। इन्द्रदत्तेनोक्तं—"एष बालो विप्रो विद्यार्थी, त्वमस्य प्रत्यहं भोजनं देहि, अहं विद्यां प्रयच्छामि, यतो मम द्रव्यं नास्ति, अतो भवदन्तिके प्रत्यहं भोजनं याचे"। तस्य भोजनं श्रेष्ठिनाऽङ्गीकृतं। तद्दिनादारभ्य कपिल इन्द्रदत्तपार्श्वेऽधीत्य शालिभद्रगृहे भोक्तुं याति, तदा तस्यैका दासी परिवेषयति। ततो हास्यादिक्रमेण तस्यां रक्तो जातः, साऽपि रक्ता बभूव।

ततस्तौ परस्परं स्त्रीभर्ताराविव रमेते, धिग्विषयान्, यतो विषयासक्तः पुमान् किमपि कृत्यं न जानाति । एवं तयोर्दिनानि यान्ति । अन्यदा दास्योक्तं—"मम भर्ता त्वमेव, परं निःस्वस्तेनापरं नरं प्रार्थयात्रार्थं भजे, न पुनर्भर्तृबुध्ध्या" । तेनापि तत्प्रतिपन्नं । अन्येद्युस्तस्मिन्नगरे कश्चिद्दासीनामुत्सवोऽभवत्, तदानीं सा दासी पुष्पपत्रादिकृते द्रव्याद्यभावात् विमनस्का जाता । कपिलेन विमनस्कां दृष्ट्वा पृष्टं—"हे स्त्रि ! त्वं विमनस्का किं दृश्यसे ?" । तयोक्तं—"अद्य दासीनामुत्सवो वर्तते, अत्र पत्रपुष्पादि ममोपयुज्यते, अन्यथा मां दासीवर्गो विगोपयिष्यति" । एतत्तस्या वचनं श्रुत्वा तद्दुःखं[१] हृदये कपिलो धृत्वा किञ्चिद्रुदन्मौनमालम्ब्य स्थितः । तं तथाविधं दृष्ट्वा दास्यप्यवदत्—"हे स्वामिंस्त्वं मा विषीद, अस्मिन्नगरे धनः श्रेष्ठी वर्तते, तं निशात्यये यः प्रबोधयति तस्मै स श्रेष्ठी द्वौ स्वर्णमाषौ ददाति, अतस्त्वं तत्र गत्वा प्रथमं तं प्रबोधय, स जागरितस्तव माषकद्वयं दास्यति, तत्त्वं मे समर्पयेः, यथाऽऽवयोरपि कल्याणं भवति" । कपिलेन तत्सर्वं प्रतिपन्नं । ततः कपिलस्तस्या एवं वचनं निशम्य निर्गतः, माऽन्यः कोऽपि तत्र प्रथमं यात्विति भिया जागरितः, चन्द्रज्योत्स्नया निशामविदन् मार्गे गच्छंस्तलारक्षकैर्धृतः चौरधिया बद्धः चौरचर्या हीदृश्येव भवतीति । प्रभाते तैरारक्षैः प्रसेनजितो राज्ञः पुरो ढौकितः । राज्ञा पृष्टः—"भो विप्र ! त्वं कः ? कुत्र वासी ? किमर्थमागतोऽसि ?" । तेन सर्वा पूर्वकथा प्रोक्ता । ततो दयार्द्रहृदयेन राज्ञा मुक्तो भाषितश्च—"भो महात्मन् ! यद्रोचते तद्याचस्व, तव वाञ्छितमहं यच्छामि" । स प्राह—"राजन् !

१ तद्दुःखव्यन्तरावेशविवशः कपिलोऽधृत्या किञ्चिद्रुदन् इति प्रत्यन्तरे ।

आलोच्य याचे"। ततोऽशोकवनान्तरे गत्वा विमृशति, यथा द्वाभ्यां माषाभ्यां वस्त्रादि न स्यात्, तर्हि सुवर्णशतं मार्गयामि, स्वर्णशतेन गृहवाहनादि न स्यात्, तर्हि स्वर्णसहस्रं याचे। सहस्रेणापत्यविवाहाद्युत्सवा न भवन्ति, तर्हि नृपान्तिके स्वर्णलक्षं याचे। स्वर्णलक्षेणापि दानमानसन्मानबन्धुदीनोद्धरणादि कर्तुं नो शक्यते, अतः कोटिं, एवं कोटिशतं कोटिसहस्रं वा तस्मादर्थये"। एवं तस्य कपिलस्य चिन्तयतः शुभकर्मोदयाद्विशुद्धिरुत्पन्ना, यथा—

जहा लाहो तहा लोहो लाहाल्लोहो पवड्ढइ। दोमासकणयकज्जं कोडिए वि न निट्ठियं ॥ १ ॥

अहो! लोभसागरो दुर्धरः केनापि पूरयितुं न शक्यते। तथाऽहं विद्यार्थमागतः स्वगृहं त्यक्त्वा परदेशे परगृहे समागतः, एष इन्द्रदत्तो धर्मार्थं मे विद्यां प्रयच्छति। तथैष शालिभद्रो मम भोजनं प्रयच्छति, अल्पमतिना यौवनमदेन तस्या दास्या गमनं कृतं, निर्मलं कुलं कलङ्कितं, धिग् विषयान्, यत्ते जीवानेवं विडम्बयन्ति" इत्यादि भावयन् एव विषयाद्विरक्तः समुत्पन्नजातिस्मरणः कपिलः स्वयंबुद्धो बभूव। ततः स्वमूर्धजानुद्धृत्य देवतार्पितरजोहरणवदनवस्त्रिकादिमुनिवेषमादद। तत उत्थाय प्रसेनजितो राज्ञः पुरो बभूव। राज्ञोक्तं—"एतत् किं?"। तेनोक्तं—"जहा लाहो तहा लोहो०" इत्यादि कथयित्वा मुनौ स्थिते राजा प्रोचे—"मयाऽऽज्ञा दत्ता, भोगान् भुङ्क्ष्व, दुष्करं व्रतं मुञ्च"। मुनिनोक्तं—"गृहीतव्रतं प्राणान्तेऽपि न मुञ्चामि, अहं निर्ग्रन्थो भूतवानस्मि, हे राजेन्द्र! तव धर्मलाभोऽस्तु"। इत्युक्त्वा कपिलमुनिस्ततो निर्गत्य निर्ममो निरहङ्कारो निरीहो वसुन्धरां विजहार। एवं व्रतं पालयतः

कपिलस्य महामुनेः षण्मासी ययौ, तदा चरमज्ञानमभूत् । इतश्च राजगृहस्यापान्तरालेऽष्टादशयोजनमानाऽतिभयङ्कराऽटव्यस्ति, तस्यामटव्यां बलभद्रादयः पञ्चशतीचौरा वसन्ति स्म । प्रत्येकबुद्धर्षिस्तान् बोधार्हान् ज्ञात्वा तत्रारण्ये समेतः । ते चौरा अपि ज्ञान्यन्तिके एयुः । पल्लीशो ज्ञानिनं प्राह—"निर्ग्रन्थस्य तव नृत्यं समायाति ?" । लाभं मत्वा मुनिः प्राह—"वादित्रवादकान् विना नृत्यं न स्यात्" । चौरैरुक्तं—"तालवादका वयं भविष्यामः, त्वं नृत्यं कुरु" । अथ कपिलमुनिर्यतनया नृत्यं करोति । ते चौरा अभितो भ्रान्त्वा भ्रान्त्वा तालादिकं वादयन्ति । साधुस्तु तेषां मध्ये नृत्यं कुर्वन् प्राकृतबन्धेन ध्रुवान् गाथाश्च गायति, यथा—

अधुवे असासयम्मि संसारम्मि दुक्खपूराए । किं नाम हुज्ज तं कम्मं जेणाहं दुग्गइं न गच्छेज्जा ॥ १ ॥

इत्यादिपञ्चशतगाथा ज्ञानी जगौ । ता ध्रुवाः श्रुत्वा ते चौराः सर्वेऽपि प्रत्यबुध्यन्त, पञ्चशतचौराणां व्रतं ददौ । देवतादत्तलिङ्गास्ते महर्षिणो बभूवुः, ते सर्वे केवलिना सार्धं भुवि विहरन्ति स्म । ततः कपिलकेवली कियन्ति वर्षाणि पृथिव्यां विहृत्य मोक्षं जगाम ।

इत्थं कपिलमहर्षिः सम्यग्भावेन केवलं लेभे । बलभद्रप्रमुखानपि चौरान् प्रतिबोध्य सिद्धिमगात् ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ
पञ्चदशस्तम्भे २२० व्याख्यानम् ॥

## व्याख्यानं ॥ २२१ ॥



अथ शुद्धाशुद्धव्रतपालनफलमाह—

बहुकालं व्रतं चीर्णं सातिचारं निरर्थकम् । एकमपि दिनं साधोर्व्रतं शुचि शुभङ्करम् ॥ १ ॥

स्पष्टः । भावार्थस्तु वक्ष्यमाणसंबन्धेन ज्ञेयः, स चायं—जम्बूद्वीपमहाविदेहे पुण्डरीकिणी पुर्यभूत् । तत्र महापद्मो नृपः, तस्य द्वौ सुतौ जातौ । महापद्मो धर्मं श्रुत्वा ज्येष्ठपुत्रं पुण्डरीकं राज्ये न्यस्य लघुपुत्रं कण्डरीकं युवराजपदे न्यस्य स्वयं दीक्षां ललौ, कर्मक्षयेण मुक्तिमाप । अन्यदा केचिन्मुनयस्तत्रागुः । तान्नन्तुं द्वौ बन्धू जग्मतुः । मुनीशस्तयोरग्रे धर्मतत्त्वं प्राह । यतः—

भ्राम्यन् भवार्णवे प्राणी प्राप्य कृच्छ्रान्नृणां भवम् । पोतवद्यो हारयति मुधा कोऽन्यस्ततो जडः ॥ १ ॥

श्रुत्वेति संविग्नौ तौ गृहमीयतुः । पुण्डरीकोऽनुजं जगौ—"वत्स ! राज्यमिदमादत्स्व, अहं संयमं गृह्णामि" । कण्डरीकस्तं प्रोचे—"हे भ्रातः ! संसारदुःखे मां किं पातयसि ? अहं दीक्षां ग्रहीष्यामि" । "हे अनुज ! तारुण्ये इन्द्रियग्रामो दुर्जयः परिषहाश्च दुःसहाः" । कण्डरीकः प्राह—"हे बन्धो ! नरकादिदुःखेभ्यो नाधिकं दुःखं, अतः स्वीकृतं करिष्यामि" । ततो महोत्सवेन दीक्षां जग्राह । पुण्डरीकस्तु मन्त्रिणामुपरोधेन भावयतिर्गृहे स्थितः । कण्डरीकर्षिरेकादशाङ्गधरोऽभवत् । अन्तप्रान्तादिभोज्यैस्तपोभिश्च रोगग्रस्तदेहो जातः । ततः सूरिणा सह विहरन् स्वनगरे आजगाम । भूपो वन्दनायैतः । साधून्नत्वा

कृशवपुष्ट्वेनानुपलक्ष्य बन्धोः स्वरूपं सूरीशं पप्रच्छ। सूरिः प्राह—"अयं पुरः स्थितः स एव तव बन्धुः"। ततस्तं नत्वा रोगग्रस्तं तद्वपुर्ज्ञात्वा सूरीशमापृच्छ्य तं स्वपुरे नीत्वा यानशालायां ररक्ष। राजौषधादिभिर्नीरोगो जातः। राजसंबन्धिभोजनै रसगृद्धिर्जाता। ततो भूपो नित्यं तं प्रत्याह—"हे पूज्य! यूयमनियतविहारिणश्चतुर्धा प्रतिबन्धरहिताः, अथ यूयं विहारोत्सुका जाताः, धन्या यूयं निर्ग्रन्थाः। अहमधन्यो यद्भोगकर्दमे कदर्थितोऽस्मि"। इत्यादिवचनं श्रुत्वा लज्जितः पुनर्गुर्वन्तिके गतः। अन्येद्युर्वसन्ततौ पौरान् स्त्रीभिः सह क्रीडापरान् वीक्ष्य चारित्रावरणकर्मतः श्रामण्यतोऽचलत्। ततः पुण्डरीकिण्या वन एत्य तरुशाखाग्रे पात्राण्यालम्ब्य हरितस्रस्तरे कोमलेऽलुठत्। इतश्च तद्धात्र्या मात्रा दृष्टः संयमभ्रष्टः। तया तद्बन्धवे ज्ञापितं। सोऽपि शीघ्रं सपरिकरस्तत्रागतः। तं साधुं पृथ्वीशिलापट्टे चिन्तापरं प्रमादिनं भूमिं लिखन्तं वीक्ष्य प्राह—"हे मुने! हे निर्ग्रन्थ! हे निःस्पृह! हे सुखदुःखतुल्यज्ञ! त्वं कृतपुण्योऽसि, धन्योऽसि संयमयात्रया" इत्यादिनाऽनेकधा स्तुतोऽपि सम्यग्भूतास्यो नैव स्थितः, न किमपि जजल्प। तदा भूपस्तं भ्रष्टसंयमनिष्ठं विज्ञाय प्राह—"हे मुने बन्धो! सम्मुखं किं नावलोकसे? प्रशस्तध्यानेन वर्तसे? किं वाऽप्रशस्तध्यानेन? यद्यप्रशस्तध्यानारूढोऽसि तर्हि त्वया प्रसह्यादत्तं प्राग् भावराज्यं प्राज्यं तस्य चिह्नं पात्रादिकं मह्यं देहि, त्वं तु प्रान्ते विरसफलं मद्राज्यं तस्य चिह्नममुं पट्टहस्तिनं गृहाण गृहाण"। इति श्रुत्वा सहर्षो जातः, शीघ्रं पट्टहस्त्यारूढो नगरे प्रविवेश। पुण्डरीकः साधुश्रेष्ठो विलापपरानन्तःपुरादीन् झटिति सर्पः कञ्चुकमिव मुक्त्वा यतिलिङ्गान्युपादाय व्यहरत्। कण्डरीकस्तु

चिरं बुभुक्षितो यदृच्छया भक्ष्याभक्ष्यमहारयत्। तस्याथ दुर्जराहारभोजनाद्भोगजागरणाच्च निशि विसूचिका बाढमभूत्। उत्फुल्लोदरस्य रुद्धपवनस्य तृषार्दितस्य तस्य "भग्नव्रतोऽतिपापोऽसौ" इति मत्वा नियोगिभिश्चिकित्सा न कृता। ततोऽर्तिमानसौ दध्यौ—"यदीयं रात्रिर्यास्यति तदा प्रगे सेवकान् हनिष्यामि"। इति रौद्रध्यानपरः स व्यपादि, सप्तम्यां पृथिव्यामप्रतिष्ठाननरके जगाम। पुण्डरीकराजर्षिस्तु इत्यभिग्रहं जग्राह—"गुरुपार्श्वे व्रतान्यादाय भोक्ष्येऽहं"। मार्गे क्षुत्तृट्परीषहं सहमानो मृदुदेहोऽपि न खेदं प्राप। षष्ठतपसा गुरुं प्राप्य व्रतानि संगृह्य गुर्वाज्ञया पारणार्थं भिक्षां ययाचे, तदान्तप्रान्ततुच्छरूक्षाहारं प्राप्य प्राणवृत्तिं चकार। तत्तुच्छाहारेण तीव्रा वेदनाऽभूत्। स कृताराधनो मृत्वा सर्वार्थसिद्धिभाग्जज्ञे। यतः षष्ठाङ्गे—

वाससहस्सं पि जइ काऊण वि संयमं विउलं पि। अंते किलिट्ठभावो न वि सिज्झइ कंडरीय व्व ॥ १ ॥

अप्पेण वि कालेण केइ जहा गहियसीलसामन्ना। साहंति निययकज्जं पुंडरियमहारिसीव्व जहा ॥ २ ॥

एवं च सम्यक् श्रामण्यमापाद्य परमां गतिम्। केचिद्यान्त्यचिरादन्ये सातिचाराश्चिरादपि ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ
पञ्चदशस्तम्भे २२१ व्याख्यानम् ॥



## ॥ व्याख्यानं ॥ २२२ ॥

अथोत्तमनृभिः सत्सङ्गो विधेय इति शिष्टशिक्षावाक्यपुष्ट्यर्थमाह—

उत्तमाधमयोः सङ्गफलं लब्धं परीक्षया । प्रज्ञाकरेण विप्रेण ततः कार्या सुसङ्गतिः ॥ १ ॥

स्पष्टः । श्लोकसूचितसंबन्धश्चायं—वीरपुरे दिवाकरो द्विजः षट्कर्मकर्मठः । तत्पुत्रः प्रज्ञाकरः सप्तव्यसनरतः । स निरङ्कुशो द्विप इव स्वैरं सर्वत्र भ्रमति । स चैवं पित्रा शिक्षितः—"हे वत्स ! त्वं सत्सङ्गं विधेहि, किं तव धूर्ताधमसङ्गेन ? सदपि शीलं विलीयते, यतः—

पश्य सत्सङ्गमाहात्म्यं स्पर्शपाषाणयोगतः । लोहं स्वर्णं भवेत्स्वर्णयोगात् काचो मणीयते ॥ १ ॥

विकाराय भवत्येव कुलजोऽपि कुसङ्गतः । कुलजातोऽपि दाहाय शङ्खो वह्निनिषेवणात् ॥ २ ॥

अतो विद्वज्जनसङ्गेन शास्त्राण्यवगाहस्व, काव्यरसामृतं पिब, कलाः शिक्षस्व, धर्मं कुरु, स्वकुलं चोद्धर" । इति शिक्षितोऽपि स प्रतिवक्ति—

न शास्त्रेण क्षुधा याति न च काव्यरसेन तृट् । एकमेवार्जनीयं तु द्रविणं निष्फलाः कलाः ॥ १ ॥

एवं तस्योद्धतोक्तिभिर्दूनो दिवाकरो मौनेन स्थितः । पुनरपि मृत्युसमये वात्सल्यादाकार्य पुत्रमभ्याषत—"वत्स ! यद्यपि मम वाक्ये तव नास्था तथाप्यमुमेकं तु श्लोकं गृहाण, येन मम चित्ते समाधिर्भवेत् । तथाहि—

कृतज्ञस्वामिसंसर्गमुत्तमस्त्रीपरिग्रहम् । कुर्वन्मित्रमलोभं च नरो नैवावसीदति ॥ १ ॥
उत्तमैः सह सांगत्यं पण्डितैः सह संकथाम् । अलुब्धैः सह मित्रत्वं कुर्वाणो नैव सीदति ॥ २ ॥

एवं श्लोकं प्रभाकरः पितुराग्रहाजग्राह । कालेन पिता परासुरभूत् । प्रभाकरोऽपि श्लोकपरीक्षाविधित्सया देशान्तरं व्रजन् क्वापि ग्रामे कृतघ्नस्तुच्छप्रकृतिः सिंहाह्वो ग्रामठक्कुरोऽवसत्, तमभजत् । तस्यैका चेटी सर्वाधमा स्त्रीत्वेन स्थापिता । तत्र लोभनन्दिर्वणिग् निर्दाक्षिण्यमुख्योऽर्थैकलुब्धो मित्रमभूत् । एकदाऽऽकारितो राज्ञा सिंहः, तेन समं ययौ प्रभाकरः, नृपं विद्वत्प्रियं ज्ञात्वेदमूचिवान्—

मूर्खा मूर्खैः समं सङ्गं गावो गोभिर्मृगा मृगैः । सुधीभिः सुधियो यान्ति समशीले हि मित्रता ॥ १ ॥

इत्युक्ते तुष्टेन राज्ञा बहुग्रामयुतं पुरं दीयमानं प्रभाकरेण सिंहाय दापितं, एवं सोऽनेकधोपकृतः । दास्या अपि स्वर्णाभरणादि दत्तं । लोभनन्दिरपि महर्द्धिकोऽकारि । अथ सिंहस्यैको मयूरो जीवितादपि वल्लभोऽस्ति, तस्यामिषभक्षणदोहदो दास्याः प्रभाकरभार्याया जातो गर्भानुभावेन । प्रभाकरेणापि पितृश्लोकपरीक्षार्थं राजमयूरं क्वापि गुप्तीकृत्यान्यमयूरामिषेण दोहदोऽपूरि । अथ भोजनावसरे सिंहेन मयूरो विलोकितः सर्वत्र, क्वापि न लब्धः । पटहो दापितः—"दीनाराष्टशतं राजा दास्यति यो मयूरशुद्धिं कथयति तं प्रति" इति । दास्या पटहं श्रुत्वा "ममान्योऽपि पतिर्भावी" इति द्रव्यलुब्धया राज्ञे निवेदितं—"राजन् ! प्रभाकरोऽत्यासङ्गविनष्टोऽयं मया वारितोऽपि स्वामिनो मयूरं मद्दोहदपूरणायान्यमयूरमप्राप्य मारितवान्" । इति दास्युक्तं श्रुत्वा क्रुद्धः सिंहठक्कुरः प्रभाकरधरणाय भट्टान् प्रैषीत् ।

प्रज्ञाकरोऽपि ज्ञाततद्वृत्तान्तो भयभीतो मित्रगृहे गतो "मां रक्ष रक्ष हे मित्र" इत्यवदत्। लोभनन्दि-मित्रं प्राह—"किं त्वया विनाशितं राज्ञः ?"। स उवाच—"राज्ञो बर्हीं भार्यार्थे हतः"। ततो मित्राधमः प्राह—"स्वामिद्रोहिणो भवतः क्व स्थानं ? ज्वलत्पूलकं स्वगृहे कः क्षिपति" इत्यादिवदतो मित्रस्य गृहे यावत्प्रविशति तावता लोभनन्दिना बुम्बारवः कृतः। राजभटैरागत्य बद्ध्वा राज्ञोऽग्रे नीतः। सिंहोऽपि भ्रूकुटिं कृत्वा प्राह—"रे विप्राधम! मम मयूरमर्पय अथवाऽभीष्टदेवतां स्मर" इति हक्कितः। प्रज्ञाकरः सदैन्यं जगौ—"हे देव! त्वं मे पिता स्वामी शरणं च, क्षमस्वैकमपराधं स्वसेवकस्य" इति विज्ञप्तोऽप्यधमप्रकृतित्वेन भटेभ्यो मारणायार्पितः। यावता ते किमपि विरूपं कुर्वन्ति तावता—

स ऊचे दैवतप्रायं पितुरेव वचः स्मृतम्। यदतिक्रमणात्सद्यो ममाभूदीदृशं फलम् ॥ १ ॥

इत्युदित्वा मयूरं दत्त्वा सिंहमापृच्छ्य निर्गतः। सिंहेन क्षमायाचनपूर्वकं स्थापितोऽपि न स्थितः। अग्रतो गच्छन् स दध्यौ—

नृणां मृत्युरपि श्रेयान् पण्डितेन सह ध्रुवम्। न राज्यमपि मूर्खेण लोकद्वयविनाशिना ॥ १ ॥

क्रमेण सुन्दरपुरे गतः। तत्र हेमरथो नृपः। तत्पुत्रो गुणसुन्दरः।

त्यक्तकुव्यसनासङ्गः कृतज्ञः कोविदप्रियः। जनानुरागी सुभगः कुमारो गुणसुन्दरः ॥ १ ॥

पुराद्बहिः शस्त्रशास्त्राभ्यासपरो दृष्टः। प्रज्ञाकरेण गत्वा सविनयं प्रणतः। कुमारेणापि प्रसन्नदृग्विलोकनादिना पूजितः। यतः—

प्रसन्ना दृग्मनः शुद्धं ललिता वाग् नतं शिरः । सहजाऽर्थिष्वियं पूजा विनाऽपि विभवं सताम् ॥ १ ॥



प्रज्ञाकरोऽपि कुमारस्य स्नेहालापादि दृष्ट्वा दध्यौ—

"अस्याहो विशदा मूर्तिर्मितं च मधुरं वचः । नव्यमौचित्यचातुर्यं कटरे स्वच्छताऽऽत्मनः ॥ १ ॥

बाह्येऽपि मधुराः केऽपि द्राक्षावत्केऽपि चूतवत् । विपाकेन कदापीन्द्रवारुणीफलवत् परे ॥ २ ॥

यत्राकृतिस्तत्र गुणा वसन्ति०" इति विचिन्त्य तस्य कुमारस्य सेवाऽऽश्रिता । पुरान्तरावासो दापितः कुमारेण । उत्तमप्रकृतिस्थैर्यविनयादिगुणा भार्या कृता ब्राह्मणी । मद्गेन्यो वसन्तः सुहृत् कृतः परोपकारैकव्रतः पौरमुख्यः । क्रमेण पितरि विपन्ने गुणसुन्दरो भूपोऽभूत् । प्रज्ञाकरो मन्त्री सर्वकार्यक्षमः । अन्यदा केनापि जात्याश्वौ सल्लक्षणौ ढौकितौ, परं विपरीतशिक्षितौ, तत्स्वरूपमज्ञात्वा राजामात्यौ तत्तुरङ्गारूढौ पुराद्बहिर्वाह्यालयां वाहयित्वा वेगजिज्ञासया कशाघातं चक्रतुस्तुरङ्गयोः । ततस्तौ निर्गतौ वेगेन तथा यथा कोऽपि न मिलति, गतौ वनान्तः । गच्छता च मन्त्रिणा लब्धलक्ष्यतया आमलिक्या अधोगतेनामलकत्रयं गृहीतं । ततो दूरतरं गत्वा वल्गामुक्तौ स्थितावश्वौ । राज्ञस्तृषार्त्ते मन्त्रिणाऽऽमलकमेकं दत्तं, क्षणान्तरेऽतितृषितस्य राज्ञो द्वितीयं, पुनस्तृतीयं च, एवमामलकत्रयेण कालक्षेपे कृते सैन्यप्राप्तिः । ततः स्वस्थीभूय नगरागमनं । अथ राज्ञः सुतः पञ्चवर्षीयो मन्त्रिमन्दिरे क्रीडार्थं नित्यमायाति । एकदा मन्त्रिणा परीक्षार्थं स गुप्तीकृतः । भोजनसमये सर्वत्र गवेषितः पुत्रः, परं क्वापि न लब्धः । राजा घूर्णित इव तस्थौ । राजवर्गोऽपि सर्वः कृष्णमुखोऽजनि । केनाप्युक्तं यत् "कुमारो मन्त्रिगृहे गतोऽभूत्" । ततः

सर्वेषां मनसि मन्त्रिणः शङ्का जाता। मन्त्र्यपि राजकुले नायाति। पत्नी ब्रूते—“देव! किमद्य राजकुले न गम्यते?” मन्त्री प्राह—प्रिये! राज्ञो मुखं दर्शयितुं न शक्नोमि, अद्य मया राजपुत्रो हतः”। जायाऽऽह—“किमिदं नाथ?”। मन्त्री जगौ—“ह्यस्त्वयोक्तं यदुत गर्भानुभावतोऽयं नृपाङ्गजो दृशोर्दोहाय वैरिवत्, ततो मया हतः”। तच्छ्रुत्वा शान्तं पापमित्युक्त्वा सा वसन्तमित्रसमीपे गत्वा सर्वं न्यवेदयत्। तदा स आह—न किञ्चिदेव तत्, अहमेव राज्ञः कोपं दूरीकरिष्यामि” इति मन्त्रिपत्नीमाश्वास्य राज्ञः पार्श्वे वसन्तो गतः, इति विज्ञप्तवान्—“अत्रार्थे मन्त्रिणो नापराधः”। जायाऽप्यागता, तयोक्तं—“मद्दोहदार्थमयं व्यतिकरो जातः”। तदनु मन्त्र्यपि समेतः कम्पमानः, तेनेति राज्ञे विज्ञप्तं—“स्वामिन्! ममैवापराधः सर्वः, ममैव प्राणा ग्राह्याः, अयं वसन्तो मदीयदुःखदुःखितो भवत्सकाशं स्वापराधं कथयन्नस्ति, जायापि तथैव”। ततो नृपश्चिन्तयति—“अयं मन्त्री सर्वप्रकारैर्हितः प्राणदाता तदाऽऽमलकप्रदानैः”। ततो मन्त्रिणं प्राह लोकसमक्षं—

मित्र त्वं यदि नादास्यस्तदा धात्रीफलानि मे। तदा क्वाहं क्व राज्यं च क्व सुतः क्व परिच्छदः ॥ १ ॥

मन्त्र्याह सुप्रज्ञो जज्ञे कृतज्ञत्वं तवेयता। कार्य एव पुनर्दण्डः पुत्ररत्नापहस्य मे ॥ २ ॥

“एकमामलकं तर्हि वलितं त्रयमध्यतः” इत्युक्ते नृपेण मन्त्री जगौ—“हे सर्वगुणाकर! यद्येवं तर्हि अस्त्वामलकत्रयं, चिरं कुमारसहितो राज्यं कुरु”। इत्युक्त्वा पुत्रः समानीयार्पितः। कुमारं दृष्ट्वा सर्वेषां हर्षः। किमेतदिति राज्ञोक्ते मन्त्री पितुरादेशादारभ्य स्ववृत्तान्तं निखिलमाख्यातवान्। नृपोऽपि ज्ञात-

स्वरूपो लज्जितो मन्त्रिणमर्धासने निवेश्याह—"हे मित्र ! यन्मयाऽमूद्दयमप्यामलकत्रयं पुत्रतुल्यमकारि तन्मर्षणीयं" इत्यादिप्रीतिवाक्यैरुज्जीवितः प्रज्ञाकरमन्त्री लब्धसुस्वामिपक्षो राज्ञा सह चिरं राज्यं पालयामास ॥

प्रज्ञाकरस्येव समीक्ष्य साक्षात्, फलानि सङ्गात्सदसज्जनानाम् ।
विवेकिना सौख्यगुणाद्यवाप्त्यै, कार्यः सदा सज्जनसङ्गरङ्गः ॥ १ ॥

॥ इत्यब्ददिनपरिमितहितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रंथस्य वृत्तौ
पञ्चदशस्तंभे २२२ व्याख्यानम् ॥

॥ व्याख्यानम् ॥ २२३ ॥

अथान्तरङ्गारिषड्वर्गं यो जहाति स एव सुखी स्यादित्याह—

कामः क्रोधस्तथा लोभो हर्षो मानो मदस्तथा । षड्वर्गमुत्सृजेदेवं तस्मिंस्त्यक्ते सुखी भवेत् ॥ १ ॥

स्पष्टः । अत्रेयं भावना—तत्र परपरिगृहीतासु स्वयमूढासु वा स्त्रीष्वत्यन्तासक्तिरूपः कामः । स च रावणपद्मनाभादिवद्विवेकराज्यभ्रंशनरकपातादिहेतुः । उक्तं च—

तावन्महत्त्वं पाण्डित्यं कुलीनत्वं विवेकिता । यावज्ज्वलति चित्तान्तर्न पापः कामपावकः ॥ १ ॥
नान्यः कुतनयादाधिर्व्याधिर्नान्यः क्षयामयात् । नान्यः सेवकतो दुःखी नान्यः कामुकतोऽन्धलः ॥ २ ॥

इति १। परस्यात्मनो वाऽपायमविचार्य कोपकरणं क्रोधः, स न युक्तो दुर्गतिहेतुत्वात् चण्डकौशिकादीनामिवेति कृत्वा महात्मनां। यतः—

संतापं तनुते भिनत्ति विनयं सौहार्दमुत्सादय—
त्युद्वेगं जनयत्यवद्यवचनं सूते विधत्ते कलिम्।
कीर्तिं कृन्तति दुर्गतिं वितरति व्याहन्ति पुण्योदयं,
दत्ते यः कुगतिं स हातुमुचितो रोषः सदोषः सताम्॥ १॥
द्रुमोद्भवं हन्ति विषं न हि द्रुमं, न वा भुजङ्गप्रभवं भुजङ्गमम्।
अदः समुत्पत्तिपदं दहत्यहो, महोल्वणं क्रोधहलाहलं पुनः॥ २॥

इति २। दानार्हेषु स्वधनाप्रदानं निष्कारणं परधनग्रहणं वा लोभः।

लोभमूलानि पापानि रसमूलाश्च व्याधयः। स्नेहमूलानि दुःखानि त्रीणि त्यक्त्वा सुखी भव॥ १॥

सागरश्रेष्ठिसुभूमचक्रिमम्मणश्रेष्ठिलोभनन्दादीनामिवेति श्रुत्वा सकलपापमूलमेषः। एतेन व्याकुलिता अनेकपापक्रियां कुर्वन्ति। यतः—

क्रयविक्रयकूटतुलालाघवनिक्षेपभक्षणव्याजैः। एते हि दिवसचौरा मुष्णन्ति महाजने वणिजः॥ १॥
हृत्वा धनं जनानां दिनमखिलं विविधवचनरचनाभिः। वितरति गृहे किरातः कष्टेन वराटिकात्रितयम्॥२॥
आख्यायिकानुरागी व्रजति सदा पुस्तकं श्रोतुम्। दष्ट इव कृष्णसर्पैः पलायते दानधर्मेभ्यः॥ ३॥

उत्सृज्य साधुवृत्तं कुटिलधिया वञ्चितः परो येन । आत्मैव मूढमतिना हतसुकृतो वञ्चितस्तेन ॥ ४ ॥
महीयसाऽपि लाभेन न लोभः परिपूर्यते । मात्रासमधिकः कुत्र मात्राहीनेन जीयते ॥ ५ ॥

इति ३ । दुरभिनिवेशामोक्षो युक्तोक्त्यग्रहणं वा मानः । अविचारिततत्त्वातत्त्वानां कदाग्रहिणां दुर्योधनादीनामिवायं भवति । यतः—

हग्भ्यां विलोकते नोर्ध्वं सप्ताङ्गैश्च प्रतिष्ठितः । स्तब्धदेहः सदा सोष्मा मान एव महागजः ॥ १ ॥

एतत्परित्याग एव केवलोत्पत्तिर्बाहुबलेरिवेति ४ । बलकुलैश्वर्यरूपविद्यादिभिरहङ्कारकरणं परप्रधर्षनिबन्धनं वा मदः । यतः—

एकः सकलजनानां हृदयेषु कृतास्पदोऽस्ति मदशत्रुः । येनाविष्टशरीरो न शृणोति न पश्यति स्तब्धः ॥१॥
शौर्यमदो रूपमदः शृङ्गारमदः कुलोन्नतिमदश्च । विभवमदमूलजाता मदवृद्धा देहिनामेते ॥ २ ॥
शौर्यमदः स्वभुजदर्शी रूपमदो दर्पणादिदर्शी च । काममदः स्त्रीदर्शी विभवमदस्त्वेष जात्यन्धः ॥ ३ ॥
सावधयः सर्वमदा निजनिजमूलक्षयैर्विनश्यन्ति । गुरुमद एकः कुटिलो विजृम्भते निरवधिर्भोगी ॥ ४ ॥
मौनेन सामन्तानां निःस्पन्ददृशि प्रवृद्धविभवानाम् । भ्रूभङ्गमुखविकारे धनिकानां भ्रूयुगे विदादीनाम् ॥५॥
जिह्वासु दूतविदुषां रूपवतां दशनकेशवेशेषु । वैद्यानामोष्ठपुटे ग्रीवायां गुरुनियोगिगणकानाम् ॥ ६ ॥
स्कन्धतटे सुभटानां हृदये वणिजां करेषु शिल्पवताम् । गण्डेषु कुञ्जराणां स्तनतटेषु तरुणीनाम् ॥ ७ ॥

१ "स्तनतटयुग्मेषु तरुणीनां" इति पाठः साधुः ।

न युक्तश्चैष सर्वथा महोन्नतचेतसां । यतः—

पातालान्न समुद्धृतो वत बलिर्नीतो न मृत्युः क्षयं, नोन्मृष्टं शशलाञ्छनस्य मलिनं नोन्मूलिता व्याधयः ।
शेषस्यापि धरां विधृत्य न कृतो भारावतारः क्षणं, चेतः सत्पुरुषाभिमानगणनां मिथ्या वहँल्लज्जसे ॥ ८ ॥

इति ५ । निर्निमित्तपरदुःखोत्पादनेन स्वस्य पापर्द्धिद्यूताद्यनर्थसंश्रयेण वा मनःप्रमोदो हर्षः । अयं दुर्ध्यानानुगतचित्तानामधमानामेव सुलभः । यतः—

परवसणं अभिनंदइ निरवक्खो निद्दओ निरणुतावो । हरिसिज्जइ कयपावो रुद्दज्झाणोवगयचित्तो ॥ १ ॥
तुष्यन्ति भोजनैर्विप्रा मयूरा घनगर्जितैः । साधवः परकल्याणैः खलाः परविपत्तिभिः ॥ २ ॥

यथा प्राप्तं व्यसनं पाण्डवानां श्रुत्वा वीक्ष्य च दुर्योधनो महाप्रमोदं प्राप्तः । समुद्रपातितव्यसनगतं श्रीपालनृपं वीक्ष्य धवलश्रेष्ठी स्वेष्टसिद्धिकरणार्थं भृशं मोदते स्मेति । एतेषामपि परिहार्यत्वमिह विवेकिजननिन्द्यत्वादपयशोऽनर्थहेतुत्वात्परत्र दुर्गतिकारणत्वाच्चेति ॥

आन्तरं षड्रिवर्गमुदग्रं, यस्त्यजेदिह विवेकमहीयान् ।
धर्मकर्मसुयशःसुखशोभाः, सोऽधिगच्छति गृहाश्रमसंस्थः ॥ १ ॥

॥ इत्यब्ददिनपरिमितहितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ
पञ्चदशस्तम्भे २२३ व्याख्यानम् ॥

## ॥ व्याख्यानम् ॥ २२४ ॥



अथ कर्मयोगतः प्रतिपाती भूत्वा पुनः स्वं तारयति स श्लाघ्य इत्याह—

शिथिलाः संयमे योगे भूत्वा भूयोऽप्रमादिनः । भवन्ति ते प्रशस्याः स्युर्यथा सेलकसाधुवत् ॥ १ ॥

स्पष्टः । संबन्धश्चायं—नवयोजनविस्तीर्णद्वादशयोजनायामायां द्वारिकायां वासुदेवो भूपः । तस्याज्ञावशाः षोडशसहस्रनृपाः स्युः । तस्य प्रद्युम्नाद्याः सार्धत्रिकोटिकुमाराः शाम्बाद्याश्च दुर्दान्तकुमारा बभूवुः । तन्नगरे थावच्चापुत्रः कुमारः पितृभ्यामेकवासरे द्वात्रिंशत्कन्याः परिणायितः, ताभिः सह पञ्चविधसौख्यमनुभवति । अन्यदा दशधनुरुच्चोऽष्टादशसहस्रश्रमणैर्वृतः श्रीनेमिजिनः समवसृतः । वनपालमुखात्तन्निशम्य कौमुदिक्या भेर्योद्घोषणां कृत्वा चतुरङ्गचमूवृतः कृष्णो वन्दनार्थं गतः । थावच्चापुत्रोऽपि समेतः । प्रभुधर्मदेशनां श्रुत्वा बुद्धो विरक्तस्थावच्चां स्वमातरं प्राह—“मम दीक्षां देहि” । मात्रा संसारसुखैर्लोभितः स नोऽमन्यत । तदा तदम्बा कृष्णपार्श्वे गत्वा प्राभृतं मुक्त्वा व्यजिज्ञपत्—“स्वामिन्! मत्पुत्रस्य दीक्षाग्रहणोत्सुकस्य शिक्षां प्रयच्छ, यदि एक एव ममात्मजः संयमं गृह्णाति तर्हि निराधारा कथं जीवामि ?” । कृष्णस्तामाश्वास्य चमूवृतस्तद्गृह एत्य तस्याः पुत्रं स्माह—“हे वत्स! त्वं सांसारिकविलासान् सहर्षं भुङ्क्ष्व अस्मच्छत्रच्छायाश्रितः सन्, न किमपि तव विरूपं भावि” । इति श्रुत्वा स विहस्य प्राह—“हे क्ष्माप! एकेन मृत्युनाऽहमनन्तशो विडम्बितः, तद्विरूपं त्वं निवारय चेन्मम

हितं वाञ्छसि"। कृष्णः स्माह—"तत्परमानन्दपदे प्राप्ते सत्येव याति नान्यथा"। इति श्रुत्वा थावच्चात्मजः स्माह—"अत एव मृत्युविहितविरूपनिवारणाय नेमिचरणाम्बुजं सेविष्येऽहं"। इति तस्य स्थैर्यमवेत्य हृष्टो लक्ष्मीशः पुर्यामित्युदघोषयत्—"भो भो! यः कोऽपि अमुना सह प्रव्रजति तस्य कुटुम्बनिर्वाहं दीक्षोत्सवं च कृष्णः स्वयं करोति। ततः सहस्रनरैः सह तस्य दीक्षामहोत्सवं चकार। सहस्रनरवाह्यशिबिकारूढः सहस्रनरैः सह जिनाभ्यर्णे समेतः। तदा थावच्चा जिनं प्राह—"इमां शिष्यभिक्षां गृहाण, एनं द्विशिक्षान्वितं विधेहि"। पुनः साश्रुनेत्रा पुत्रं प्राह—"हे पुत्र! अत्रार्थे प्रमादो न कार्यः"। ततः स सहस्रनरैः सह प्रव्रज्यां जग्राह। क्रमेण सामायिकादिचतुर्दशपूर्वाण्यधीत्य सहस्रशिष्याचार्य एकदा जिनाज्ञां गृहीत्वा विहरन् सेलकपुरे समवसृतः। तत्पुरेशः पञ्चशतपन्थकप्रभृतिसचिवानां नायकः सेलकनृपः सोत्सवं श्रीगुरुं नत्वा देशनां श्रुत्वा सामात्यः श्राद्धधर्मं जग्राह। इतश्च सौगन्धिकपुरे श्रेष्ठी सुदर्शनाख्यो वसति। तत्र चातुर्वेदी शौच १ संतोष २ स्वाध्याय ३ तपो ४ देवध्याने ५ तिनियमयुक्तः सहस्रशिष्याचार्यो गैरिकवस्त्रावृतः सहस्रतापसान्वितः शुकपरिव्राजक आगात्। तस्य शौचमूलः साङ्ख्यधर्मस्तद्वचसा सुदर्शनेन गृहीतः। तत्रान्येद्युर्विहरन् थावच्चासुताचार्यः समागात्। सुदर्शनः परीक्षार्थमेत्य पप्रच्छ—"युष्माकं शौचमूलो धर्मोऽन्यो वा?"। सूरिराह—"हे श्रेष्ठिन्! अस्माकं विनयमूलो धर्मः, सोऽपि द्विधा साधुश्राद्धभेदाभ्यां, सोऽपि दशधा क्षान्त्यादिभिः"। तद्वाक्यैः प्रबुद्धः श्रेष्ठी श्राद्धधर्मं प्राप, अधिगतजीवादितत्त्वोऽस्थिमज्जासुप्रेमाभूत्। अन्यदा तस्य पूर्वगुरुः शुकः

सहस्रशिष्ययुतस्तत्रागात् । सुदर्शनमन्यमार्गसक्तं वीक्ष्य "रे रे केन पाखण्डिना वञ्चितोऽसि" ? इति तेन पृष्टे श्रेष्ठी स्माह—"मम गुरुश्चतुर्ज्ञानधरस्थावच्चासुतसूरिरत्रैवास्ति, तेनाहं विनयमूलं धर्मं प्रापितः"। ततः सशिष्यः शुकोऽपि श्रेष्ठिना समं सूरिपार्श्वे गत्वा प्रश्नानि पप्रच्छ—"जत्ता ते भंते ! जवणिज्जं च अव्वाबाहं फासुअं विहारं" इति निशम्य सूरिः प्राह—"ममेमानि सर्वाणि सन्ति"। पुनः शुकः सूरिं पप्रच्छ—"किं (का) भदंत यात्रा ?"। "हे शुक ! यतः श्रमणानां ज्ञानादिरत्नत्रये यत्नकरणं सा यात्रा"। पुनः शुकः पप्रच्छ—"हे भगवन् ! यापना का ?"। "हे शुक ! यापना द्विधा—इन्द्रिययापना नोइन्द्रिय-यापना च। हे शुक ! शुभप्रशस्तमार्गानुसारित्वात् पञ्चेन्द्रिययापना मम शुभाऽस्ति, क्रोधादिरहितान्तः-करणत्वात् प्रशस्ता नोइन्द्रिययापना च"। पुनः शुकः पप्रच्छ—"किं ते भगवन् ! अव्याबाधं ?"। "हे शुक ! विविधव्याधयो मम नो पीडयन्ति"। पुनः पप्रच्छ—"हे सूरे ! किं (कः) तव प्रासुकविहारः ?"। सूरिराह—"हे शुक ! स्त्रीपशुपण्डकवर्जितवसतौ निर्जीवस्थले याचितपीठफलकादि गृहीत्वा विचरामि इति मम प्रासुकविहारः"। ततः पुनः शुकः—"सरिसवा भंते किं भक्खेया वा अभक्खेया वा ?" इत्या-दिषष्ठाङ्गोक्तान् प्रश्नोत्तरान् प्राप्य सुलभबोधित्वात् सहस्रशिष्यैः सह जैनीं दीक्षां जग्राह, क्रमात्सूरिपदं प्राप। ततः थावच्चासुताचार्यः स्वनिर्वाणसमयं ज्ञात्वा सहस्रमुनिभिः समं पौण्डरीके शैलेऽनशनं कृत्वा मासान्ते केवली भूत्वा मुक्तिं ययौ। ततश्चतुर्दशपूर्वी शुकाचार्यो विहरन्नन्यदा सेलकपुरं गतः। तत्रो-द्याने पञ्चशतामात्यैर्वृतो गुरुं नत्वा जिनवाणीं श्रुत्वा विरक्तमनाः सेलकनृपः स्वगृहे सभायां स्थितः

पञ्चशतमन्त्रिणः पप्रच्छ—"भोः सचिवाः! अहं प्रव्रज्यां समस्तभवपापापहां ग्रहीष्ये यूयं किं करिष्यथ ?"। "स्वामिन्! वयं सर्वेऽपि संयमसुखैकलालसा युष्माभिः सह व्रतानि ग्रहीष्यामः"। नृपः प्राह—"तर्हि स्वस्वपुत्रेषु गृहकार्याणि न्यस्य सहस्रनरवाह्यशिविकारूढाः शीघ्रं समागच्छत"। ततो नृपः स्वपुत्रे मण्डुककुमारे राज्यं न्यस्य तत्कृतनिष्क्रमणोत्सवेन पञ्चशतमन्त्रिवृतः शुकसूर्यन्तिके त्रिविधत्रिविधेन सावद्ययोगं प्रत्याख्याति स्म। क्रमात्सेलकं द्वादशाङ्गधरं विज्ञाय सूरिपदे संस्थाप्य शुकसूरिः स्वयं चिरं विहृत्य सहस्रमुनिभिः सह शत्रुञ्जयेऽनशनं कृत्वा मासान्ते मुक्तिपदं प्राप। इतः श्रीसेलकाचार्योऽन्तप्रान्ततुच्छकालातिक्रान्तभोजनकरणात् कण्डूदाहपित्तज्वरग्रस्तदेहो विहरन् सेलकपुरं गतः। तत्र तत्पुत्रो मण्डुको नाम नृपो वन्दनार्थमागतः। देशनां श्रुत्वा श्राद्धत्वं प्रपन्नः। ततो गुरोः शरीरं शुष्कं व्याधिग्रस्तं ज्ञात्वा स्माह—"हे पूज्य! मम यानशालायां निवासं कुरु"। सूरिस्तत्र पञ्चशतशिष्यैः सह स्थितः। ततो नृपेण गुरोराज्ञां प्राप्य वैद्य आनीतः। तेनौषधं कृतं। पुना रोगमूलच्छेदनार्थं मद्यपानं कारितं। तेन नीरोगी जातः, परं रसगृद्धोऽभूत्। यत उक्तं च—"असण ४ मज्जपाणमुच्छिए गढिए गिद्धे अज्झोववन्ने उसन्ने उसन्न विहारी एवं पासत्थे २ कुसीले २ पमत्ते २ संसत्ते२"। तदा पन्थकेन विना एकोनपञ्चशतशिष्या इति दध्युः—"गुरवस्तु प्रमत्ता एकत्रवासरताश्चातो वयं विहारं गुरुमापृच्छ्य कुर्महे"। ततस्तैस्तथा कृतं। पन्थको वैयावृत्त्यर्थं स्थितः। एकदा चतुर्मासीदिने विस्तीर्णं मद्यपानं कृत्वा सूरिः सुप्तः। तदा पन्थको दैवसिकं प्रतिक्रमणं विधाय कार्तिकचतुर्मासिकक्षामणार्थं निद्राणगुरुपादयोर्मस्तकं संस्थाप्य "अब्भुट्ठिओऽहं" इत्याद्युक्तवान्।

तल्लूवणात्स्पर्शाच्च निद्राभङ्गस्तस्याभूत् । ततः "को मां जागरयति ?" इत्यादि वदन् गुरुरुत्थितः । ततः पन्थको विनयावनम्रो भूत्वा प्राह—"स्वामिन् ! धिग्मां, यतश्चातुर्मासिकक्षामणाय मया यूयं जागरिताः, तत्क्षमध्वं" । तस्येति विनयवाक्याल्लज्जितो गुरुस्तं शिष्यमनुमोदयन् प्रमादासक्तमात्मानं बहुधा निन्दति स्म—"हहा मया रसगृध्ध्या चारित्ररत्नं मलिनीकृतं, धन्योऽयं शिष्यो येनाहं बाह्यतोऽभ्यन्तरतश्च द्विधापि जागरितः । अहो ! क्वायं ? क्व चाहं ? । द्वयोर्मध्ये महदन्तरं । मद्गुरुस्त्वयमेव येन पन्थकेनाहं पथि नीतः, तेन स्वनाम सत्यं विहितं । अपि चाहो ! अवन्दनीयं मां द्वादशावर्तवन्दनकेन वन्दते, जानन्नपि मम दोषान्निगूहयति" । इत्यादिना स्तुत्वा सूरिर्दध्यौ—"कल्ये मण्डुकं नृपमापृच्छ्य पुनः संयमं निर्मलं पालयामि" । तत आलोचनयाऽऽत्मनः शुद्धिं विधाय सेलकगुरुर्बहून् भव्यान् प्रबोध्य प्रान्ते पञ्चशतमुनिसहितः शत्रुञ्जयेऽनशनं विधाय मासान्ते मोक्षं गतः परमात्मपदं प्रापेति ॥

भ्रष्टसङ्गतिगतं व्रतधर्मे, पन्थको न तु मुमोच मुनीशम् ।
क्षामणादिविधिना पथि नीतः, सेलकोऽक्षयपदं गिरिराजे ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ पञ्चदशस्तम्भे २२४ व्याख्यानम् ॥

अथ कार्तिकीमहिमा गीयते—

य: कुर्यात् कार्तिकीं राकामत्रार्हद्ध्यानतत्परः ।
स भुक्त्वा सर्वसौख्यानि निर्वृतिं लभते ततः ॥ १ ॥
एकेनाप्युपवासेन कार्तिक्यां विमलाचले ।
ऋषिस्त्रीबालहत्यादिपातकान्मुच्यते जनः ॥ २ ॥

श्रीऋषभदेवपुत्रो द्रविडस्तस्य पुत्रौ द्राविडवालिखिल्यावभूतां । अन्यदा द्राविडाय मिथिलाराज्यं वालिखिल्याय च लक्षग्रामान् दत्त्वा स्वयं प्रभोः पार्श्वे दीक्षां जग्राह । अन्यदा द्राविडोऽनुजं संपदाधिकं वीक्ष्य तदुन्नतिमसहमानो द्वेषं वहति । अनुजोऽपि तत्स्वरूपं ज्ञातवान् । ततो मिथो द्वेषं वहन्तौ राज्यग्रहणोत्सुकौ जातौ अन्योऽन्यं छलं पश्यतः । अन्यदा द्राविडेन स्वपुरमध्ये वालिखिल्यस्य प्रवेशो निषिद्धः । सोऽपि प्राप्तकोपः स्वसैन्यं युद्धार्थममेलयत् । द्राविडोऽपि सज्जीबभूव । द्वौ मिथः संमुखावागतौ । मध्ये पञ्चयोजनप्रमाणं रणक्षेत्रं मुक्त्वा सेनानिवेशः कृतः । द्वयोरपि सैन्ययोः प्रत्येकं दशलक्षं गजानां दशलक्षं तुरङ्गाणां दशलक्षं रथानां दशकोटयः पदातीनां चाभूवन् । ततो निर्धारितदिने सङ्ग्रामं चक्रुर्गजा गजैः पदातयः पदातिभिः । एवमन्वहं कुर्वन्ति । इत्थं च सप्त मासान् यावत् युध्यमानयोः

सैन्ययोः सुभटानां द्वादशकोट्यः क्षयं ययुः। ततो वर्षाकाले समायाते युद्धतो निवृत्तौ तृणपर्णादिभिः कुटीरकान् कृत्वा तस्थतुः। क्रमाद्वर्षतौ निवृत्ते सर्वधान्यौषधे पाण्डुरतां प्राप्ते एको भाविकः सपरिकरो वनश्रीयवलोकनार्थं निर्गतः। तत्र विमलमतिनाम्ना सचिवेन प्रेरितस्तापसाश्रमं गतः। तत्र जटामुकुटभूषितं वल्कलवस्त्रपरिधानं पर्यङ्कासनस्थितं सुवल्गुनामानं कुलपतिं बहुभिस्तापसैः परिकरितं शान्तं दान्तं वीक्ष्य भूपस्तं ननाम। मुनिरपि ध्यानं मुक्त्वा नृपमाशीर्वचनेनाभिनन्दति स्म। ततस्तापसोऽनुग्रहबुद्ध्या धर्मशिक्षां प्राह—"राजन्! अयं संसारसागरोऽनन्तदुःखजलापूर्णः कामक्रोधादिमकरसमूहैरतिभयंकरो लोभवडवानलो जगद्ग्रसनलालसः। अत्र विषयावर्तेषु मग्नाः सर्वे सुरासुरनरेश्वराद्याः कथमपि निर्गमं न प्राप्नुवन्ति। राज्यं तु प्रान्ते नरकप्रदं। ततो न युज्यते तवापि एतेन नरकार्थकारिणा राज्यलोभेन भ्रात्रा सह महानर्थकारणं युद्धं। खण्डमात्रपृथ्व्या लोभेन ये बन्ध्वादिजनान् विनाशयन्ति तेऽनन्तदुःखान्याप्नुवन्ति। न युज्यते तव श्रीयुगादीशपौत्रस्य कलहकरणं"। इति श्रुत्वा नृपः प्राह—स्वामिन्! पूर्वं भरतबाहुबल्यादयोऽपि कारणवशात्परस्परं विग्रहं कृतवन्तः तर्ह्यस्माकं को दोषः?"। मुनिः स्माह—"हे नृप! भरतेशेन पूर्वजन्मनि साधूनामाहारदानभक्त्या चक्रित्वमुपार्जितं। बाहुबलिना तु वैयावृत्त्यकरणाद्बाहुबलमार्जितं। ततस्ताभ्यां स्वस्वकर्मफलं प्राप्तं। चक्रिणा चक्रस्याप्रवेशाद्युद्धं कृतं, बाहुबलिना तु ध्यातं—"पितृदत्तं राज्यमयं गृहीतुमिच्छति, किमहं निर्बलोऽस्मि? तातपादान्मुक्त्वाऽन्यान्न नमामि"। एवं सत्यपि देववाक्यात्प्रबुद्धौ तौ स्वात्मानं तारितवन्तौ। तत्तादृशानां पुरुषसिंहानां स्पर्धा

न कार्या"। इति श्रुत्वा लज्जितः संजातपश्चात्तापो मुनिं प्राह—"मुने! मया मूढेनाज्ञानेन तयोरस्मत्पितृव्ययोः समानता गृहीता, सा न प्राप्नोति, कदापि काचमणिश्चिन्तामणेः प्रभावं किं प्राप्नोति? उद्धृतोऽहं त्वया नरकपातात्, उन्मीलिता मम विवेकदृष्टिः"। इत्युक्त्वा स्वयं बन्धुं क्षामयितुं प्रस्थितः। बालिखिल्योऽपि अग्रजमभिमुखमायान्तं वीक्ष्य संमुखं गत्वा ज्येष्ठपादयोर्लुठति स्म। तेन समुत्थाप्य स्नेहेनालिङ्गितः। अनुजः स्माह—"भ्रातः! त्वं मे ज्येष्ठबन्धुर्मद्राज्यं गृहाण"। अग्रजोऽपि गद्गदगिरा प्राह—"भ्रातः! किं राज्येन? अनित्याः कामभोगाः, दुर्गतौ पततां प्राणिनां धर्मं विना नास्ति किञ्चिदन्यच्छरणं, ततोऽङ्गीकार्यं मया व्रतं, भवन्तं क्षामयितुमिहागतोऽस्मि"। अनुजः स्माह—"भ्रातः! यदि त्वया सर्वथा श्रेयस्करं व्रतमाद्रियते तदा मयाऽपि तदेवाङ्गीकर्तव्यं"। ततः स्वं स्वं पुत्रं राज्ये न्यस्य स्वस्वमन्त्रिसहितौ दशकोटिपुरुषैः समं तौ तत्तापसपार्श्वे व्रतं जगृहतुः। सर्वेऽपि कन्दमूलाद्याहारा गङ्गाजलस्नानपरा अल्पकषाया अल्पनिद्रा जपमालया श्रीयुगादीशं स्मरन्तः परस्परं धर्मकथां कुर्वन्तो वर्षलक्षाणि तत्रैव निर्गमयन्ति स्म। अन्यदा नमिविनमिविद्याधरराजर्षिप्रशिष्यौ द्वौ मुनी आकाशमार्गेण तत्रायातौ तैर्नत्वा पृष्टौ—"युवां कुत्र यास्यथः?"। ततस्तौ तेभ्यो धर्मलाभाशिषं दत्त्वोचतुः—"आवां पुण्डरीकगिरौ यात्रार्थं यास्यावः"। पुनस्तैः पृष्टं—"तस्य माहात्म्यं कीदृशं?"। तावूचतुः—

"अनन्ता मुक्तिमासेदुरत्र तीर्थप्रभावतः।
सेत्स्यन्ति बहवोऽप्यत्र शुद्धचारित्रभूषिताः॥ १॥

एवं वर्षलक्षाणि यावत्कथनेऽप्यस्य महिम्नः पारो नाप्यते । अत्र तीर्थे नमिविनमिमुनीन्द्रौ द्विकोटिमुनिसहितौ पुण्डरीकगणधरवत् फाल्गुनशुक्लदशमीदिने मोक्षं प्रापतुः । पूर्वं श्रीमदनन्तज्ञानगुणसमन्वितश्रीयुगादीशगणधरादिकेवलिवचसा "आगामिकालेऽत्र तीर्थे बहव उत्तमनराः सेत्स्यन्ति" इति श्रुतं । श्रीरामचन्द्रराजर्षिस्त्रिकोटिमुनिपरिवृतः सेत्स्यति । एकनवतिलक्षमुनिभिः सह नारदः सेत्स्यति । सार्धाष्टकोटिसंयतिभिः सह साम्बप्रद्युम्नमुनिवरौ सेत्स्यतः । विंशतिकोटिमुनिभिः सह पाण्डवा अत्र तीर्थे सिद्धिं प्राप्स्यन्ति । थावच्चासुतशुकादयः सहस्रसाधुभिः सह मुक्तिं गमिष्यन्ति । पञ्चशतसाधुभिः सह सेलकराजर्षिर्मुक्तिं प्राप्स्यति । तथा श्रीऋषभशासनेऽपि असङ्ख्यातकोटिलक्षसाधवो मुक्ताः । केवलज्ञानिनोऽप्यस्य महिमकथने न क्षमाः" । इति श्रुत्वा ते तापसास्तीर्थयात्रोत्सुकाः सर्वेऽपि ताभ्यां सह पादचारेण प्रतस्थिरे । ततस्ते सर्वेऽपि तापसा विद्याधरमुनिमुखोपदेशान्मिथ्यात्वक्रियां त्यक्त्वा लोचं कृत्वा साधुधर्ममङ्गीचक्रुः । ततो विमलाद्रिं वीक्ष्य प्राप्तहर्षाः श्रीयुगादीशं भरतविहितचैत्येषु जिनाँश्च प्रणेमुः । ततो मासक्षपणपर्यन्ते तौ विद्याभृन्मुनी प्राहतुः—"हे साधवः ! भवतामनन्तकालसंचितपापकर्मात्र तीर्थसेवया क्षयं यास्यति, तदत्र तीर्थे भवद्भिस्तपःसंयमतत्परैः स्थातव्यं" । इत्युक्त्वा तावन्यत्र विहारं चक्रतुः । ते च द्राविडवालिखिल्यादितापसमुनयो दशकोटिमिता अपि तत्रैव तपः कुर्वन्तः क्रमेण मासिक्या संलेखनया केवलं प्राप्य मोक्षं प्रापुः । तयोः पुत्रैस्तत्रैत्य तेषां निर्वाणस्थाने प्रासादाः कारिताः । श्रीभरतेशस्य निर्वाणात् पूर्वकोटिवर्षगमनानन्तरं द्राविडादीनां निर्वाणं बभूव ।

कालक्रमेण तत्स्वरूपमजानन्तो मिथ्यात्विनः कार्तिकीदिने मोहिताः शत्रुञ्जयं मुक्त्वाऽन्यत्र कुतीर्थशतेषु भ्राम्यन्तीति ॥

श्रीशुक्लकार्तिकमधुप्रमुखेषु सत्सु, राकासु ये समधिगम्य समं च सङ्घैः ।
श्रीपुण्डरीकगिरिमादरतो विदध्यु-र्दानं तपांसि शिवसौख्यभुजो हि ते स्युः ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ पञ्चदशस्तम्भे २२५ व्याख्यानम् ॥

## ॥ समाप्तोऽयं पञ्चदशः स्तम्भः ॥

# ॥ अथ षोडशः स्तम्भः ॥



## ॥ व्याख्यानं ॥ २२६ ॥



अथ लेश्यास्वरूपमाह—

कीर्तिधरमुनीन्द्रेण प्रियंकरनृपं प्रति । लेश्यास्वरूपमाख्यातं तच्छ्रुत्वा स शुभां दधौ ॥ १ ॥

स्पष्टः । भावार्थस्तु ज्ञातेन ज्ञेयः । तथाहि—अचलपुरेऽरिदमनो राजा । तस्य प्रियंकरः पुत्रः । राजैकदा दिग्यात्रां विधाय विजयं प्राप्य बहुकालात्कान्तादर्शनोत्सुकः स्वसेनामपि पश्चान्मुक्त्वा एकाक्येव त्वरितमागतः । ध्वजतोरणादिभिर्विभूषितं पुरं दृष्ट्वा राजद्वारे सर्वालङ्कारालङ्कृतां मन्युद्गणदानाय सज्जीभूतां स्वकान्तां च वीक्ष्यापृच्छत्—“तव केनोक्तं मदागमनं ?” । तयोक्तं—“तवैकाकिन आगमनं कीर्तिधरसाधुनोक्तं, तेन मया संमुखागमनं व्यधित” । ततोऽरिदमनराजेन साधुराकार्य पृष्टः—“मच्चिन्तितं कथय यदि ज्ञानमस्ति” । साधुनोक्तं—“राजन् ! त्वया स्वमरणं चिन्तितं” । राज्ञोक्तं—“साधो ! कदा मे मरणं ?” । साधुनोक्तं—“सप्तमे दिने विद्युत्पातेन मरणं, मृत्वाऽशुचिमध्ये द्वीन्द्रियकीटको भविष्यसि” । ततः साधुर्वि-

सर्जितः । तज्ज्ञात्वाऽऽकुलेन राज्ञा प्रियङ्करपुत्रः प्रोक्तः—"हे वत्स ! यद्यहमशुचिमध्ये कीटको भवामि तदा त्वया मारयितव्यः" । तेनोक्तं "ॐ" इति । ततो राजा सप्तमदिने पुत्रकलत्रराज्यादिमूर्च्छावान्मृत्वा कीटको जातः । ततो मार्यमाणोऽपि स नेच्छति । ततः प्रियंकरेण साधुः पृष्टः—"किमेष मम पिता भवति ? यतो दुःखितोऽपि मरणं नेच्छति ?" । साधुरवदत्—

अमेध्यमध्ये कीटस्य सुरेन्द्रस्य सुरालये । समाना जीविताकाङ्क्षा तुल्यं मृत्युभयं द्वयोः ॥ १ ॥

तच्छ्रुत्वा प्रियंकरः श्रीगुरुं प्राह—"स्वामिन् ! अदृष्टमश्रुतपूर्वमयाचितं प्रेत्यगतिगमनं जीवैः सर्वैर्लभ्यते मत्पितुः कीटकभवनमिवेति केन हेतुनाऽऽत्मा तत्र गच्छति ?" । गुरुः प्राह—जीवानां यादृशी लेश्यापरिणतिस्तादृशी गतिः" । नृपः प्राह—"स्वामिन् ! कतिविधा लेश्याः सन्ति ?" । गुरुस्तदा षड्लेश्यास्वरूपं प्राह—तत्र परिणामविशेषात्मिका लेश्याः षड् भवन्ति । तथाहि—

अतिरौद्रः सदा क्रोधी मत्सरी धर्मवर्जितः । निर्दयो वैरसंयुक्तः कृष्णलेश्याधिको नरः ॥ १ ॥
अलसो मन्दबुद्धिश्च स्त्रीलुब्धः परवञ्चकः । कातरश्च सदा मानी नीललेश्याधिको भवेत् ॥ २ ॥
शोकाकुलः सदा रुष्टः परनिन्दात्मशंसकः । सङ्ग्रामे दारुणो दुःस्थः कापोतक उदाहृतः ॥ ३ ॥
विद्वांश्च करुणायुक्तः कार्याकार्यविचारकः । लाभालाभे सदा प्रीतः पीतलेश्याधिको नरः ॥ ४ ॥
क्षमावान्निरतत्यागी देवार्चनरतो यमी । शुचीभूतः सदानन्दः पद्मलेश्याधिको भवेत् ॥ ५ ॥
रागद्वेषविनिर्मुक्तः शोकनिन्दाविवर्जितः । परात्मभावसंपन्नः शुक्ललेश्यो भवेन्नरः ॥ ६ ॥

एतासु चाद्यास्तिस्रोऽशुभाः अपरास्तु तिस्रः शुभाः । एतासां च विशेषतः स्वरूपनिरूपणार्थं जम्बूखादकषट्पुरुषाणां दृष्टान्तः ग्रामघातकदृष्टान्तश्चोच्यते, तथाहि—

कस्मिँश्चित्कानने क्षुत्क्षामकुक्षयः षण्नराः सुपरिपक्वसरसफलभरावनमितसकलशाखं कल्पशाखिसदृशमेकं जम्बूवृक्षमद्राक्षुः । ततः सर्वैरपि प्रमुदितैः प्रोक्तं—"अहो ! अवसरप्राप्तस्य दर्शनं ! अपनयामः क्षुधां, भक्षयामः स्वेच्छया" । तन्मध्ये क्लिष्टपरिणामेनैकेनोक्तमिदं—"केवलमस्मिन्ननोकहे दुरारोहे समारोहतां जीवितस्यापि संशयः स्यात्, ततस्तीक्ष्णधारैः कुठारैर्मूलत एव कर्त्तयित्वा तिर्यक् प्रपात्य सुखेनैव सकलानि फलान्यभ्यवहरामः" । एष एवंजातीयः कृष्णलेश्यापरिणामः १ । द्वितीयेन तु किञ्चित्सशूकेनोक्तं—"किमस्माकमेतेनातिमहता पादपेन छिन्नेन ? एकां महाशाखां प्रपात्य तद्गतफलानि स्वादेमहि"। इति नीललेश्यापरिणामः २ । तृतीयेनोक्तं—किमेतया महाशाखया छिन्नया ? तदेकदेशभूताः प्रशाखा एव कर्त्तयामः" । इत्येवंविधः कापोतलेश्यापरिणामः ३ । चतुर्थ उवाच—"किमाभिरपि वराकीभिः कर्त्तिताभिः ? तत्पर्यन्तवर्तिनः काँश्चिद्गुच्छानेव छिद्मः" । एष तेजोलेश्यापरिणामः ४ । पञ्चमः प्रोवाच—"गुच्छैरपि छिन्नैः किं ? न किञ्चित्, तन्मध्यात्सुपक्वानि भक्षणोचितानि कानिचित्फलान्येव गृह्णीमः" । इत्यसौ पद्मलेश्यापरिणामः ५ । षष्ठस्तु बभाषे—"किं तैरपि त्रोटितैः ? यावत्प्रमाणैः प्रयोजनमस्माकं तावत्प्रमाणानि फलान्यधस्तादपि पतितानि अस्य विटपिनः प्राप्यन्ते, तद्वरममीभिरेव प्राणवृत्तिं विदध्मः, किमुन्मूलनादिनाऽस्य शाखिनः खेदेन ?" इति । अयं शुक्ललेश्यापरिणामः ६ इति ।

ग्रामघातकदृष्टान्तस्तु—कस्मिंश्चिद्ग्रामे धनधान्यादिलुब्धैः षड्भिस्तस्करस्वामिभिर्मिलित्वा धाटिः प्रक्षिप्ता । तत्रैकेनोक्तं—"यत्किमपि द्विपदचतुष्पदपुरुषस्त्रीबालवृद्धादिकं पश्यथ तत्सर्वं मारयत" इति, एवंजातीयः कृष्णलेश्यास्वभावः १ । द्वितीयस्तु नीललेश्यापरिणामवर्ती बभाषे—मानुषाण्येव मारयत, किं तिर्यग्भिः ? इति २ । तृतीयः पुनः कापोतलेश्यायुक्तो जगाद—"पुरुषानेव व्यापादयत, किं स्त्रीभिः ?" इति ३ । चतुर्थस्तु तेजोलेश्यापरिणामान्वितः प्राह—"पुरुषेष्वपि सप्रहरणानेव निशुम्भत, किं निःप्रहरणैः ?" इति ४ । पञ्चमः पुनः पद्मलेश्यान्वितः प्राह—"सायुधेष्वपि युध्यमानानेव विनाशयत, किमन्यैर्निरपराधैः ?" इति ५ । षष्ठस्तु शुक्ललेश्यागतः स्माह—"अहो ! महदसमञ्जसं, यदेकं तावद्द्रव्यमपहरथ, अपरं च वराकमेनं विनाशयथ, तस्माद्यद्यपि द्रव्यमपहरथ तथापि प्राणाँस्तावत्सर्वस्यापि लोकस्य रक्षत" इति ६ । एतल्लेश्यावतां प्रेत्यगतिबन्धनं । यतः—

किण्हाए जाइ नरए नीलाए थावरो नरो होइ ।
कापोताए तिरियं पीताए माणुसो होइ ॥ १ ॥
पम्हाए देवलोयं सुक्काए जाइ सासयं ठाणं ।
इय लेसाण वियारो णायव्वो भवजीवेहिं ॥ २ ॥

इत्यादिलेश्यास्वरूपं श्रीगुरुमुखतोऽवधार्य प्रियंकरभूपः प्रबुद्धः प्रत्यहं शुभलेश्यासंपृक्तः श्राद्धधर्मं प्रतिपद्य सद्गतिभागभूत् । अरिदमननृपकथां श्रुत्वा बहवः प्रतिबुद्धा इति तत्त्वम् ॥

कापोतलेश्यापरिणामसंयुतः, कीटत्वमापारिदमश्च नृपतिः।
श्रुत्वा पितुः स्वाप्तमुखाच्चतिं प्रियं–करः सुलेश्यामगमत्सुधर्मदाम् ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ षोडशस्तम्भे षड्विंशत्यधिकद्विशततमं २२६ व्याख्यानम् ॥

## व्याख्यानं ॥ २२७ ॥

अथाविमृश्यकारितानिषेधमाह—

अविमृश्य कृतं कार्यं पश्चात्तापाय जायते। अत्राम्रतरुच्छेदाद्या दृष्टान्ताः खचिता बुधैः ॥ १ ॥

पाटलीपुरवासी धनदत्तश्रेष्ठी प्रवहणे स्वयं चटितः। तदनन्तरं सानुकूलपवनयोगेन वेगेन महासमुद्रमध्ये यावता प्रवहणं प्रचलदस्ति तावता श्रेष्ठी व्योममार्गेण समागच्छन्तं वक्त्रगृहीताम्रफलमेकं प्रवरं शुकराजं ददर्श। परिश्रमवशात्समुद्रजले पतन्तं वीक्ष्याधः पटीं प्रसार्य धीवरैः स्वसमीपे समानायितः। जलवातादिप्रदानेन स्वस्थीकृत्य स कीरः श्रेष्ठिना प्रवादितः, तदा कीरेण मुखात्फलं विमुच्य मनुष्यवाण्या जल्पितुमारेभे—"भोः सार्थनाथ! त्वया सर्वोपकारप्रवरः साम्प्रतं मम जीवितोपकारः कृतः, पुनर्मम जीवितं ददता त्वया वृद्धौ दृष्टिहीनौ मदीयौ मातापितरावपि जीवितौ। तस्मान्महोपकारिण-

त्त्वाहं कीदृशमुपकारं करोमि ? तथापि मत्समानीतमिदमाम्रफलं त्वया गृह्यतां" । श्रेष्ठी प्राह—"त्वन्नद्यं तवार्हमेतत्फलं त्वं भक्षय, अन्यदपि तव शर्कराद्राक्षादिकं भक्ष्यं यच्छामि" । शुकः स्माह—"एतस्य फलस्य व्यतिकरं शृणु—विन्ध्याटव्या एकस्मिन् द्रुमे कीरमिथुनमस्ति, तत्पुत्रोऽहं ज्ञेयः । तौ मत्पितरौ क्रमेण वृद्धभावेन जराक्रान्तौ लोचनाभ्यां न पश्यतः । तदाऽहमेव भक्ष्यमानीय तयोर्ददामि । तत्रारण्य एकदा मुनियुगलं समागतं । तेन साधुयुगेन दिगवलोकनं कृत्वा निर्व्यञ्जनत्वादीदृशी वार्ता कृता—समुद्रस्य मध्ये कपिशैलशृङ्गे सदाफलः सहकारद्रुमोऽस्ति, तस्यैकमपि फलं य एकवारं भक्षयति तदङ्गतः सर्वव्याधयो नश्यन्ति, अकालमरणं जराजीर्णत्वं तस्य न भवति । इति श्रुत्वा मया ध्यातं—मुनेर्वाक्यं सदा पथ्यमवन्ध्यं च स्यात्, अतस्तत्फलं समानीय मातापित्रोर्यदि ददामि तेन तौ तारुण्यावस्थौ भवतः । तदनु तत्र गत्वा मया तत्फलं समानीतमस्ति, त्वं गृहाण, अहमन्यफलं समानीय पित्रोर्दास्ये" । तदानीं श्रेष्ठिना शुकाग्रहेण तत्फलं समाददे । शुकः पुनर्नभस्तले उत्पपात । ततः श्रेष्ठिना चिन्तितं—"एतत्फलं यदि कस्मैचिन्नरेन्द्राय प्रदीयते तर्हि बहूनामुपकारो भवेत् । मया भक्षितं तदा किं ? न भक्षितं तदाऽपि किं ? " इति ध्यात्वा तेन तदाम्रफलं भव्यस्थाने गोपितं । तदनन्तरं कियद्भिर्वासरैस्तत्प्रवहणं परं कूलं संप्राप्तं । तदा श्रेष्ठी प्रवहणादुत्तीर्योपायनं गृहीत्वा भूपतिपार्श्वे ययौ । उपायनं ढौकितं । तत्फलं राज्ञे समर्पितं । तदा राज्ञा सविस्मयेन प्रोक्तं—"भोः श्रेष्ठिन् ! किमेतत्फलं ? " । तदा तेन नृपाग्रे फलस्य परमार्थः कथितः । तदा राजा भृशं संतुष्टः समस्तमपि शुल्कं तस्य मुमोच ।

ततो हृष्टः श्रेष्ठी स्वस्थानं चचाल । नृपस्त्वाम्रफलं करे कृत्वेति दध्यौ—"सकृदेकाक्येवाहमद्मि तेन को गुणो भवेत् ? अतोऽहमेतद्बीजवापनं सुक्षेत्रे कारयामि, ततो यथेष्टं फलदानेन सुतवल्लभादीन् वीतजरसो विदधामि" । इति ध्यात्वा सुक्षेत्रे तद्बीजवापनं विहितं । क्रमात्तस्मिँश्चूतद्रुमे पुष्पिते फलिते च सति राजा रक्षकाणां प्रीतिदानं दत्त्वेति बभाषे—"अयं यत्नतो रक्षणीयः" । इति नृपवचः श्रुत्वा ते रक्षकनरा दिवारात्रौ तत्रैव तिष्ठन्ति । एकदा दैववशतो रात्रौ स्वयमेव त्रुटित्वा फलमेकं भूमौ निपतितं । तदा प्रगे रक्षकनरैस्तत्फलं परिपक्वं पतितं दृष्ट्वा प्रहृष्टैः शीघ्रमेव नृपाय दत्तं । तदा नृपेणापि चिन्तितं—"एतन्नूतनफलं पूर्वं कस्मैचित् पात्राय दीयते" । ततश्चतुर्वेदधराय द्विजाय तत्फलं भक्तिपूर्वकं भूपो ददौ । द्विजोऽपि तत्फलभक्षणाच्छीघ्रं मृतः । तद्वार्ता नृपेण श्रुता । सखेदः प्राह—"अहो ! मया धर्मबुद्ध्या महत्तरं ब्रह्महत्यापातकं लब्धं । नूनं मे विषवृक्षफलमेव केनाप्यरिणा प्रपञ्चं विधाय मम मारणाय प्रेषितं । तदयं स्वयमुप्तोऽपि प्रयत्नतः पालितोऽपि विषपादपः शीघ्रमेव विपाद्यतां । ततस्तत्क्षणमेव नृपनरैस्तीक्ष्णकुठारैः स द्रुमवरो मूलादपि छित्त्वा भूमौ निपातितः । तदा मारिकुष्ठपित्तादिरुजार्दिता जनास्तद्विषाम्रछेदनं श्रुत्वा जीवितनिर्विण्णाः सन्तस्तत्रागताः सुखमृत्यवे । तन्मध्ये केनापि तस्य द्रुमस्य शेषं काष्ठादिकं कुत्सितं दग्धं च भक्षितं । तेन सर्वेऽपि नीरोगा जाता अद्वितीयरूपान्विता बभूवुः । तान् वीक्ष्य सविस्मयो भूपो रक्षकनरानाकार्य पृष्टवान्—"भोः ! आम्रफलं भवद्भिस्त्रोटितं किंवा स्वयंपतितं गृहीतं ?" । इति श्रुत्वा तैः सत्यमुक्तं । तदा राज्ञा विमृष्टं—"नूनं तत्फलं सर्पादिविषेण मिश्रितं भावि,

तेन स द्विजोत्तमो विपन्नः, परंतु स एष द्रुमः पीयूषसम एव । हा मया सहसाऽविचार्याकार्यं विहितं यदसौ रोषतः सारवृक्ष उन्मूलितः" इत्यादि तद्गुणान् स्मरन् पुनः पुनर्यावज्जीवं बाढं शुशोच । यथा तेन नृपेणापरीक्षितं कृत्यं कृतं तथाऽन्येन न विधेयमिति । अत्रोपनययोजना कार्या—अतिदुर्लभमाम्रवृक्षसन्निभं नरजन्म लब्ध्वाऽज्ञानेनाविरत्या च यो मूढो नरभवं हारयति स बाढं भूयो भूयः शोचनं लप्स्यते इति । कदाचित्सुरसान्निध्यात्तत्सुवृक्षफलप्राप्तिर्भवेन्न पुनर्मुग्धेन मुधा विफलीकृतनृभवप्राप्तिः अतः प्रमादो न विधेय इति ॥

पतङ्गभृङ्गैणखगाहिमीन—द्विपाश्च व्याघ्रप्रमुखाः प्रमादैः ।
शोच्या यथा स्युर्मृतिबन्धदुःखै—श्चिराय भावी त्वमपीति जन्तो ॥ १ ॥

हे जन्तो ! यथा पतङ्गभृङ्गमृगपतत्रिसर्पमीनहस्तिसिंहप्रमुखाः प्रमादैर्हेतुभिर्मृतिबन्धदुःखैः कृत्वा शोच्याः स्युस्तथा हे आत्मन् ! त्वमपि चिराय शोच्यो भावीति ॥ १ ॥

पुराऽपि पापैः पतितोऽसि दुःख—राशौ पुनर्मूढ करोषि तानि ।
मज्जन्महापङ्किलवारिपूरे, शिलां निजे मूर्ध्नि गले च धत्से ॥ २ ॥
पुनः पुनर्जीव तवोपदिश्यते, बिभेषि दुःखात्सुखमीहसे चेत् ।
कुरुष्व तत्किञ्चन येन वाञ्छितं, भवेत्तवास्तेऽवसरोऽयमेव ॥ ३ ॥

धनाङ्गनासौख्यजनानसूनपि, त्यज त्यजैकं न च धर्ममार्हतम् ।
भवन्ति धर्माद्भिवाः शुभानि, ततो विमृश्यैव विधेहि सत्क्रियाम् ॥ ४ ॥

॥ इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ षोडश-स्तम्भे सप्तविंशत्यधिकशततमं २२७ व्याख्यानम् ॥

## ॥ व्याख्यानम् ॥ २२८ ॥

पुनः सहसाकरणनिषेधमेवाह—

सहसा विहितं कर्म न स्यादायतिसौख्यदम् । पतत्रिहिंसकस्यात्र महीभर्तुर्निदर्शनम् ॥ १ ॥

इह भरते शत्रुञ्जयनृपस्यान्तिके कश्चित् पुमान् विशुरूघोटकमेकं समादाय ढौकयामास । तदा राज्ञा ध्यातं—"रूपश्रियाऽयमश्वो वर्णनीयो दृश्यते, परं त्वस्य गतिर्विलोक्यते । यतः—

जवो हि सप्तेः परमं विभूषणं, त्रपाङ्गनायाः कृशता तपस्विनः ।
द्विजस्य विद्यैव मुनेरपि क्षमा, पराक्रमः शस्त्रबलोपजीविनः ॥ १ ॥

ततस्तं तुरङ्गममारुह्यारण्ये वाहयामास । तदा पवनवेगात्सोऽश्वः तथा प्रचलितो यथा सर्वमपि सैन्यं पश्चात् पतितं । यथा यथा रक्षणाय ( स्तम्भनाय ) वल्गामाकुञ्चयति तथा तथा विशेषेण स हयः प्रच-

लति । श्रान्तेन भूपेन वल्गा शिथिलैव मुक्ता, तदा तत्रैव स्थितः । तदानीं राज्ञा स विपरीतशिक्षो ज्ञातः । एतावता स नृपस्तुरगादुत्तीर्य पर्याणमपनयति स्म, तावता संजातत्रोटः सन् सोऽश्वो मृतः । अथ तत्र भीमारण्ये तृषाक्षुधापीडितो नृप एकाकी बभ्राम । तदा वनमध्ये भ्रमन् राजा विस्तीर्णं वटमेकं वीक्ष्य खिन्नः सन् गत्वा तस्य छायायामुपविश्य यावत्पार्श्वावलोकनं करोति तावता तस्यैव वृक्षस्य शाखायाः पततो जलबिन्दून् दृष्टवान् । तदा राज्ञा ध्यातं—"इदं वर्षाकालसंभवं जलं शाखारन्ध्रे इयत्कालं संस्थितं, साम्प्रतं तत्पतति" । इति विमृश्य पलाशपत्रभाजनं कृत्वा तृषाक्रान्तेन राज्ञा तत्र निवेशितं । क्रमेण नीलकलुषाम्बुना तत्पूरितं राजा गृहीत्वा यावत् पिबति तावत्तत्र कश्चित् पक्षी वटशाखाया उत्तीर्य तज्जलपात्रं नृपकरात् पातयित्वा तरुशाखायामुपविष्टः । पुनरपि विलक्षो राजा तथैव जलपात्रं प्रपूर्य यावत्पातुं समुद्यतस्तावता पुनरपि तेन पक्षिणा तथा कृतं । तदा राजा क्रुद्धः सन् दध्यौ—"यद्यसौ दुरात्मा पक्षी अधुना समेष्यति तर्हि मारयिष्यामि" । इति विचिन्त्य एकेन करेण कशां गृहीत्वा द्वितीयेन जलार्थं पुनः पत्रपुटं स्थापयामास । एतावता स पक्ष्यचिन्तयत्—"अयं भूपः कुपितोऽस्ति, यदि पुटं पातयिष्यामि तर्हि नूनमेष मां हनिष्यति । चेन्न पातयामि तर्हि अस्मिन् विषजले पीतेऽयमवश्यं मरिष्यति, ततो मम मरणं वरं, परमयं भूपो यदि जीवति तदा भव्यं" । इति विमृश्य पुनरपि तेन नृपकरात्पत्रपुटः पातितः । कुपितेन राज्ञा कशाघातेन स सपदि व्यपादि । ततो नृपेण जलार्थं भूयोऽपि तत्पात्रं स्थापितं, क्रमेणाभ्रजलमग्रतोऽग्रतः पतति स्म । तदानीं भूपेन सविस्मयेन समुत्थाय वृक्षशा-

खायां चटित्वा यावद्विलोकितं तावत्तरुकोटरेऽजगरो दृष्टः। तं वीक्ष्य राज्ञा ध्यातं—"तज्जलं प्रसुप्तस्यास्य मुखाज्झरत् पतितं, यदि मया पीतमभविष्यत्तर्हि निश्चयेन मम मरणमभविष्यत्। अहो! एतेन पक्षिणा मम निवारणं वारंवारं कृतं, परं मूर्खत्वेन मया न ज्ञातं। हा हा! परोपकारी खगो वृथा निहतः"। इत्थं पश्चात्तापं कुर्वतस्तस्य नृपस्य सैनिकाः समाजग्मुः। ततस्तं पक्षिणं सहादाय स्वपुरे एत्य चन्दनकाष्ठैः संस्कारं विधाय जलाञ्जलिं दत्त्वा स राजा मन्दिरं संप्राप्य शोकातुर उपविष्टः। तदा मन्त्रिसामन्ताद्यैः पृष्टः—"हे नाथ! भवता पक्षिणः प्रेतकार्यं कृतं तत्किं कारणं?" तदा राज्ञा तत्कृतोपकारो निवेदितः, "स पक्षी मया जावज्जीवं न विस्मरिष्यते" इत्युवाच च। यथाऽविमृश्य कार्यकरणात्स नृपः पश्चात्तापमाप तथाऽन्योऽपि प्राप्नोति। अत्रायमुपनयः—पक्षिरूपोऽजरामरपददायको नृभवः, तं चतुर्गतिभवपर्यटनं कुर्वन् जीवः कथमपि लब्ध्वाऽविरत्यादिना नरजन्महानिं तनुते सोऽत्यन्तं शोच्यते। अथवा पक्षिसमां समग्रोपकारकारिकां जिनवाणीं संप्राप्य स्वाभिनिवेशरूपकशाघातेन तां निहन्ति स महामूढः। यतः—

> शिलातलाभे हृदि ते वहन्ति, विशन्ति सिद्धान्तरसा न चान्तः।
> यदत्र नो जीवदयार्द्रता ते, न भावनाङ्कूरततिश्च लभ्या॥ १॥

हे आत्मन्! शिलातलसदृशे तव हृदये सिद्धान्तरसाः प्रवहन्ति च-परमन्तःकरणमध्ये न प्रविशन्ति,

१ दीर्घोकारश्चिन्त्यः.

यस्मादत्र हृदये जीवदयाकोमलता च-पुनर्भावनाङ्कुरश्रेणिर्न लभ्या—न प्राप्या स्यात्। यत आसन्नसिद्धिकानां तत्स्यात्, नान्येषां इति। तथा सिद्धान्तं पठित्वा ये प्रमादान्न मुञ्चन्ति तदधीतं सर्वं व्यर्थं। यतः—

अधीतिनोऽर्चादिकृते जिनागमं, प्रमादिनो दुर्गतिपातिनो मुधा।
ज्योतिर्विमूढस्य हि दीपपातिनो, गुणाय कस्मै शलभस्य चक्षुषी ॥ १ ॥

प्रमादवतो दुर्गतिपातिनः पूजासत्कारार्थेऽधीयानस्य पठनं श्रुतं च सर्वं वृथैव। हि निश्चितं कान्तिं दृष्ट्वा भ्रमितचित्तस्य पतङ्गस्य नेत्रे कस्मै गुणाय स्यातां ? न कस्मैचिदपि। तथा सिद्धान्तचक्षुर्व्रतोत्तमताकारि स्यात्, अतः शुभं पठ। यतः—

किं मोदसे पण्डितनाममात्रा-च्छास्त्रेष्वधीती जनरञ्जकेषु।
तत्किञ्चनाधीष्व कुरुष्व चाशु, न ते भवेद्येन भवाब्धिपातः ॥ २ ॥

अथ चातुर्गतिकदुःखस्वरूपं वर्ण्यते—

दुर्गन्धतोऽपि यदणोर्हि पुरस्य मृत्यु-रायूंषि सागरमितान्यनुपक्रमाणि।
स्पर्शः खरः क्रकचतोऽतितमामितश्च, दुःखावनन्तगुणितौ भृशशैत्यतापौ ॥ १ ॥

यदणोर्यन्नरकसंबन्धिपरमाणोरपि दुर्गन्धतः पुरवासिलोकस्य मृत्युः स्यात् एतादृशा महादुर्गन्धाः श्वभ्रपुद्गलाः सन्ति, तथा यत्रोत्कृष्टेन त्रयस्त्रिंशत्सागरमितानि अपवर्तनरहितानि निकाचितान्यायूंषि सन्ति, पुनर्यत्र स्पर्शः क्रकचतोऽप्यतितमां खरः पुनर्यत्रेतोऽनन्तगुणितौ दुःखौ भृशशैत्यतापौ स्तः ॥

तीव्रा व्यथाः सुरकृता विविधाश्च यत्रा-क्रन्दारवैः सततमभ्रभृतोऽप्यमुष्मात् ।
किं भाविनो न नरकात्कुमते बिभेषि, यन्मोदसे क्षणसुखैर्विषयैः कषायैः ॥ २ ॥
रोदनादिरवैराकाशं पूर्यत एतादृशात् भविष्यतो नरकात् किं न बिभेषि ? ॥

बन्धानिशंवाहनताडनानि, क्षुत्तृड् दुरापातपशीतवाताः ।
निजान्यजातीयभयापमृत्यु-दुःखानि तिर्यक्ष्विति दारुणानि ॥ ३ ॥
मुधान्यदास्याभिभवाभ्यसूया, भियोऽन्तगर्भस्थितिदुर्गतीनाम् ।
एवं सुरेष्वप्यसुखानि नित्यं, किं तत्सुखैर्वा परिणामदुःखैः ॥ ४ ॥

नित्यं मुधा—धनादिप्राप्त्यर्थं विना इन्द्रसेवावज्रप्रहारपरस्परद्वेषादिकाः च पुनः तुच्छकुलजन्मगर्भवासतिर्यग्गत्यादीनां भयानि, एवं सुरेष्वप्यसुखानि सन्तीति ।

सप्तभीत्यभिभवेष्टविप्लवा-निष्टयोगगददुःसुतादिभिः ।
स्याद्ध्रुवं विरसता नृजन्मनः, पुण्यतः सरसता तदा भवेत् ॥ ५ ॥

पद्मिसमं नृणां जन्म गुणाकरं प्रमादतः । लब्ध्वा न हिंसनीयं तद्येन त्वं सद्गतिं भजेः ॥ १ ॥

॥ इत्यब्ददिनपरिमितहितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ षोडश-
स्तम्भेऽष्टाविंशत्यधिकशततमं १२८ व्याख्यानम् ॥

अथ पञ्चभिः कारणैः कार्यं साध्यत इत्याह—

कालाद्यैः पञ्चभिः कार्यमन्योऽन्यं सव्यपेक्षकैः । संपृक्ता यान्ति सम्यक्त्वं इमे व्यस्ताः कुदर्शनम् ॥१॥

स्पष्टः । नवरं जैनानां मते सर्वं दृष्टादृष्टं कार्यं पञ्चभिः काल १ स्वभाव २ नियति ३ पूर्वकृत ४ पुरुषाकार ५ कारणैरनेकानेकस्वभावैः कार्यनिर्वर्तनक्षमैरेतैः सर्वं निष्पद्यते । यतः श्रीसिद्धसेनदिवाकरैः श्रीसम्मतिसूत्रे तृतीयकाण्डे उक्तं—

कालो १ सहाव २ नियई ३ पुव्वकयं ४ पुरिसकारणे ५ पंच ।
समवाए सम्मत्तं एगंते होइ मिच्छत्तं ॥ १ ॥

एषां समवाये–संयोगे सृष्टिकारणतया मन्यमाने सम्यक्त्वं स्यात् । एकान्ते तु मिथ्यात्वं । इह किल कालवादी प्राह—

कालः सृजति भूतानि कालः संहरते प्रजाः । कालः सुप्तेषु जागर्ति कालो हि दुरतिक्रमः ॥ १ ॥

प्रथमं तावत् कालेन गर्भ उत्पद्यते कालेन वर्धते कालेन जायते । कालेनैव जिना जीवाश्च भाव-लब्धिं प्राप्य सिध्यन्ति । काल एवात्मीयानन्तानन्दरूपक्षायिकरत्नत्रयादिप्राप्तिरूपभावधर्मं रुणद्धि, अन्यथाऽस्मिन् काले नरत्वं जैनशासनसामग्रीं च प्राप्यापि कथं न सिध्यति ? अतः काल एव ददाति

संहरति च, कालेनैव आसनोत्थानचालनभाषणादिभावास्तावद्यावत्कालेन मृत्युः । एवं काले शीतं तापो वृष्टिश्चेत्यादि सर्वं कालहेतुकमिति १ । अथ स्वभाववादी प्राह—कोऽयं वराकः कालः ? स्वभावेन पित्रोः संयोगे गर्भोत्पत्तिवृद्धिजन्मोदयभावा जायन्ते । मयूरेषु विचित्रत्वं कंटकेषु तीक्ष्णत्वं कः करोति ? यदि च कालेन सृष्टिस्तदा मनुष्यबाला मासाद्यतिक्रमे चलन्ति, अश्वादीनां तु बाला जातमात्रा एवेति किं ? अतः सर्वेषां स्वभाव एव प्रमाणं २ । अथ नियतिवादी प्राह—भोः कावेतौ कालस्वभावौ ? नियतिः—भवितव्यता, सैव सर्वत्र, यतः कालस्वभावयोः सतोरपि यस्यापत्यानि भावीनि तस्यैव भवन्ति नान्यस्य । किंच करोछालिताः कपर्दिकाः काश्चित्संमुखाः काश्चिच्च तिरश्चीनाः पतन्ति तत्र कालस्वभावयोर्मध्ये कस्य प्रमाणं ? परं या यथा पातिनी भविष्यति सा तथैव पतत्येवेति नियतेरेव प्रमाणं । यथा कश्चिद्व्याधः पुङ्खितशरेण तरुस्थमेकं सुपत्रिणं हन्तुं सोद्यमी जातः, पुनस्तं पक्षिणं हन्तुमेकः सिञ्चानक उपरि भ्रमति, इतो बाणश्चुटितः सिञ्चानकस्य लग्नः, व्याधस्त्वहिना भक्षितः, स च पक्षी सुखेन गतः । अतो नियतेरेव प्रामाण्यं ३ । अथ कर्मवादी प्राह—काऽसौ निःस्थामस्थानस्थाऽबला नियतिः ? कर्मैव प्रमाणं सर्वसुखदुःखानां च कारणं । येन श्रोत्रियस्वामिशक्रादयः श्वपचपत्तिरङ्कादित्वं श्वपचादयश्च श्रोत्रियादित्वं लभन्ते । तथा चोक्तम्—

यथा यथा पूर्वकृतस्य कर्मणः, फलं निधानस्थमिवोपतिष्ठते ।
तथा तथा पूर्वकृतानुसारिणी, प्रदीपहस्तेव मतिः प्रवर्तते ॥ १ ॥

तथा—स्वकर्मणा युक्त एव सर्वोऽप्युत्पद्यते जनः । स तथा कृष्यते तेन न यथा स्वयमिच्छति ॥ २ ॥

न दृष्टं नानुभूतं च तत्र कर्मणा नीयते । यथैक आखुः करण्डकं सुखाद्यभृतं मत्वा दंष्ट्रया विवरं कृत्वा प्राविशत् । तन्मध्यस्थसर्पेण स भक्षितः, सर्पस्तु तद्विवरान्निर्गत्य वने गतः । अतः कर्मैव कारणं तथ्यं ४ । अथोपक्रमवादी प्राह—किमनेन शठेन कर्मणा ? पुरुषाकार एव सर्वफलनिबन्धनं । यदि च कर्मणैव सर्वसिद्धिस्तर्हि सर्वः कोऽप्युपविश्य तिष्ठतु, स्वयं कर्मणैव सर्वेप्सितानि सेत्स्यन्ति । यदुक्तम्—

न दैवमिति संचिन्त्य त्यजेदुद्यममात्मनः । अनुद्यमेन कस्तैलं तिलेभ्यः प्राप्तुमिच्छति ॥ १ ॥

अथ राजादीनां निविष्टानामेव तत्कर्मणा सेवकाः स्वयं सर्वं ढौकयन्तीति चेत्तर्हि तद्ढौकितमन्नादि करव्यापारोपक्रमं विना कथं मुखे याति ? तदपि सेवकैर्मुखे क्षिप्यते तदापि दन्तचर्वणोपक्रमं विना कथं गिल्यते ? ततः उपक्रमजन्यत्वात्कर्मणः पुत्रत्वमुपक्रमस्य च ( जनकत्वात् ) पितृत्वं । किं च मोक्षक्षणे क्षपकश्रेणिरूपशुक्लध्यानेन सर्वकर्मोन्मूलनतो जीवाः सिध्यन्ति सेत्स्यन्ति इत्युपक्रम एव बलीयान् ५ । अथैषामुत्तरं—ये कालवादिनस्ते सर्वं कालकृतं मन्यन्ते, तदयुक्तं । यतः समयादिरूपे परिणामिनि कालेऽविशिष्टेऽपि फलवैचित्र्यमुपलभ्यते । तथाहि—समकालमारभ्यमाणायामपि मुद्गपक्तिरविकला कस्यचिद्दृश्यतेऽपरस्य तु स्थाल्यादिसंगतावेव विकला । तथा समकालमेकस्मिन्नेव राजनि सेव्यमाने सेवकस्यैकस्य फलमचिराद्भवति, अपरस्य तु कालान्तरेऽपि न । तथा समानेऽपि समकालमपि क्रियमाणे कृष्यादिकर्मण्येकस्य परिपूर्णधान्यसंपदुपजायते, अपरस्य तु खण्डस्फुटिता वा न किञ्चिदपि । ततो यदि

काल एव केवलः कारणं जवेत्तर्हि सर्वमपि सममेव मुजपक्त्यादिकं फलं जवेत्। तस्मान्न कालमात्रकृतं विश्ववैचित्र्यं, किंतु कालादिसामग्रीसापेक्षं। एवमेकान्तेन पञ्चाप्येतान् कालादीन् कारणतया स्थापयन्तो मिथ्यादृष्टय एव मिथो निरपेक्षत्वाच्च विश्वसृष्टिसिद्धेरजावात्। अतस्त एव समुदिताः परस्पराजहद्वृत्तयः सम्यक्त्वरूपतां प्रतिपद्यन्ते, तथैकेन कार्यं न प्रतिपद्यते, गौणमुख्यकालादिना निष्पद्यते। यत उक्तं जगवत्यङ्गसूत्रवृत्तौ प्रथमशतके प्रथमोद्देशे—यद्यपि उदीरयति करणविशेषेणाकृष्य जविष्यत्कालवेद्यं कर्म क्षपणायोदयावलिकायां प्रवेशयति इत्युदीरणा, तस्यां कालस्वजावादीनां कारणत्वमस्ति, तथापि प्राधान्येन पुरुषवीर्यस्यैव कारणत्वमुपदर्शयन्नाह—"जं तं जंते अप्पणा चेव उदीरेति" इत्यादि। तथा चैते कालादय एकैके कुत्रापि कार्यधर्मलक्षणे न कारणं यदुक्तं सूत्रकृताङ्गद्वितीयश्रुतस्कन्धे—"नत्थि धम्मे अधम्मे च" इत्यादि। धर्मः श्रुतचारित्रात्मको जीवस्यात्मपरिणामः कर्मक्षयकारणं, अधर्मो मिथ्यात्वाविरतिप्रमादकषाययोगरूपः कर्मबन्धनकारणमात्मपरिणाम एव। तावेवंजूता धर्माधर्मौ कालेश्वरादिमते न विद्येते इत्येवं संज्ञां निवेशयेत्। कालादय एवास्य सर्वस्य जगद्वैचित्र्यस्य धर्माधर्मव्यतिरेकेणैकान्ततः कारणमित्येवमजिप्रायं न कुर्यात्, यतो धर्माधर्मावन्तरेण संसारवैचित्र्यं न घटामियर्त्यतोऽस्त धर्मः सम्यग्दर्शनादिः अधर्मश्च मिथ्यात्वादिकः इत्येवं संज्ञां निवेशयेदिति। तथा सम्यग्दृशा पञ्चाप्येते कारणतया ज्ञातव्याः, तदर्थे सति सृष्टिसिद्धिदर्शनात्, तथाहि—पित्रोरुपक्रमेण बीजसंयोगे जाते १ कर्मणा

१ तत्समुदाये सतीत्यर्थः.

जीवोऽवतरितः २, तस्य च सदसत्कर्मानुसारेण सुखदुःखहेतुसंपद्यमानतत्तद्वस्तूनां प्रतिदाणं नैयत्यं क्रियते ३, स्वजावेन गवाश्वपशुपक्षिमनुष्यस्त्रीपुरुषादीनां स्वजावा जन्यन्ते ४, ततः कालेन निष्पत्तियौवनादिजावाः संपद्यन्ते ५। एवं सर्वपदार्थेषु यथार्हं वाच्यं। यथा किल पञ्चजिर्जनैर्वाह्यो जार एकस्मिन् पुरुषे अपसृते सति नोह्यते, पञ्चजिस्तूह्यते, एवमत्रापि कालादीनामन्यतमस्यैकस्याप्यजावे विश्वसृष्टेरसिद्धिः। अत्राह—ननु कथं कालादीनां प्रत्येकं निरपेक्षाणां मिथ्यात्वस्वजावे सति समुदितानां सम्यक्त्वसद्भावः? यत्प्रत्येकं नास्ति तत्समुदायेऽपि जवितुं नार्हति, सिकतातैलवत्। नैतदेवं प्रत्येकं पद्मरागादिमणिष्वविद्यमानाऽपि रत्नावलिः समुदाये जवन्ती दृष्टा, न च दृष्टेऽनुपपन्नं नामेति यत्किञ्चिदेतत्। उक्तं च—

एहि कालादिहिंतो केवलएहिं तु जायए किंचि। इह मुग्गरंधणादिव ता सव्वे समुदिता हेऊ ॥ १ ॥
जहऽणेगलक्खणगुणा वेरुलियादी मणी विसंजुत्ता। रयणावलिववएसं न लहंति महग्घमूलाऽवि ॥२॥

इत्यादि। अथ काललब्धिं विना मोक्षप्राप्तिर्न स्यात्, अतो यस्मिन् काले यत्कार्यस्य जवनं तत्तस्मिन् काले स्यात्। अत्राह शिष्यः—ननु अजव्योऽनेकजीवसिद्धिगमनकालं प्राप्यापि कथं न सिध्यति?। गुरुराह—तस्य स्वजावस्तादृशः कदापि न स्यात्, आद्यगुणस्थानकमनाद्यनन्तजङ्गेन तस्यास्ति इति। पुनः शिष्यप्रश्नः—तर्हि मुक्तिगमनस्वजावान्विताः सर्वजव्याः कथमेकत्र काले न सिध्यन्ति?। गुरुराह—निश्चयेन सम्यक्त्वादिगुणे जाग्रति संति मोक्षो जवेत् इति नियतिः प्रमाणं। पुनः शिष्य

आह—हे पूज्य ! सम्यक्त्वादिगुणश्रेणिनिष्पन्नस्यापि श्रेणिकस्य कथं न मुक्तिः ? । गुरुः प्राह—पूर्वकृतकर्मणोऽक्षयेण पुरुषाकारपराक्रमवीर्योल्लासस्य च सम्यक्त्वात्तस्य स न प्राप्तः । पुनः शिष्य आह—हे पूज्य ! शालिभद्रेण तु महोद्यमस्तदर्थे कृतः, कथं मोक्षो न प्राप्तः ? । गुरुराह—पूर्वकृतशुभकर्मण्यवशिष्टे स कथं तस्य स्यात् ? । पुनः शिष्यः—भगवन् ! मरुदेव्याश्चत्वारि कारणानि मिलितानि, पुरुषाकारस्तु कश्चिदपि न कृतः, कथं सिद्धिं प्राप ? । गुरुराह—अनया शुक्लध्यानेन क्षपकश्रेण्यारोहिण्याऽनन्तपराक्रमवीर्योल्लासः कृतः, तेन प्राप्तो मोक्षः । अतः पञ्चसमवाये सिद्धिरिति ॥

कालस्वभावादिकहेतुभिर्ध्रुवं, सर्वाणि कार्याणि भवन्ति पञ्चभिः ।
स्याद्वादपक्षं समुदाययुक्तित-स्तन्वन्त्यजस्रं जिनमार्गलोलुपाः ॥ १ ॥

॥ इत्यब्ददिनपरिमितहितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रंथस्य वृत्तौ षोडशस्तम्भे एकोनत्रिंशदधिकद्विशततमं २२९ व्याख्यानम् ॥

---

## ॥ व्याख्यानम् ॥ २३० ॥

अथ भाविभाव उच्यते—

भवितव्यविपर्यासं मत्तोऽसौ दशकन्धरः । कर्तुं शक्तो हि नैवाभूत् स श्रीपूज्यैः प्रबोधितः॥ १ ॥

स्पष्टः । संबन्धोऽयं—त्रिकुटपर्वते लङ्कायां रावणो राज्यं करोति । शैवसमये दशवदनो विंशतिभुजः, इन्द्रो येन जितः, लोकपाला दुर्गपालाः कृताः, वायुर्गृहं प्रमार्ष्टि, मेघो गृहे पानीयं भरति, नव दुर्गा आरात्रिकमुत्तारयन्ति, खरदैत्यो घण्टां वादयति, नव ग्रहाः खट्वां रक्षन्ति, धनदो बीजं वपति, वरुणो जलं सिञ्चति, यमः क्षेत्राणि कर्षति । जैनसमये तु प्रतिवासुदेवः दशमस्तकप्रतिबिम्बहारविराजमानवक्षःस्थलो राक्षसीविद्यावलोत्कटो जगत्तृणं मन्यमानोऽजरामरत्वेन गर्विष्ठस्तिष्ठति । एकदैको नैमित्तिकः समागतः, तेन विज्ञोक्त्यामुक्तं—"अवश्यं मर्तव्यं सर्वैः, यतो मरणं प्रकृतिः शरीरिणां विकृतिर्जीवितमेवमुच्यते" । ततो रावणेनोक्तं—"मम मरणं नास्ति, यमस्य सेवकत्वात्" । तदा नैमित्तिकेनोक्तं—"दशरथपुत्रलक्ष्मणहस्तादवश्यं ते मरणं भविष्यति" । ततो रावणो मन्त्रिमुखमैक्षिष्ट । मन्त्रिभिरुक्तं—"भाव्यं भवत्येवेति लोके श्रूयते" । रावणः सगर्वः साह—"हंहो ! किं भवितव्यतया वराक्या काक्या इव ? उत्तमपुरुषाणां पौरुषमेव प्रमाणं" । नैमित्तिकः प्राह—"राजन् ! मैवं वादीः, चन्द्रस्थलनृपसुतारत्नस्थलनृपपुत्रयोः सङ्गमो अद्यदिनात्सप्तमे दिने पाणिग्रहणेन मध्याह्नेऽस्ति, तां भवितव्यतां विघटयितुं यदि शक्तिरस्ति तदा तवापि मरणभवितव्यता विलीयेत" । "कथं तयोः सङ्गमः ? " इति रावणेन पृष्टे नैमित्तिकः प्राह—"रत्नस्थलनगरे रत्नसेनो राजा । रत्नदत्तः पुत्रो द्वासप्ततिकलाकुशलः सर्वोत्तमरूपलावण्यपुरन्दरो वर्तते । तत्पित्रा पुत्रस्यानुरूपकन्याविलोकनाय कुमाररूपं पटे लेखयित्वा जन्मपत्रिकामर्पयित्वा चत्वारश्चत्वारो मन्त्रिणश्चतुर्दिक्षु प्रेषिताः । ततः पूर्वपश्चिमदक्षिणदिक्षु गता द्वादश मन्त्रिणो

निष्फलाः समागताः । अथ ये उत्तरदिगभिमुखं प्रस्थिता मन्त्रिणस्ते परिभ्रमन्तो गङ्गातटे चन्द्रस्थलं नगरं प्राप्ताः । तत्र चन्द्रसेनो राजा, तस्य चन्द्रावती कन्या चतुःषष्टिकलाकुशला दिव्यरूपपात्रं दृष्टवन्तः । जन्मपत्रिकायां मेलितायामष्टविधा प्रीतिः । राज्ञा स्वपुत्री समाकारिता । उभयोरपि स्वस्वयोग्यतां विचार्य पृष्टा ज्योतिर्विदः, तैर्मिलित्वा विज्ञप्तं—"स्वामिन् ! द्वादश वर्षाणि शोधितानि, परमद्यदिवसाद्द्वादशे दिवसे यादृशं लग्नं, न तादृक्कुत्रापि" । राज्ञोक्तं—"दूरे वरः, लग्नमासन्नं, अत्र क उपायः ?" । मन्त्रिणः प्राहुः—"पवनवेगा रक्तवर्णा उष्ट्रिकाः प्रेष्यन्ते, ताभिः शीघ्रं कुमार एवात्रानीयते" । ततो राज्ञा तथैव प्रतिपद्य पवनवेगाभिरुष्ट्रिकाभिर्मन्त्रिणस्तत्र प्रहिताः । दिनपञ्चकेन ते स्वनगरं प्रापुः । रत्नसेनोऽपि राजा कन्यारूपपट्टविलोकनात्संजातप्रमोदः कुमारं मन्त्रिभिः सह ताभिरुष्ट्रिकाभिः प्रैषयत् । सोऽपि प्रयाणं कुर्वन्नस्ति । यदि रावण ! भवितव्यभञ्जने ते शक्तिरस्ति तदा भञ्जय" । ततो रावणेन तक्षकनागो मुक्तः "याहि रत्नदत्तकुमारं तथा दंशय येन म्रियते" । तक्षकेणापि एकपादः पर्याणेऽन्यो भुवि एतदवसरे दष्टः कुमारो भुवि पतितः । कुमारिकाऽपि रक्षोद्वयेनात्रानीता, दर्शिता नैमित्तिकस्य । नैमित्तिकेनापि उपलक्षिता । तत एका राक्षसी तिमिङ्गिलरूपाऽऽकारिता । एकां मञ्जूषां सप्तदिवसभोजनसहितां कारयित्वा तन्मध्ये कुमारीं चिक्षेप । ततस्तां मञ्जूषां तिमिङ्गिलरूपराक्षसीमुखे क्षिप्त्वा विससर्ज "सप्तदिनपर्यन्तमपारसमुद्रमध्ये ऊर्ध्वमुखी त्वं तिष्ठ, यदाऽहमाकारयामि तदैवागन्तव्यं, नान्यथा" इत्युक्तवाँश्च । पुनरपि नैमित्तिकमुक्तवान्—"पश्य भवितव्यताविपर्यासं" । अथ रत्नदत्तकुमारो मूर्छया

पपात । समाकारिता मान्त्रिकाः । जाङ्गुल्यादिपठनेऽपि न जातो गुणः । ततो नगरे पटहो दापितः । तत्राहैको वृद्धः—"स्वामिन् ! विषमूर्छा षाण्मासिकी स्यात्, ततो जलमध्ये वाह्यतेऽसौ, नाग्निना संस्क्रियते" इति । ततः पुरुषप्रमाणायां पेटिकायां क्षिप्त्वा गङ्गायां प्रवाहितः । सा पेटा जलमध्ये भ्रमन्ती समुद्रं गता । क्षारजलप्रभावाद्विषमूर्छा किञ्चिद्गता । सप्तमे दिवसे तत्रैवागता गङ्गासागरसङ्गमे सा राक्षसी स्वमुखस्थितां पेटीं विमुच्य जलक्रीडां चकार । ततो रत्नवती मञ्जूषाद्वारमुद्घाट्य क्षणं तीरक्रीडार्थं निर्गता एकां पवनप्रेरितां मञ्जूषां व्यलोकत । स्वहस्तेन सोद्घाटिता । कुमारं विषमूर्छितं दृष्ट्वा विषापहारमुद्राजलैस्तमभ्यषिञ्चत् । कुमारः सचेतनो जातः । तं दृष्ट्वा पटरूपदर्शनसादृश्योपलम्भात् "सोऽयं रत्नदत्तकुमारो यस्मै पित्राऽहं दत्ता" इति सा बुबोध । ततः सा हर्षेण तं प्रश्नितवती । कुमारोऽपि पटरूपदर्शनेन कुमारीं बुबुधे । ततः सम्प्रत्येवावयोर्लग्नं स्थापितमभूदिति गान्धर्वविवाहः कृतः । वनद्रुमेभ्यः फलानि गृहीतानि । तटपक्षिणो गायन्ति । विविधरत्नानि कुमारेणाभरणार्थं गृहीतानि । प्रविष्टौ दम्पती तस्यां मञ्जूषायां वस्त्राञ्चलं बद्ध्वा, द्वारं पिहितं । क्षणान्तरे तिमिङ्गिली राक्षसी तथैव मुखे मञ्जूषां संस्थाप्यागाधजले स्थिता । ततो जातोऽष्टमो दिवसः । इतश्च रावणेन नैमित्तिकः प्रोक्तः—"मया भाव्यपि करग्रहणं निषिद्धं" । तेनोक्तं—"हे नृप ! जात एव तयोर्विवाहः" । ततः समाकारिता तिमिङ्गिली राक्षसी पृष्टा च—"अस्ति मञ्जूषा स्वहस्तधृता ? " । तयोचे—"अस्त्येव" । ततो रावणेन समानाय्योद्घाटिता । ततो नवोढा सा स्वपतिमग्रे कृत्वा वस्त्राञ्चलबद्धा निर्गता । जातं लोकानामाश्चर्यं ।

"कथं जातोऽनयोर्विवाहः ?" इति रावणेन पृष्टे नैमित्तिकेन सर्वं निष्पन्नं प्रोक्तं। ततो रावणो भाव्यं भवतीति मत्वा स्वमरणमङ्गीचकार, तौ च सत्कृत्य मुक्तवान्। स्वस्थानं प्राप्तौ। अथैकदा मुनिचन्द्रगुरुं प्रणम्य पौलस्त्यः पप्रच्छ—"भगवन्! कोऽपि नियत्युल्लङ्घने क्षमः श्रुतो दृष्टो वास्ति ?"। गुरुरुवाच—"हे नृपते! वादिनां इदं मतं। यतः—

प्राप्तव्यो नियतिबलाश्रयेण योऽर्थः, सोऽवश्यं भवति नृणां शुभोऽशुभो वा।
भूतानां महति कृतेऽपि हि प्रयत्ने, नाभाव्यं भवति न भाविनोऽस्ति नाशः॥ १॥

देहस्य शाश्वतत्वं कालादीन् विहाय ते वदन्ति, परं तत्र प्रमाणं, कर्मादीन्यपि स्वस्वकार्यजनकानि सन्ति। उक्तं च—

कर्मणो हि प्रधानत्वं किं कुर्वन्ति शुभा ग्रहाः। वशिष्ठदत्तलग्नोऽपि रामः प्रव्रजितो वने॥ १॥
नैवाकृतिः फलति नैव कुलं न शीलं, विद्याऽपि नैव न च जन्मकृताऽपि सेवा।
कर्माणि पूर्वतपसा किल संचितानि, काले फलन्ति पुरुषस्य यथेह वृक्षाः॥ २॥
वैद्या वदन्ति कफपित्तमरुद्विकारं, नैमित्तिका ग्रहकृतं प्रवदन्ति दोषम्।
भूतोपसर्गमथ मन्त्रविदो वदन्ति, कर्मैव शुद्धमतयो यतयो गृणन्ति॥ ३॥

केनचित्तु एकार्थकानि कर्मनामानीमानि प्रोक्तानि—

विधिर्विधाता नियतिः स्वभावः, कालो ग्रहा ईश्वरकर्मदेवाः ।
भाग्यानि पुण्यानि यमः कृतान्तः, पर्यायनामानि पुराकृतस्य ॥ ४ ॥

यथा धेनुसहस्रेषु वत्सो विन्दति मातरम् । एवं पूर्वकृतं कर्म कर्तारमनुधावति ॥ ५ ॥

यथा छायातपौ नित्यं सुसंबद्धौ परस्परम् । एवं कर्म च कर्ता च संश्लिष्टावितरेतरम् ॥ ६ ॥

अथोद्यमः—

न यथैकेन हस्तेन तालिका संप्रपद्यते । तथोद्यमपरित्यक्तं न फलं कर्मणः स्मृतम् ॥ ७ ॥

पश्य कर्मवशात्प्राप्तं भोज्यकाले च भोजनम् । हस्तोद्यमं विना वक्त्रे प्रविशेन्न कथञ्चन ॥ ८ ॥"

पुना रावणः पप्रच्छ—"स्वामिन् ! कोऽपि मृत्यूल्लङ्घनोपायोऽस्ति ?" । गुरुरुवाच–"हे त्रिखण्डेश्वर !-

परिहरति न मृत्युः पण्डितं श्रोत्रियं वा, धनकनकसमृद्धं बाहुवीर्यं नृपं वा ।
तपसि नियमयुक्तं सुस्थितं दुःस्थितं वा, वनगत इव वह्निः सर्वभक्षी कृतान्तः ॥ १ ॥

ये पातालनिवासिनोऽसुरगणा ये स्वैरिणो व्यन्तरा,
ये ज्योतिष्कविमानवासिविबुधास्ताराश्च चन्द्रादयः ।
सौधर्मादिसुरालयेषु सुखिनो ये चापि वैमानिका–
स्ते सर्वेऽपि कृतान्तवासमवशा गच्छन्ति किं शोच्यते ॥ २ ॥

इत्यादिगुरूपदेशतः प्रबुद्धो नित्यं शान्तिजिनभक्तिं चकार । अन्यदा स दशवदनः पुष्पकविमान-

मारुह्य मन्दोदरीभार्यया सहाष्टापदतीर्थेऽगात्। तत्र भरतभूपकारितचतुर्मुखप्रासादे वीणां करे कृत्वा द्रव्यपूजानन्तरं भावपूजां व्यतनोत्। इतश्च तत्रागतनागेन्द्रदेवश्चतुर्विंशतिजिनान्नमस्कृत्योपविष्टः। तं प्रति तीर्थस्वरूपं पृष्टं। फणिपतिनाऽपि अष्टापदमाहात्म्यं निगदितं। तत्समये महता हर्षभरेण मन्दोदरी नृत्यं ततान। इतश्च वीणातन्त्र्येका त्रुटिता तदा प्रत्यर्धचक्रिणा चिन्तितं—"अहो! अत्र नृत्यसमयेऽस्या भावभङ्गो मा भूत्" इति झटिति स्वहस्ततो नाडिकाऽऽकृष्य वीणायां संयोजिता। तेन नृत्यमधिकं शुशुभे। देवैः पुष्पवृष्टिः कृता। पुनः पुनस्ते प्रशंसां चक्रिरे। तत्समये भावमग्नेन रावणेन तीर्थकृत्कर्म समुपार्जितं। ततः स्वस्थानमागतः सुखं तस्थौ॥

कृत्वा परीक्षां विविधैः प्रकारै-रेकान्तवादं नियतादिरूपम्।
मुक्त्वाऽऽत्मसिद्ध्यै प्रकृतोद्यमः स-श्चाष्टापदेऽर्हत्पदमादधात्सः॥ १॥

॥ इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ
षोडशस्तम्भे त्रिंशदधिकद्विशततमं २३० व्याख्यानम्॥

---

## व्याख्यानं ॥ २३१ ॥

अथ कालदेवनृपादिसामग्रीबलात्कर्म बलवत्तरमित्याह—

देवेन्द्रा दानवेन्द्राश्च नरेन्द्राश्च महाबलाः । नैव कर्मपरीणाममन्यथा कर्तुमीश्वराः ॥ १ ॥

अत्रार्थे ज्ञातं चेदं—मनोरमे पुरे रिपुमर्दनो नृपोऽपुत्रः । तस्य भाविनी नाम पुत्री । सा च पितुः प्राणेभ्योऽतिप्रेयसी । ततस्तस्यां स्नानभोजनादिग्रहायामेव स्वयं राजा स्नानभोजनादि करोति । सा पुत्री कलाचार्यसमीपे विद्यां गृह्णाति । इतश्चात्र पुरे सर्वथा निर्धनस्य धनदत्तस्य श्रेष्ठिनः सप्तपुत्रोपरि जातः कर्मरेखाख्यपुत्रः । स च लघीयस्त्वेन पितुः प्रियः । सोऽपि तस्यैव गुरोः पार्श्वे कलाभ्यासं विधत्ते । अधीतकलाजातया तया चैकदा कर्मरेखे पार्श्वे स्थिते गुरुः पृष्टः—“हे तात ! मम को वरो भावी ?” । तेनापि लग्नमवलोक्य “कर्मरेखोऽयं भवत्या भर्ता भावी” इति प्रोक्तं । तच्छ्रुत्वा वज्राहतेव मूर्छामापन्ना सती दध्यौ—“हा हा ! असौ दुर्गतपुत्रको मम पतिस्तदा मम मृतिरेव श्रेयसी । किंचास्मिन् संस्थिते नूनमन्यो भर्ता मम नेति” कोपगृहं सा गत्वा बाष्पपूरप्लावितकञ्चुका स्वमुखं पिधाय सुष्वाप । अथ भोजनावसरे “क गता भाविनी ?” इति राज्ञा गवेषिता । “कोपौकसि सुप्ताऽस्ति” इति तत्रागतः, तादृशीं भाविनीमुत्सङ्गसङ्गिनीं कृत्वा राजा दुःखनिदानमप्राक्षीत् । स्वचिन्तिते तयाऽभिहिते “राज्ञा किं कर्तव्यं ?” इति सर्वेऽपि सचिवाः पृष्टाः प्रोचुः—“हे मनुजाधिराज ! निष्कारणं मनुजमारणं तु राज्ञां नोचितं, ततोऽस्य पितैवाकारणीयः, यथा तस्यैव किञ्चिद्वितीर्य स सुतो गृह्यते, पश्चात्त्वमीप्सितं विधास्यते, ततश्च नानीतिः” । इति श्रुत्वा स धनदत्तः समाहूतः । पृष्टं स्वात्मचिन्तितं । पविपातादपि कठिनतरं तद्वचनं श्रुत्वा साश्रुलोचनो धनदत्तोऽभिधत्ते स्म—“हे देव ! के सुताः ? का

स्त्री ? कश्चाहं ? सकलोऽपि परिवारस्तावकीन एवास्ति यथारुचि विधीयतां"। राजाऽपीतो व्याघ्र इतस्तटीति न्याये पतितः कर्मरेखमादाय वधाय चाण्डालानां ददौ। "बालहत्या नास्माकमुचिता" इति तेऽपि तत्स्थाने मृतकमेकं शूलायां निधाय तं मुमुचिरे। ज्ञातनृपाभिप्रायः सोऽपि शृगालनाशमनशत्।

इतश्च श्रीपुरे श्रीदत्तश्रेष्ठी, तस्य श्रीमतीसंज्ञा सुता। श्रेष्ठिनं निशि स्वप्नान्तरिति गोत्रदेव्योक्तं— "प्रभाते ग्रामाद्बहिरुत्तरस्यां दिशि वर्त्मनि सुप्तस्य यस्य बालस्य पार्श्वे तत्र कृष्णा गौस्तिष्ठति तस्मै श्रीमती देया" इति। अथ कर्मरेखकुमारोऽपि सर्वस्यामपि निशि मार्गचलनान्निकामं श्रान्तः पुरासन्नमागत्य शेते स्म। श्रीदत्तेनापि गोत्रदेवीवचनेन तत्तथैव वीक्ष्य स्वगृहमानीय स्वसुतां परिणायितः। वितीर्णा च करमोचनावसरे सर्वाऽपि गृहश्रीः। तत्र च तेनापि कर्मरेखेण रत्नचन्द्र इति स्वनाम प्रकाशितं। एकदा स श्रीदत्ताज्ञया यानपात्रेणाऽब्धौ जगाम। तत्रोपार्जितभूरिवित्तो वर्त्मनि समागच्छन् भग्ने प्रवहणेऽम्भोनिधौ निपतितो गिलितश्च मीनेन महता। तटे पतितस्य तस्य मीनस्योदरं विदार्य धीवरैर्गृहीत्वा स भृगुपुरपतये प्राभृतीचक्रे। तेनाप्यपुत्रेण राज्ञा पुत्रत्वेन रक्षितः, परिणायितश्च कुण्डनपुरेशसुतां। इतश्च रिपुमर्दनेन तेन राज्ञा भाविन्याः स्वसुतायाः स्वयंवरमण्डपमहोत्सवे बहवो राजानो राजपुत्रा मन्त्रिणो मन्त्रिपुत्राः श्रेष्ठिनः श्रेष्ठिपुत्राः सार्थपाश्च समाहूताः। तदा च भृगुपुरस्वामिनः सूनुः रत्नचन्द्रश्चतुरंगिण्या सेनया परिवृतः स्वयंवरमण्डपमलंचकार। क्रमेण सकलराजमण्डलमतिक्रम्य रोहिण्या शशीव तया भाविन्या स एव वृतः। रिपुमर्दनराज्ञाऽपि करितुरङ्गादिकं दत्त्वा विसृष्टः। स तां

भाविनीमादाय स्वपुरमाययौ । अथैकस्मिन्नहनि सुवर्णस्थाले स्वर्णोज्ज्यमिव रम्यमन्नं भुञ्जानस्यास्य वायुप्रेरितान् रेणून् पततो विलोक्य तालवृन्तपाणिः पुरःस्थिता भाविनी तद्भोजनं चीवराञ्चलेन सद्यः पिधत्ते स्म । तन्निरीक्ष्य रत्नचन्द्रो दध्यौ—"एकः सोऽवसरो यत्राहमनया शूलायामारोपितः, एकश्चायमवसरो यत्रैषैवं वेत्ति मम प्राणपतेरस्य शरीरे पांशुस्पर्शोऽपि मा भूत् इति विस्मयं मन्यमानः स ईषत्स्मितं विधत्ते स्म । तत्स्मितं विलोक्य निपुणा सा चकिता दध्यौ—"स्मितं तु मादृशां मृगीदृशां घटते न त्वेतादृशां पुंसां कारणं विना" । ततः सा स्मितकारणं तमपृच्छत् । कान्ताकठोरतरकदाग्रहपतितः सोऽवदत्—"हे तन्वङ्गि ! मामुपलक्षयसि ?" । अथ साऽवोचत्—"त्वं प्राणपतिरहं च तव प्रेयसी" । "हे सुभ्रूः ! अयं संबन्धो विश्वेऽस्मिन् प्रसिद्धः, परमन्यः कोऽपि संबन्धोऽस्ति । हे मृगाक्षि ! यदहं स कर्मरेखाख्यो धनदत्तश्रेष्ठिसुतः । सा च त्वं भाविनीति" । पूर्वजातमन्यदपि रहस्यं तदुक्तं श्रुत्वा सा प्रकामं त्रपाधोमुखी जाता । अथैनां प्रेमवचनैराश्वास्य सोऽवक्—

त्रपायाः पद्मपत्राक्षि तन्नास्त्यवसरोऽधुना । लोकोक्तिरपि यद्विप्रैर्नातीता वाच्यते तिथिः ॥ १ ॥

तथा हे कृशोदरि ! कर्मणां गहना गतिः । तेन पुरातनप्रौढपण्डितैर्देवाधिदेवान् विमुच्य कर्मभ्य एव नमस्कारश्चक्रे । यतः—

ब्रह्मा येन कुलालवन्नियमितो ब्रह्माण्डभाण्डोदरे, विष्णुर्येन दशावतारगहने क्षिप्तो महासङ्कटे ।
रुद्रो येन कपालपाणिपुटके भिक्षाटनं कारितः, सूर्यो भ्राम्यति नित्यमेव गगने तस्मै नमः कर्मणे ॥१॥

ततः सा त्रपां मुक्त्वा पित्रोरेनं वृत्तान्तमभिधाय पतिं सेवते। अथ कर्मरेखकुमारनृपो गुरूपान्ते देशनां श्रुत्वा दध्यौ—"कर्मणां फलमत्रैव मयाऽध्यक्षं दृष्टं, अतो गुरुवाक्यं प्रमाणं"। अथ तज्जयार्थं प्रान्ते प्रव्रज्य सुगतिभाग् बभूव दुस्तपतपसा।

दैवाधीनं वृथा कार्यं विधातुं शक्नुवन्ति के ?। कर्मत एव सङ्गोऽभूद्भाविनीकर्मरेखयोः ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ षोडशस्तम्भे एकत्रिंशदधिकशततमं २३१ व्याख्यानम् ॥



## ॥ व्याख्यानं ॥ २३२ ॥

अथ पञ्चकारणसमुदाये सत्येव कार्यं स्यादित्याह—

कालादिपञ्चहेतूनां समवायो यदा भवेत्। तदा कार्यस्य निष्पत्तिः स्यात् क्षुल्लककुमारवत् ॥ १ ॥

स्पष्टः। भावार्थस्तु संबन्धेन श्राव्यः। साकेतनपुरे पुण्डरीको नृपः, कण्डरीको लघुभ्राता युवराजः, तस्य यशोभद्राह्वाऽतीव सुरूपा भार्याऽस्ति। तां वीक्ष्य कामरागमग्नः पुण्डरीको दास्यास्येन स्वेप्सितं जगौ। तयोचे—"हे पूज्य! त्वं प्रजानाथोऽसि, न्यायाध्वनः स्खलनं तव नार्हं"। स उवाच—"हे स्त्रि! "ना ना" इति शब्दोच्चारणं स्त्रीणां स्वभावोऽस्ति, परमत्र हे कृशाङ्गि! परिहासं विमुच्य मां पतित्वेन

व्रज"। तयोक्तं—"कुलमर्यादां धर्ममर्यादां च नाहं मुञ्चे, त्वमिदं दुष्टं वदन् किं न लज्जसे ?"। नृपो दध्यौ—"यावन्मे बन्धुर्जीवति तावन्मां न समीहते एषा, तेन घात्योऽयं मयेति" ध्यात्वा छलं कृत्वा विनाशितः। यतः—

त्रपावरत्रया बद्धास्तावत्तिष्ठन्ति जन्तवः। अविवेकबलं यावन्न कामरसनिर्मितम् ॥ १ ॥

ततः सा दध्यौ—"नूनं येन सोदरो हतः स मम शीलभङ्गमपि करोति, अतोऽन्यत्र देशे व्रजामि"। इति ध्यात्वाऽऽपन्नसत्त्वा सा छन्नं निर्गता। शीलरक्षाक्षमां दीक्षां मत्वा तया दीक्षाऽऽददे। ततो गर्भे प्रौढीप्राप्तं वीक्ष्य सर्वैः पृष्टा यथाजातमुवाच। ततः श्राद्धैर्यथा शासनोड्डाहो न स्यात्तथा रक्षिता। पुत्रो जातः। श्राद्धगृहे वर्धते। क्षुल्लककुमार इति नाम दत्तं। अष्टवर्षान्ते स बालो दीक्षितः। इतश्चारित्रावरणे तस्योदिते विषयवासना चित्ते जाता। मातरं प्राह—"हे मातः! विषयसौख्यं प्रेक्ष्य पुनर्व्रतं चरिष्यामि"। "हे वत्स! संयमसौख्यं मुक्त्वा किं तुच्छे विषये मनोरागं करोषि? यदि तव व्रतेच्छा नास्ति तर्हि मद्वचसा द्वादश वर्षाणि तिष्ठ, जिनेशवाक्यं शृणु"। स तत्र नित्यं स्थितो मातृसाध्वीपार्श्वे वैराग्यवाणीमश्रृणोत्, परं न स्वान्ते वैराग्यमजनि। ततो द्वादशवर्षान्ते माताऽऽपृष्टा, साऽऽह—"त्वमस्मद्गुरुणीं महत्तरां साध्वीमापृच्छस्व"। स साध्वीपार्श्वे गत्वाऽऽपप्रच्छ। साध्वी प्राह—"हे वत्स! द्वादशवर्षाणि यावत् स्थित्वाऽस्मत्पार्श्वे देशनां शृणु"। तेनानेकसूत्रार्थाः श्रुतास्तथापि न किञ्चिद्बोधोऽजनत्। पूर्णप्रतिज्ञः स साध्वीमापप्रच्छ—"युष्मद्वचसा महता कष्टेन पीडितः स्थितः, अथाहं गच्छामि"।

साध्वी प्राह—"उपाध्यायगुरुमापृच्छय त्वं गच्छ"। ततः स उपाध्यायमापप्रच्छे। गुरुः प्राह—"त्वमत्रापि द्वादश वर्षाणि तिष्ठ"। ततः स स्थितः, तद्देशनातो न बोधं गतः, गमनं ययाचे। गुरुणोक्तं—"त्वं गच्छाधिपसूरिपार्श्वे गच्छ, स्वाकूतं निवेदय"। तेन तथा कृते सूरिः प्राह—"हे जड! द्वादश वर्षाणि तिष्ठ"। तत्राप्यनेकदेशनाः श्रुताः। जनन्याद्युपरोधतोऽष्टचत्वारिंशद्वर्षाणि यावद्दीक्षां पालयन्नपि न विषयविमुखोऽभूत्। पूर्णप्रतिज्ञः सूरिं प्राह—"स्वामिन्! अहं गच्छामि"। सूरिस्तु सावद्यत्वान्मौनं चकार। ततः स्वयं गच्छतस्तस्य मात्रा पूर्वानीतं रत्नकम्बलं मुद्रारत्नं चार्पितं। स सर्वसंयमं मुक्त्वा साकेतपुरेशपर्षदि गतः। तत्र नट्या नाटकं प्रारब्धं, तेन व्यग्रमानसाः सर्वे मुहुर्मुहुः साधु साध्विति तामुच्चैः प्रशशंसुः। सोऽपि प्रेक्ष्य लीनोऽभूत्। इतश्चिरनृत्येन खेदितां तां नर्तकीं निशान्ते निद्रायमाणां घूर्णितनेत्रां वीक्ष्याक्का सङ्गीतालापेन ज्ञापितवती, तथाहि—

सुट्ठु गाइयं सुट्ठु वाइअं सुट्ठु नच्चियं सामसुंदरि।
अणुपालिय दीहराइयं उसुमिणंते मा पमायए॥ १॥

इति श्रुत्वा नर्तकी भूयः सावधानाऽभूत्। क्षुल्लकस्तां गाथां श्रुत्वा बुद्धः पारितोषिकं स्वरत्नकम्बलं तस्यै ददौ। ततो नृपपुत्रेण मणिकुण्डलं तस्यै दत्तं, मन्त्रिणा मुद्रारत्नं, चिरकालप्रोषितकान्तया सार्थवाहस्त्रिया हारो दत्तः, राज्ञो हस्तिपकेनाङ्कुशरत्नं च ददे। सर्वाणि लक्षलक्षमूल्यानि नर्तिक्या लब्धानि। ततो राज्ञा तुष्टिदानस्य निदानं सर्वे पृष्टाः। तत्रादौ क्षुल्लकेनोक्तं—"हे नृप! त्वदनुजसुतोऽहं चिरं

पष्टिवर्षाणि व्रतं प्रपाल्य विषयमना राज्यार्थं त्वद्गृहे प्राप । एतद्गाथार्थं विचिन्त्य प्रमादकरणं नार्हमिति बाधकगीतमपि साधकत्वेन मम परिणतं, पूर्वं साधकं गुरुवचनमपि न साधकत्वेन जातं, अतो दीक्षानिश्चलोऽहं जातः । इत्थं महोपकारिण्यै प्राग्दानं मया दत्तं । चेत्त्वदनुजसुतं मां न वेत्सि तदा संदेहच्छेदिकामिमां नाममुद्रां पश्य" । ततो राज्ञोक्तं—"गृहाणेदं राज्यं" । स प्राह—"राज्यादिगृद्धमोहचरटस्तु मदात्मप्रदेशाद्दूरं गतः, अधुनाऽहं राज्येन किं करोमि ? " । ततो राजपुत्रः प्राह—"हे तात ! राज्यलोभेनाहमद्य श्वो वा त्वां हन्तुकामो विपादिभिरभूवं, इमां गाथां श्रुत्वा ध्यातं—"अयं वृद्धोऽस्ति, शेषमायुरस्य पितुः स्तोकं, अतो न हनिष्यामि, तेन तुष्टो दानमददाम्" । ततो मन्त्री प्राह—"हे देव ! शत्रुभिर्भेदितोऽस्मि परमिमां श्रुत्वा पापतो निवृत्तः" । ततः प्रोषितपतिकाऽऽह—"हे विभो ! अद्य श्वो वा परं प्रति रिरंसुरभूवं, पतिविरहेण द्वादश वर्षाणि गतानि, इमां श्रुत्वा चिरपालितं सतीत्वं न मोचनार्हमिति ज्ञातवती" । हस्तिपकः प्राह—"तवारिभिर्भेदितोऽस्मि, परमिमां श्रुत्वा प्रबुद्धः" । इति श्रुत्वा सर्वेऽपि प्रमुदिताः । ततो राजादयः सर्वेऽपि क्षुल्लकेन सह दीक्षां जगृहुः । क्रमेण स्वर्गादिकं प्रापुः ॥

संविग्नसाध्व्यादिमुखोद्भवां शुभां, श्रुत्वाऽपि वाणीं न सुबोधमाप्तवान् ।
संप्राप्य कालादिकहेतुतत्त्वतां ( पञ्चकं ), सद्यः सुवैराग्यगुणं ततान सः ॥ १ ॥

॥ इत्यब्ददिनपरिमितहितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रंथस्य वृत्तौ षोडशस्तम्भे द्वात्रिंशदधिकद्विशततमं २३२ व्याख्यानम् ॥

## ॥ व्याख्यानम् ॥ २३३ ॥

अथ सद्गुणचिन्तनं दुर्लभमित्याह—

कुर्यात् सफलं तस्य जीवितम् ॥ १ ॥

दुष्प्राप्यं मानुषं जन्म दुर्लभं भवकोटिभिः । धर्मशर्मकरं कुर्यात् सफलं तस्य जीवितम् ॥ १ ॥

दुष्प्रापं प्राप्य मानुष्यं कार्यं तत् किञ्चिदुत्तमैः । मुहूर्त्तमेकमप्यस्य नैव याति यथा वृथा ॥ २ ॥

स्पष्टौ । अत्रार्थसमर्थनार्थं ज्ञातं चेदं—पुरा प्रतिष्ठानपुरे कश्चिद्धनवान् श्रेष्ठी मुहूर्त्तयामादिकालं सर्वं धर्मक्रियादानादिधर्मं विना वृथा गमयति । अन्यदाऽऽर्त्तध्यानेन मृत्वा तत्पुरसमीपे सरसि मत्स्यो जातः । अथ पूर्वभवे शालिवाहननृपजीवश्रेष्ठी तत्रैव सरःपाल्यां सुपात्रदानं ददाति । यतः—

धर्मकीर्तिविहीनस्य जीवितेन नरस्य किम् । यो धर्मकीर्तिमान् दानी तस्य जीवितमुच्यते ॥ १ ॥

अथ तत्रैव सरःपालीमूले मुनिदानं प्रयच्छन्तं तं दृष्ट्वा तस्य पूर्वोक्तमत्स्यस्य जातिस्मरणं जज्ञे । स वणिग्जीवो मुनिदानप्रभावेण प्रतिष्ठानपुरे शालिवाहननृपो जातः । एकदा नृपो राजपाटिकां भ्रमन् तस्य सरसस्तीरे वृक्षच्छायायां स्थितवान् । महामत्स्येन तेन दृष्टो महासमृद्धिमान् । पाश्चात्यदानफलं ज्ञात्वा लोकप्रबोधाय महामत्स्यो मनुजभाषया एवं वदति—

को जीवति को जीवति को जीवति वदति वारिमध्यस्थः ।

मत्स्यः प्रबोधविधये लोकानां ललितविज्ञानाम् ॥ १ ॥

एतन्मत्स्यवाक्यं श्रुत्वा नृपादिसर्वलोकानां महदाश्चर्यं जातं । राजा स्वपण्डितपार्श्वे तन्मत्स्यवचनस्वरूपं पृच्छति स्म, परं चेतश्चमत्कारं कोऽपि न वदति स्म । पश्चाच्छ्रीकालिकाचार्यैस्तन्मत्स्यमनोगतभावं ज्ञात्वा नृपाग्रे एवमुक्तं—

को जीवति गुणा यस्य यस्य धर्मः स जीवति । गुणधर्मविहीनस्य निष्फलं तस्य जीवितम् ॥ १ ॥

यस्मिञ्जीवति जीवन्ति सज्जना मुनयस्तथा । सदा परोपकारी च स जातः स च जीवति ॥ २ ॥

पञ्चमेऽहनि षष्ठे वा भुङ्क्तेऽनवद्यमेव यः । धर्मार्थी चाप्रमादी च स वारिचर जीवति ॥ ३ ॥

आचार्यैः प्रथमे श्लोके पठिते सति मत्स्यो द्विवारं को जीवति को जीवतीति कथयति । द्वितीये श्लोके पठिते एकवारं को जीवतीति कथयति । तृतीये श्लोके पठिते सुखेन मौनमाधाय स्थितः । अथ नृपः सूरीन् स्माह—"स्वामिन् ! जलचरजीवोऽपि धर्मकरणसमीहां करोति, अहो ! महदद्भुतं" । सूरिः प्राह—"धर्मगुणहीननृभवस्तु सर्वेभ्योऽपि हीनतर एव । अत्रार्थे शृणु विद्वद्वाक्यविलासं कविपठनं च—

येषां न विद्या न तपो न दानं, न चापि शीलं न गुणो न धर्मः ।
ते मर्त्यलोके भुवि भारभूता, मनुष्यरूपेण मृगाश्चरन्ति ॥ १ ॥

इति विद्वज्जनमुखेभ्यो निशम्य गर्वपूर्वकं कुरङ्गोऽवोचत्—मम निकृष्टनरोपमया कथमुपमीयते ? अनेकगुणान्वितोऽहं, यतः—

गीते शीर्षं जने मांसं त्वचं च ब्रह्मचारिणे । शृङ्गे योगीश्वरे दद्मि ह्यदं स्त्रीषु सुलोचने ॥ १ ॥

दूर्वाङ्कुरतृणाहारा धन्यास्ते च वने मृगाः । विभवोन्मत्तमूर्खाणां न पश्यन्ति मुखानि यत् ॥ २ ॥

अयि कुरङ्गक विक्रमसे कथं, त्यज वनं गमनं कुरु सत्वरम् ।
इह वने हि वनेचरनायकाः, सुरभिलोहितलोहितसायकाः ॥ ३ ॥

वसन्त्यरण्येषु चरन्ति दूर्वां, पिबन्ति तोयान्यपरिग्रहाणि ।
तथाऽपि वध्या हरिणा नराणां, को मूर्खमाराधयितुं समर्थः ॥ ४ ॥

इत्यतो ममैवं निर्गुणनरोपमानं न युक्तं । ततः पुनरपि सूरिणाऽभिहितम्—( त्रयः पादास्त एव, चतुर्थस्तु ) "मनुष्यरूपाः पशवश्चरन्ति" । इत्याकर्ण्य गौराह—

तृणमश्नि दुग्धं धवलं, छगणं गेहस्य मण्डनं भवति । रोगापहारि मूत्रं, पुच्छं सुरकोटिसंस्थानम् ॥ १ ॥

सण्ढोऽप्याह—

नास्य भारग्रहे शक्तिर्न च वाहगुणः कृपा । देवागारबलीवर्दस्तथाऽप्यश्नाति भोजनम् ॥ १ ॥

गुरुशकटधुरन्धरस्तृणाशी, समविषमेषु च लाङ्गलापकर्षी ।
जगदुपकरणं पवित्रयोनि—र्नरपशुना कथमुपमीयते गवेन्द्रः ॥ २ ॥

तेनैतदप्युपमानं न योग्यं । ततोऽन्येनोक्तं—"मनुष्यरूपेण तृणोपमानाः" । इति श्रुत्वा तृणजातिराह—

गवि दुग्धकरं ( गधं रणे ) ग्रीष्मे वर्षाहेमन्तयोरपि ।
नृणां त्राणमहं कुर्वे तत्साम्यं च कथं मम ॥ १ ॥

रूढस्य सिन्धुतटमनुगतस्य तृणस्यापि जन्म कल्याणम् ।
यत्सलिलमज्जदाकुलजनहस्तावलम्बनं भवति ॥ २ ॥

समराङ्गणे तृणे मुखे धृते न कोऽपि तं हन्ति ।
यस्यैवाहारयोगाज्जगति सुरभयोऽजान्विता वा महिष्यः,
सर्वाः संप्राप्तभूयोवपुरुपचितिका आद्यदध्नोर्निदानम् ।
क्षीरं लोकाय दद्युः सकलरसमहायोनिभूतं तृणं त-
ज्ज्ञानेऽजानन्त एते धिगखिलकवयो नीरसं वर्णयन्ति ॥ ३ ॥

इति तृणेनोक्तेऽन्यः कविः स्माह—"मनुष्यरूपेण तरूपमानाः" । तरवः प्राहुः—

छायां कुर्मो वयं लोके फलपुष्पाणि दद्महे । पक्षिणां सर्वदाधारगृहादीनां च हेतवे ॥ १ ॥

पुनः शास्त्रयुक्तिकराः प्राहुः—

छायामन्यस्य कुर्वन्ति स्वयं तिष्ठन्ति चातपे । फलन्ति च परार्थे हि नात्महेतोर्महाद्रुमाः ॥ १ ॥

भीष्मग्रीष्मखरांशुतापमसमं वर्षाम्बुतापक्लमं, भेदच्छेदमुखं कदर्थनमलं मर्त्यादिभिर्निर्मितम् ।
सर्वग्रासिदवानलप्रसृमरज्वालोत्करालिङ्गनं, हंहो वृक्ष सहस्व जैनमुनिवद्यत्त्वं क्षमैकाश्रयः ॥ २ ॥

पुनः कविः प्राह—"मनुष्यरूपेण हि धूलिपुञ्जाः" । इति श्रुत्वा रेणुराह—

---

१ "भवन्ति वृक्षाः" इत्यपि पाठः. २ प्रमुखं.

कारयामि शिशुक्रीडां पङ्कनाशं करोमि च । मत्तोऽजनि रजःपर्व शीर्षे क्षिप्तं फलप्रदम् ॥ १ ॥

धूलिर्मूलपदार्थसार्थजननी स्तम्भाद्यवष्टम्भदा
लेखालेख्यकरी करीश्वरकरासङ्गिन्यवश्यं प्रिया ।
अग्रेगन्धमथो ( दुर्गन्धस्य हरी ) शिशोः सुखकरी कालत्रयेऽपि स्थिरा,
तस्माद्धूलिसमं न चास्ति किमपि क्षेप्या मुखे पापिनाम् ॥ १ ॥

पुनरप्यन्यविदुरेणोक्तं—"मनुष्यरूपा श्वपशुस्वरूपाः" । तच्छ्रुत्वा शुनोक्तं—

स्वामिभक्तः सुचैतन्यः स्वल्पनिद्रः सदोद्यमी । अल्पसंतोषवान् शूरस्तस्मान्मत्तुल्यता कथम् ॥ १ ॥

अयोध्यायां गोविन्दचन्द्रस्य मित्रमानन्दोऽतीव पापीयान् लोकपीडनपरो नृपेण मारितः, उत्करडके क्षिप्तः । तत्र श्वद्वयं भक्षणाय लग्नं । तत्र वृद्धो विज्ञः श्वा लघुं वदति यथा "मा भक्षय, यतः—

हस्तौ दानविवर्जितौ श्रुतिपुटौ सत्यं वचो द्रोहिणौ,
चक्षुः साधुविलोकनेन रहितं पादौ न तीर्थाध्वगौ ।
लज्जालुण्टितद्रव्यपूर्णमुदरं गर्वेण तुङ्गं शिरो,
भ्रातः कुर्कुर मुञ्च मुञ्च सहसा निन्द्यं वपुः सर्वदा ॥ १ ॥

इत्यादिपरीक्षादक्षः श्वा कथं निर्गुणनरतुल्यः स्यात् ? इति । ततः प्रवीणेनोक्तं—"मनुष्यरूपेण खराः स्फुरन्ति" । इति श्रुत्वा खरः प्राह—

शीतोष्णं नैव जानामि भारं सर्वं वहामि च । तृणभक्षणसंतुष्टः प्रत्यहं भद्रकाकृतिः ॥ १ ॥

पुनर्विदुषाऽभिहितं—"मनुष्यरूपेण भवन्ति काकाः" । तच्छ्रुत्वा काकः प्राह—

प्रियं दूरं गतं गेहे प्राप्तं जानामि तत्क्षणात् । न विश्वसा ( सि ) मि कस्यापि काले चालयकारकः ॥

अत्रस्थः सखि लक्षयोजनगतस्यापि प्रियस्यागमं,
वेत्त्याख्याति च धिक् शुकादय इमे सर्वे पठन्तः शठाः ।
मत्कान्तस्य वियोगतापदहनज्वालावलीचन्दनं,
काकस्तेन गुणेन काञ्चनमये व्यापारितः पञ्जरे ॥ १ ॥

पुनः कविभिर्निर्वर्णितं—"मनुष्यरूपेण हि ताम्रचूडाः" । कुर्कुटः स्वगुणान् स्माह—

भो लोकाः सुकृतोद्यता भवत तं लब्ध्वा भवं मानुषं,
मोहान्धाः प्रसरत्प्रमादवशतो मा हारयध्वं मुधा ।
इत्थं सर्वजनप्रबोधमधुरो यामेऽर्धयामे सदा,
कृत्वोर्ध्वं निजकन्धरं प्रतिदिनं कोकूयते कुर्कुटः ॥ १ ॥

कौ भूमौ कृतं कु नाम कुत्सितं तेनाहं पक्षी जातः, अतोऽहं बोधयामि प्रभाते कुकरुकु इतिभाषया, अतो निर्गुणनरतुल्योऽहं कथं ? इति । पुनर्बुद्धिमताऽऽख्यातं—"मनुष्यरूपेण भवन्ति चोष्ट्राः" । तद्गुणमाह—

करभस्याशुगत्यैव छादिता दोषसन्ततिः ॥ १ ॥
वपुर्विषमसंस्थानं कर्णज्वरकरो रवः । अन्यकविनोक्तं—"मनुष्यरूपेण च भस्मतुल्याः" ।
एकेनैव गुणेन राजमान्योऽस्मि चन्दनवत् ।
तच्छ्रुत्वा भस्मोवाच—
मुकुटमध्ये क्षिप्ता करोम्यहं सकलधान्यरक्षां लाक् ।
मानं ददते मनुजा मुखशुद्धिकरी सुगन्धा च ॥ १ ॥
ततः पुनः पाणिकृत्यकलाकलापं स्माह—"मनुष्यरूपाः खलु मक्षिकाः स्युः" । इत्याकर्ण्य मक्षिका प्राह—
सर्वेषां हस्तयुक्त्याहं बोधयामि निरन्तरम् । ये धर्मं नो करिष्यन्ति ते हस्तौ घर्षयन्ति वै ॥ १ ॥
किंच श्रीभोजनृपेणान्यदा विद्वांसः पृष्टाः—मक्षिका अग्रगतौ हस्तौ कथं घर्षयन्ति? तदा सद्भिः प्रोक्तं—
देयं भोज धनं घनं सुविधिना नो संचितव्यं कदा ( सदा ),
श्रीकर्णस्य बलेश्च विक्रमनृपस्याद्यापि कीर्तिर्यतः ।
अस्माकं मधु दानभोगरहितं नष्टं चिरात्सञ्चितम् ॥ १ ॥
येनेदं बहु पाणिपादयुगलं घृष्यन्ति भो मक्षिका,
इत्याद्यनेकयुक्तिभिः श्रीकालिकाचार्येण प्रतिबोधिताः शालिवाहनक्ष्मापादयो लोका दानशीलादिधर्म-
तत्परा बभूवुः इति ॥

सर्वेषु जीवेषु नरत्व ( त्वं ) दुर्लभं, तत्रापि धर्मोत्तमगुणाब्धि ( र्हि ) र्लभ्ना ।
श्रीश्यामसूर्याहितयुक्तिभिर्नृपो, विज्ञाय दानादिगुणान् दधन् वभौ ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ षोडश-
स्तम्भे त्रयस्त्रिंशदधिकद्विशततमं २३३ व्याख्यानम् ॥

## ॥ व्याख्यानम् ॥ २३४ ॥

अथान्यभावेन वन्दनं न फलदं स्यादित्याह—

बाह्याचारोऽस्ति ( हि ) द्रव्यस्य वन्दनं च प्रकीर्तितम् । तन्न प्रमाणमायाति सफलं भाववन्दनम् ॥१॥

स्पष्टः । अत्रार्थसमर्थनार्थं ज्ञातं चेदं—एकस्य राज्ञः पुत्रः शीतलनामा बाल्यतो वैराग्यवान् एकदा श्रीगुरुधर्मदेशनां श्रुत्वा बुद्धः । तथाहि—कोपि तापसः प्रतिमासक्षपणपारणके निमन्त्रितः पुरमध्ये पारणकं करोति, परं पुरमध्ये स्त्रीमुखं नावलोकते, कम्बाधरैरग्रे आगच्छन्त्यः स्त्रियोऽपसार्यन्ते । एवं स्त्रीणां विडम्बनां श्रुत्वा काऽपि वेश्या "अहो कपटपाटवं ! अहो लोकरञ्जनाविष्करणाय कियान् दम्भः ! " इति मन्यमाना तद्बोधनाय मनो दधौ । अन्यदा नृपगृहे पारणकाय गच्छन् सुखासनस्थो मार्गे आगच्छति तावता साऽग्र आगता वेत्रिभिर्वार्यमाणापि नापसरत् । पार्श्वे एत्य तस्य तापसस्य मस्तके चुम्बकं

दत्तवती । रुष्टस्तापसस्तां क्रोधदृष्ट्या विलोकयन्नन्तर्बुरुबुरायमानो मुखेन "हरे हरे विष्णो विष्णो" इति जल्पन् स्नानार्थं पश्चाद्वलितः वेश्याया दर्शने स्नानमिति कृत्वा । राज्ञा ज्ञातं । साऽऽकारिता पृष्टा च । तया तापसमाकार्य तत्पार्श्वे उक्तं—

आंख्य म मींचि ज मींच मन, नयण निहालि जोय । अप्पइ अप्पा जोइइं, अवर न बीजो कोइ ॥१॥

तच्छ्रुत्वा तापसो बोधितः । लोकैरपि मानितं । इत्यात्मदमनमेव धर्मः श्रेष्ठः । इत्याद्युपदेशैः प्रबुद्धः शीतलकुमारो दीक्षां द्विधा शिक्षां च जग्राह । तस्य भगिनी गुणवती पृथ्वीपुरेशप्रियंकरनृपाय परिणायिता । तस्याश्चत्वारस्तनया अभूवन् । तेषां पुरः प्रत्यहं शयने भोजने उत्थाने स्थित्यादिषु चासकृत्स्वबान्धवमुनिवर्णनं स्वसा करोति—"विश्वे युष्माकं मातुलो धन्यो येन तपोधनत्वं स्वीकृतं" । ततस्ते चत्वारोऽपि निर्विण्णाः कामभोगेभ्यस्तथाभूतस्थविरान्तिके प्रव्रजिता बहुश्रुता जाताः । ततस्ते चत्वार आचार्यमापृच्छ्य मातुलमुनिवन्दनार्थमागच्छन्ति । मातुलपदपावितपुरासन्नं गत्वा विकाले जाते तत्रैव स्थिताः । नगरं प्रविशत एकस्य श्राद्धस्य तैरुक्तं—"त्वया भो वाच्यं शीतलाचार्याणां युष्मद्भागिनेयाः प्रव्रजिता आगता विकालत्वान्न प्रविष्टाः" । इति तेनोक्ते हृष्टाः सूरयः । चतुर्णामपि रात्रौ तत्र शुभाध्यवसायात्केवलज्ञानमुत्पन्नं । प्रातराचार्या मार्गं विलोकन्ते, दिगवलोकनं वारं वारं कुर्वन्ति । ततोऽचिरेण स्वयमेवोत्थाय सूरयो देवकुलमागताः । ते तु वीतरागत्वाभ्युत्थानादिकमकुर्वन् । तत आचार्या गमनागमनमालोच्य प्राहुः—"केभ्यो नमामि वन्दामि" ? तेऽप्यूचुः—"यथा युष्मत्समीहा" । सूरिर्दध्यौ—

"अहो शिष्या ! धृष्टा न लज्जन्ति"। तथापि रोषेण चतुर्णामपि वन्दनं करोति कृतिकर्मणा। केवलिनस्तु कषायकण्डकैः षट्स्थानस्थितं कीरं वन्दमानं पश्यन्ति, तदनु ज्ञानिनः प्राहुः—"युष्माभिः कषायकण्डकवर्धमानेन द्रव्यवन्दनेन वयं वन्दिताः, इदानीं भाववन्दनेन वन्दध्वं"। सूरिः प्राह—"कथं द्रव्यवन्दनं भाववन्दनं च वित्थ ? कथं कषायकण्डकान्युपलक्षितानि ? किमतिशयोऽस्ति ?"। ओमित्युक्तं तैः। "किं छाद्मस्थिको वा कैवलिको वा ?"। त ऊचुः—"कैवलिकः साद्यपर्यवसितभङ्गकः"। इति श्रुत्वा विकसितरोमाञ्चकूपः सूरिर्दध्यौ—"अहो मया मन्दभाग्येन सर्वज्ञसर्वदर्शिनामाशातना कृता" इति संवेगमागतः तैरेव कण्डकस्थानैः पश्चादपसृतः यावदपूर्वकरणे प्रविष्टः केवलज्ञानमुत्पादयामासेति। अत्र वन्दनकविधिश्चायं, यतः श्रीवन्दनकभाष्ये—

पण नाम ५ पणाहरणा ५ अजुग्गा पण ५ जुग्ग पण ५ चउ ४ अदाया।
चउ ४ दाया पण ५ निसेहा चउ ४ अणिसेह ऽ८ ८ कारणया ॥ १ ॥
आवस्सय २५ मुहणंतय २५ तणुपेहपणिस २५ दोस बत्तीसा ३२।
छगुण ६ गुरुठवण १ दुग्गह २ दुछविसरकर ( २२६ ) गुरुपणिसा ॥ २ ॥
पय अरूवन्न ५८ छगाणा ६ छगुरुवयणा ६ आसायणतित्तीसं ३३।
दुविही २ दुवीस २२ दारेहिं चउसया बाणउइ ४९२ ठाणा ॥ ३ ॥

अत्र चतुःशतीद्विनवतिस्थानविशुद्धवन्दनं कार्यं। वन्दनकपञ्चनामानीमानि—

वंदणयं १ चिइकम्मं २ किइकम्मं ३ विणयकम्मं ४ पूअकम्मं ५ च ।
गुरुवंदणपणनामा दव्वे भावे दुहा हरणा ॥ १ ॥
सीयलय १ खुड्डए २ वीरकण्ह ३ सेवगदु ४ पालये संबे ५ ।
पंचे ए दिट्ठंता किइकम्मे दव्वभावेहिं नायव्वा ॥ २ ॥

शीतलाचार्यसंबन्धोऽनन्तरोक्तः १। क्षुल्लकसूरिर्गच्छभारोद्विग्न एकाकी वने गतः चम्पकाद्यावृतं शमीतरुं वीक्ष्य प्रबुद्धः प्रतिनिवृत्तः "बहुश्रुताश्चम्पकसदृशाः, अहं तु शमीतुल्यः, ते पूज्या मां वन्दन्ते" इति चितिकर्मसंबन्धः। इत्यादिपञ्चोदाहरणानि श्रुतमञ्जूषातो ज्ञेयानीति ॥

प्रवर्धमानैर्हि कषायकण्डकै-र्या वन्दना शीतलवन्निरर्थका ।
भावेन निष्पादितवन्दनां ददौ, कैवल्यभाक्शीतलसूरिपुङ्गवः ॥ १ ॥

॥ इत्यब्ददिनपरिमितहितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ षोडश-
स्तम्भे चतुस्त्रिंशदधिकद्विशततमं २३४ व्याख्यानम् ॥

॥ व्याख्यानम् ॥ २३५ ॥

अथ ज्ञानयुक्तक्रियायाः साफल्यमाह—

ज्ञानविज्ञानसंयुक्ता या क्रिया हि विधीयते। साऽवश्यं फलदा पुंसां, भान्यामुक्तमतः शिवम् ॥ १ ॥

स्पष्टः । भावार्थस्तु दृष्टान्तेन विज्ञेयः—श्रीनिर्ग्रन्थगच्छे एको धर्मबुद्धिनामा लघुशिष्यो ज्ञानं–शास्त्राध्ययनं तत्संयुक्तः, परं हेयज्ञेयोपादेयोत्सर्गापवादरूपतया यथाऽर्थस्थापनं (विज्ञानं) तद्विरहितोऽभूत् । तेन धर्मबुद्धिना चतुर्मासके "गुरु (ग्लान) वैयावृत्त्यं मया कार्यं" इत्यभिग्रहो गृहीतः । तस्मिंस्तु चतुर्मासके कोऽपि साधुर्मन्दो (ग्लानो) नाभूत्, तेन वैयावृत्त्यं न जातं । ततः खेदात्स चिन्तयति—"अन्येषामभिग्रहाः संपूर्णा जाता मम तु न" इति मनसा चिन्तयाऽपि पापं । तद्वार्तां गुरूणां स्माह—"हे स्वामिन् ! हहा ! अस्मिंश्चतुर्मासके न कोऽपि ग्लानोऽभूत्, तेनाहं शोचामि" । गुरुराह—"सर्वासु क्रियासु ज्ञानविज्ञानं महाफलदं । शृणु अत्र लौकिकसंबन्धं—केनापि व्यवहारिणा केचित्क्षत्रिया गृहमध्ये भोजनायोपवेशिताः । तद्गृहधनिकेन सर्वसंग्रहशीलेन स्वगृहनिर्गतसर्पो घटे क्षिप्तो गृहान्तरुपरि विजने बद्धोऽस्ति । तं दृष्ट्वा तैरेव क्षत्रियैः सौवर्णाभरणभाजनमिति विमृश्य रात्रौ प्रविश्य स एव घटो गृहीतः । मुखमुद्घाट्यैकेन करः क्षिप्तः, सर्पेण दष्टो मृतस्तत्रैव पतितः, ज्ञानविज्ञानं विना दुःखं प्राप्तः । अत्रोपनयः—'पढमं नाणं तओ दया' इत्यादियुक्त्या दृष्टिप्रत्युपेक्षणादिक्रिया ज्ञानविज्ञानेनैव फलवतीति" । पुनर्गुरुः शिष्याय शिक्षां स्माह—

यादृशं तादृशं वापि पठितं न निरर्थकम् । यदा विज्ञानमभ्येति तदैव फलति ध्रुवम् ॥ १ ॥

यथा कश्चिन्नृपो नव्योक्तिश्रुतौ द्रम्मपञ्चशतीप्रदानं करोति । अन्येद्युर्मूर्खविप्रेण सरसः पार्श्वे बलीवर्दद्वये बद्धे सति मदोन्मत्तः शण्ढः पानीयं पिबन् पादेन भूमिं खनन् दृष्टः । पद्यमुत्पन्नं—

घसे घसे ने अतिघसे उपर घाली पाणी ।
जिणे कारणे घसे घसावे ते वात में जाणी ॥ १ ॥

मदीयबलीवर्दद्वयं हन्तुमिच्छति इति वार्ता ज्ञाता । ततो नृपाग्र इदमुक्तं । राज्ञा पञ्चशती द्रम्माणां समर्पिता । स हृष्टः स्वगृहे गतः । व्ययमसहमानैः प्रधानपुरुषैर्नृपसुतेन चामुं संबन्धं ज्ञात्वा नृपमारणाय नापितः प्रेषितः, तेन श्मश्रुसमारणमिषेण हनोरधः कण्ठे वाहनाय क्षुरे घृष्यमाणे सति राजा भित्तिस्थं स्वहस्तलिखितं तत्पद्यं वाचयति वेलाविर्गमनाय–घसे घसे० इति । तच्छ्रुत्वा नापितोऽर्थसामान्यात् "अहं ज्ञात" इति मत्वा नृपपादयोः पतित्वा "नाहं कुर्वे किंतु तव पुत्रः प्रधानाश्च" इति वदति । राज्ञा तत्स्वरूपं पृष्ट्वा नापितस्याभयं वितीर्य मौनं कारयित्वा तेषां तादृशीं शिक्षां ददौ । इति सामान्येनापि पद्येन राजा जीवितमापेति । अत्रोपनयः कार्यः—मुनिभिरपि यादृशं तादृशं वापि वाक्यं श्रुत्वा पठित्वा वा स्याद्वादक्रियामार्गे नेतव्यं, परं पठितं गुणकारकमेवेति ।

पुनर्हे शिष्य ! विद्याऽवश्यं ग्राह्या, तां विना कार्यकाले विलक्षो भवेत् । अत्रार्थे श्रृणु ज्ञातं—कोऽप्येकः पुमान्निर्भाग्यो द्रव्योपार्जनोपायान् कुर्वन् भूयो भूयो भूतले बभ्राम, न किञ्चिदपि प्राप । एकदैको विद्यासिद्धो नरः कुम्भपाणिः । स कुम्भमभ्यर्च्येत्यवादीत्—"हे कुम्भ ! शय्यासनभार्यादिसंयुक्तं

वासगृहं कुरु"। तेन कामकुम्भेन सर्वं निष्पादितं। प्रभाते तत्सर्वमपि सत्वरं संजहार। तत्सर्वं दृष्ट्वा स दुःस्थो दध्यौ—"किमन्येन निष्फलोद्यमेन ? एनं सिद्धं सेविष्ये"। तदनु बहुविधविनयेन प्रसन्नः सिद्ध ऊचे—"ब्रूहि, किं तव समीहितं ?"। तेन स्वदौःस्थ्यस्वरूपं प्रोक्तं। तदाकर्ण्य सिद्धो दध्यौ—

व्रतं सत्पुरुषाणां च दीनादीनामुपक्रिया। तदस्योपकृतिं कृत्वा करोमि सफलं जनुः ॥ १ ॥

ध्यात्वेति सिद्धविद्य ऊचे—"किं कुम्भं ददामि वा विद्यां वा ?"। इति निशम्य स भोगोत्सुको विद्यासाधनभीरुको "विद्याधिवासितं कुम्भमेव देहि" इत्युवाच। ततस्तस्मै सिद्धस्तं कामकुम्भं ददौ। ततो दुःस्थस्तूर्णं निजग्रामं ययौ। कुम्भमाहात्म्यात् वेश्मादिकामितं कृत्वा बन्ध्वादिभिः समं स्वच्छन्दं भोगान् बुभुजे। बान्धवादयः कृषिकर्म पशुरक्षां वाणिज्यादिकं च सर्वं मदान्धास्तत्यजुः। अन्यदा पीतासवः स्कन्धनिहितकुम्भः स ननर्त। उन्मत्तत्वेन तस्य करात् स कुम्भो विच्युतः सद्योऽभूच्छतधा भाग्यहीनस्येव मनोरथः।

कुम्भप्रभावप्रभवं भुवनं विभवादिकम्। ततो गन्धर्वनगरमिव तूर्णं तिरोदधे ॥ १ ॥
विद्यां विना तु कलशं तादृशं कर्तुमक्षमः। नित्यदौर्गत्यसांगत्यादत्यन्तं व्याकुलोऽभवत् ॥ २ ॥

अत्रार्थे उपनयः कार्यः—ज्ञानं विना सर्वक्रिया निरर्थका स्यात् ॥

यथा प्रज्ञावादनुपात्तविद्यः, स मन्दधीर्दुःखमिहैव लेभे ।
तथाङ्गिनोऽन्येऽपि लभन्ति तत्त्व-ज्ञानं विनाऽशुद्धक्रियामनेकधा ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ षोडशस्तम्भे पञ्चत्रिंशदुत्तरद्विशततमं २३५ व्याख्यानम् ॥

## व्याख्यानं २३६.

अथ नवनिदानस्वरूपमाह—

सन्ति नव निदानानि क्ष्मापः श्रेष्ठी नितम्बिनी । इत्यादीनि च हेयानि मोक्षाकाङ्क्षैर्मुनीश्वरैः ॥ १ ॥

स्पष्टः । नव निदानानि त्विमानि । उक्तं च पाक्षिकसूत्रवृत्तौ—

निवइ १ सिट्ठि २ इत्थि ३ पुरिसे ४ परपवियारे ५ सपवियारे ६ च ।
अप्पुसरे ७ दरिद्दे ८ सड्ढे ९ दुज्ञा नव नियाणा ॥ १ ॥

व्याख्या—कश्चित्साधुः साध्वी वा निदानं करोति—साक्षादेवा देवलोको वा न दृष्टः, इमे राजान एव देवाः,

१ "प्रमादात्" इति पाठः साधुः ।

ततो यद्यस्ति तपोऽनुष्ठानादीनां फलं ततो भवेयमागामिभवे राजाहं। ततो देवलोकं गत्वा तत्रोत्पद्यते, परं बोधिर्दुर्लभा तस्य प्राकृतनिदानस्य ब्रह्मदत्तचक्रिण इव १। श्रेष्ठ्यादिकुले वा भवेयमिति।

बहुचिंतो महीनाहो सुहिया धणिणो इमे। उग्गाणं च सुओ होहं नियाणं बिइयं इमं ॥ १ ॥

इति २। पुमान् बहुव्यापारसङ्ग्रामादिदुष्करकारी, ततः शोभनं स्त्रीत्वं, पञ्चाङ्गे प्रोक्तं—साध्व्या सुकुमालिकया स्त्रीत्वमर्थितं ३। नीचं स्त्रीजन्म, सर्वकार्यक्षमः पुरुषो भूयासं।

इत्थी सव्वे पराभूया पराहीणा य दुक्खिया। कोऽवि पत्थे नरो होहं नियाणं तु चउत्थयं ॥ १ ॥

इति ४। इमे मनुष्याणां कामभोगा अशुचिमूत्रपुरीषादिबीभत्साः, ये पुनरिमे देवा अन्यदेवं स्वान्यां देवीं वाऽऽत्मानमपि देवदेवीरूपं विकुर्व्य भुञ्जन्ति, अहमपि तथा भूयासं इति परप्रविचारं ५। येऽन्यदेवं देवीं वा न परिचरन्ति, किंत्वात्मानमेव देवदेवीरूपं विकुर्व्य परिचरन्ति तेषु भूयासं इति स्वप्रविचारं ६। निर्विण्णदिव्यमनुष्यकामभोगो यत्र न प्रविचारणा अल्पविकारदेवस्तत्राहं भूयासं, ततः स तादृशो भूत्वा च्युतो न देशविरतिं प्राप्नोति ७। निर्विण्णकामभोगो निदानं करोति—धनिनां प्रत्यहं राजदायादतस्करादिभ्यो महाभयं, अतोऽहमल्पारम्भे दारिद्र्यकुले भवेयं ८।

मुनिदानरओ सड्ढो हुज्जाहं इय, पत्थणा। न सव्वविरइं पावे नियाणं नवमं इमं ॥ १ ॥

शोभनं श्रावकत्वं यत्र द्वादश व्रतानि पाल्यन्ते तत्र भवेयमिति ९। इति निदानस्वरूपमवगम्य केचिन्नमिराजर्षिसदृशा देवेन्द्रैरनेकदेवादिसुखेन लोभिता अपि निदानं न चक्रुः। तथा श्रीवीरजिने-

न्द्रस्य सङ्गमनिष्पादितानुकूलोपसर्गसमये। तथा नन्दिषेणस्तु निदानं चक्रे, तेन वसुदेवत्वं प्राप। अथ कश्चित्सम्यक्त्वविहीनोऽपि तामलितापसवन्निदानं न करोति। तथाहि—

तामलिप्त्यां पुर्यां तामलिनामा श्रेष्ठी। सोऽन्यदा रात्रिजागरिकायां जातलौकिकवैराग्य एवं दध्यौ—"अहं पूर्वकृतकर्मणा पुत्रकलत्रधनधान्यराजमान्यादिभिर्विपुलं सौख्यं वेदयामि, आजन्म कदापि दुःखाङ्कितः श्वासोच्छ्वासोऽपि न विहितः। मयाधुना प्रभाते जाते आहारादिदानैः स्वजनान् संतोष्य ज्येष्ठसुते गृहसूत्रं संस्थाप्य तमापृच्छ्य दारुमयं काष्ठपात्रं कृत्वा दीक्षा गृह्यते, यावज्जीवं निरन्तरं षष्ठं तपो दधन्नूर्ध्वबाहुः सूर्याभिमुखन्यस्तदृष्टिः सन् तिष्ठामि। षष्ठपारणके तत्पात्रं समादाय तामलिप्तीपुर्यामुच्चनीचमध्यमकुलेष्वटन् भिक्षायाचनां करोमि। दाक्षिण्यव्यञ्जनादिरहितं कूरं भक्तं गृहीत्वा तद्भुक्तमेकविंशतिवारान् यावदुदकेन प्रक्षाल्य पश्चान्नीरसं मया भक्षणीयं"। इति विचिन्त्य प्रभाते निशाचिन्तितं सर्वं विधाय विहित[1]स्वोदरचतुर्विभागभिक्षाभाजनोऽव्यक्तलिङ्गं प्रणामप्रव्रज्यां च प्रतिपद्य तन्नगरीनद्युपकण्ठमाश्रयं(मं) चकार। तत इन्द्रं रुद्रं नृपं काकं श्वानं श्वपाकं च यं यं यत्र यत्र पश्यति तं तं प्रणमति। ततः षष्ठतपसः पारणके पुर्यां परिभ्रम्य तत्पात्रं भृत्वा भिक्षया लब्धभोजनस्य जलस्थलनभश्चरप्राणिनां भागत्रयं दत्त्वा चतुर्थभागेनैकविंशतिवारान् जलक्षालितेन तृप्तिं विदधाति। संतोषवृत्त्या चैवंरीत्या षष्टिसहस्रवर्षाणि यावत्तपस्तप्तवान्। तेन स बालतपस्वी शुष्कोऽस्थ्यस्थिरभूत्। तदाऽनित्य-

१ "विहितस्वोदरपूर्तिप्रमितभिक्षाभाजन" इति पाठः साधुः।

जागरिकायामिति दध्यौ—"अहं जीवबलेन गतिं करोमि, न वपुषा, अतः कट्य उत्सृजामि शरीरं"। तत ईशानकोणे स्वदेहप्रमितं मण्डलमालिख्यानशनं विधायात्मध्यानं ध्यायति स्म। इतश्च बलिश्चश्चाराजधान्या इन्द्रश्च्युतः। तदा तत्र वास्तव्यदेवदेवीभिरिति चिन्तितं—"वयं सर्वे दुष्करतपस्विनस्तामलिनामबालतापसस्य समीपे गच्छामः, अनेकसुखादिभिस्तं प्रलोभ्येन्द्रत्वप्राप्तिनिदानं कारयामः"। ततः सर्वे देवीदेवा द्वात्रिंशद्विधं नाट्यं प्रदर्श्य त्रिः प्रदक्षिणाः कृत्वा चैवमाहुः—"स्वामिन्! अस्मदीयराजधानीप्राप्त्यर्थं निदानं करोतु, येनेन्द्रत्वं लभ्यते, अस्माभिः सह दिव्यभोगान् भुङ्क्ष्व"। तामलिना तद्वाक्यं नाङ्गीकृतं। ततस्ते श्रान्ताः स्वस्थानं ययुः। तापसोऽपि द्विमासिकसंलेखनानशनेन विंशत्युत्तरशतभक्तपानत्यागेन पञ्चत्वं प्राप्येशानेन्द्रोऽभूत्। इयता क्लेशेन देवेषूत्पन्नः, अल्पकषायत्वादनुकम्पापरत्वाच्च। अत्र चरित्रग्रन्थ इत्थं श्रूयते—अन्त्यावस्थायां तेन साधुरेको दृष्टः, तद्गुणप्रशंसां मनसि चकार, तेन सम्यक्त्वेनेन्द्रत्वं लब्धं। केचिच्च वदन्ति—इन्द्रभवप्रत्ययिकं स्वर्गे शाश्वतजिनबिम्बादिकं दृष्ट्वा सम्यक्त्वं लब्धं। तत्त्वं तु बहुश्रुता एव विदन्ति। अत्रावशिष्टं ज्ञातं च पञ्चमाङ्गादवसेयमिति।

तामलित्तणे तवेण जिणमए सिझंति सत्त जणा। अन्नाणस्स उ दोसेण तामलि ईसाणिं गउ ॥ १ ॥

इति वृद्धवाक्यं। तथोपदेशमालायां—

सट्ठिं वाससहस्स तिसत्तखुत्तो दगेण धोएण। अणुचिण्णं तामलिणा अन्नाणतव त्ति अप्पफलो ॥ १ ॥

पृथिव्यादिषड्जीवकायवधकानां सर्वज्ञशासनपराङ्मुखानां सुबहुरपि तपःक्लेशो बालतपस्विनामल्पफलदः स्यादिति ॥

कुदृक्कृतपःकारकतामली(लि)ना, नैवं निदानं कृतमत्र तत्त्वम् ।
मुक्त्यर्थनिष्पादितसत्तपस्या—मूल्यं न कार्यं मुनिभिर्निदानैः ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ षोडशस्तम्भे षट्त्रिंशदधिकद्विशततमं २३६ व्याख्यानम् ॥

---

## व्याख्यानं ॥ २३७ ॥

अथ चत्वार उपदेशानर्हास्तेष्वाद्यो रागान्वित इत्याह—

यस्मिन् वस्तुनि संजातो रागो यस्य नरस्य सः । तदीयाननु दोषांश्च गुणतयैव पश्यति ॥ १ ॥

स्पष्टः । भावार्थस्तु दृष्टान्तेन ज्ञेयः—मगधे नन्दनस्तलवरः तस्याद्यश्रीद्वितीयश्रीनाम्न्यौ पत्न्यौ । द्वितीयश्रियां रक्तः स तद्गेहेऽवतिष्ठति । अन्यदा कार्येणान्यदेशे गत्वा पश्चादागतः प्रथमाया गृह एव तस्थौ । तया प्रगुणितं नानाव्यञ्जनगुणोपेतं भोजनं परमसुन्दरमपि न बहु मन्यते, किमपि तन्मानस उक्तवांश्च "किं भुज्यते" इति । तत उक्तं—"द्वितीयश्रिया यदन्नं राद्धं तदाऽऽनय

किमपि तद्गृहात् शाकं पर्पटं च" । साऽपि सपत्नीं शाकमयाचिष्ट। तयोक्तं—"अद्य राज्ञः कुतः शाकं?"। तयाऽऽगत्योक्तं स्वामिने । पुनरुक्तं तेन—"किञ्चिदुद्धरितादिकमपि मार्गय" । पुनर्गत्वा साऽमार्गयत् । "कर्मकरेभ्यो दत्तं, उद्धरितमपि नास्ति" इति प्रत्युवाच सपत्नी । तदपि तया स्वपतये निवेदितं । पुनरित्यलपत्—"तदालयाद्यत्किञ्चित्काञ्जिकप्रमुखमप्यानय" । ततः कषायिता सा गत्वा बहिः सद्यो व्युत्सृष्टं वत्सगोमयं तुवरिचनकपिष्टमिश्रं गृहीत्वा(कृत्वा)किञ्चित्संस्कृत्य "तद्गृहादानीतं" इति वदन्ती जपपति निन्ये । तलवरस्तुष्टोऽजाणीत्—"अहो मिष्टं! अहो स्त्रीगुणः!" इति। एष स्त्रीरक्तो यथा गुणदोषविवेकपराङ्मुखस्तथा यः क्वचिद्दर्शने रक्तः स विशिष्टगुणदोषौ न वेत्ति, स धर्मं नाप्नोति। यतः—
मिथ्यात्वपङ्कमलिन आत्मा विपरीतदर्शनो भवति। श्रद्धत्ते न च धर्मं मधुरमपि रसं यथा ज्वरितः ॥ १ ॥
इति १ । अथ द्वितीयो द्वेषी धर्मानर्हः इत्याह—
यो यस्मिन् द्वेषमापन्नः क्रोधमानातिरेकवान् । स लुम्पति गुणाँस्तस्य दोषान् प्रादुष्करोत्यतः ॥ १ ॥
स्पष्टः । ज्ञातं चेदं—वनवासे त्रयोदशवर्षातिक्रमे कौरवपाण्डवयोः कलहमायतिविरसं मत्वा सन्धये श्रीकृष्णो दुर्योधनं प्राह पाण्डवोदितम्—
इन्द्रप्रस्थं यवप्रस्थं माकन्दी वरुणावतम् । देहि मे चतुरो ग्रामान् पञ्चमं हस्तिनापुरं ॥ १ ॥
इत्थं पञ्चग्राममार्गणे दुर्योधनोऽवदत्—
सूच्यग्रेण सुतीक्ष्णेन या भिद्यते च मेदिनी । तदर्धं तु न दास्यामि विना युद्धेन केशव ॥ १ ॥

पुनर्हरिः प्राह—"युद्धे कुलक्षयः जयसंशयः श्वभ्रपतनं च स्यात्" इत्यादिना बोधितोऽपि स नाबुध्यत, प्रत्युत कृष्णेऽपि बन्धनाद्यचिन्तयत् । एवं शासनेऽपि प्रत्युतोपदेष्टुरनर्थाय द्विष्टो भवति, भद्रबाहुगुरुं प्रति वराहमिहर इव जमालिबोटिकसहस्रमल्लमंखलिपुत्रादयो दृष्टान्ताः स्वयमभ्यूह्याः २ ।

अथ मूढस्तृतीय उपदेशानर्ह इत्याह—

अज्ञानोपहतचित्तः कार्याकार्याविचारकः । मूढः स एव विज्ञेयो वस्तुतत्त्वमवेत्तृकः ॥ १ ॥

कण्ठ्यः । भावार्थस्तु ज्ञातेन ज्ञेयः । तद्यथा—एकस्मिन् पुर एका स्त्री विधवा कष्टेन दिनान्निर्गमयति । इतश्च वृद्धिं गतेन पुत्रेण सा पृष्टा—"मदीयपितुः काऽऽजीविका आसीत् ?" । तयोक्तं—"राजसेवा" । तेनोक्तं—"अहमपि तां करोमि"। तया प्रोक्तं—"पुत्र! दुष्कराऽसौ, महता विनयेन क्रियते"। स उवाच—"कीदृशः पुनरसौ विनयः ?" । तयोक्तं—"सर्वस्यापि दृष्टस्य ज्योत्कार्यः, नीचैर्वृत्त्याऽस्थापि भाव्यं" । "एवं करिष्यामि" इत्यभ्युपगम्य चलितोऽयं राजसेवार्थं । मार्गे हरिणेष्वागच्छत्सु वृक्षमूले भ्याकृष्टधनुर्यष्टयो निलीना व्याधा दृष्टाः । तेषां च तेन महता शब्देन ज्योत्कारः कृतः । ततस्त्रस्ता मृगाः पलायन्त । व्याधैः कुट्टयित्वा बद्धोऽसौ । ततस्तेनोक्तं—"जनन्याऽहं शिक्षितो दृष्टस्य सर्वस्यापि ज्योत्कारः कार्यः"। ततश्च ऋजुरयमिति ज्ञात्वा मुक्तस्तैः, शिक्षितश्च, यथा "ईदृशे दृष्टे निलीने मौनेनागम्यते" । एतदभ्युपगम्य पुरतो गन्तुं प्रवृत्तोऽसौ । दृष्टाश्च वस्त्राणि क्षालयन्तो रजकाः । तेषां वस्त्राणि तस्करैर्नित्यमपह्रियन्ते । ततस्तत्र दिने लकुटादिहस्ता रजकाः प्रच्छन्नमुपविष्टा हेरयन्तस्तिष्ठन्ति ।

आगतश्चासावजङ्घश्चवनतगात्रो निलीयमानः शनैः शनैः। तत्र स एष चौर इति मत्वा ताडयित्वा बद्धोऽसौ रजकैः। सद्भावे च कथिते मुक्तस्तैः शिक्षितश्च यथा ईदृशे कस्मिंश्चिद्दृष्टे एवमुच्यते यथा क्षयं क्षारोऽत्र पततु। इदं चाभ्युपगम्य प्रवृत्तः पुरतो गन्तुं। दृष्टं क्वचिद्ग्रामे बहुभिर्मङ्गलैः प्रथमं हलवाहनस्य दिवसकरणं क्रियमाणम्। तत उक्तं क्षयमित्यादि। ततस्तैरपि ताडितः। सद्भावे च ज्ञाते मुक्तः शिक्षितश्च यथेदृशे क्वापि दृष्टे प्रोच्यते यथा गन्त्र्योऽत्र भ्रियन्तां, बह्वत्र भवतु, सदैवेदमस्त्विति। अभ्युपगतं च तेनेदं। अन्यत्र च मृतके बहिर्नीयमाने प्रोक्तमिदं, तत्रापि बद्धः, सद्भावे उक्ते मुक्तः शिक्षितश्च "मा भून्मा भूद्भवतां कदापीदृशं" इति। एतच्चान्यत्र विवाहे प्रोक्ते तत्रापि ताडयित्वा शिक्षितः। एवं स्थाने स्थाने कदर्थ्यमानोऽगच्छत्क्वचिद्ग्रामे। तत्र निःस्वठक्कुरस्य सेवाऽऽरब्धा। तत्र चान्यदा गृहे आम्लखटिकायां सिद्धायां जनानां मध्य उपविष्टस्य ठक्कुरस्य "शीतलिका भूता रब्बा भोक्तुमयोग्या भाविनी राज्याऽऽकारणाय प्रेषितोऽस्मि" इत्युच्चैरवदत्। ततो लज्जितष्ठक्कुरो गृहे गतः। ततो बाढं ताडयित्वा शिक्षितः यथा "नेत्थं पूत्कुर्वाणेन गृहप्रयोजनानि भण्यन्ते, किंतु वस्त्रेण मुखं स्थगयित्वा कर्णाभ्यर्णे स्थित्वा शनैः कथ्यते"। ततोऽन्यदा वह्निदीप्ते गृहे ग्रामसभायां शनैः शनैरयं गतः, समीपे स्थित्वा वस्त्रं च मुखद्वारे दत्त्वोवाच कर्णे, ततः संभ्रमाद्धावितो गृहाभिमुखं, दग्धं च गृहं। ततः कुपितेन बाढं ताडितः शिक्षितश्च—"हे निर्लक्षण! प्रथममेव धूमे निर्गते जलधूलिभस्मादिकं क्षिप्त्वा महता शब्देन पूत्क्रियते"। तेनोक्तं—"अथेत्थं विधास्ये"। ततः कदाचिद्विहितस्नानो धूपनायोपविष्टष्ठक्कुरः,

निर्गता च प्रह्लादनपटस्योपरि अगरुधूमशिखा, दृष्टा च तेन, क्षिप्ता चोत्पाट्य तदुपरि रक्षाभृतमहा-
स्थाली जलधूल्यादिकं च, ततः पूत्कृतं च महद्भिः शब्दैरिति। ततोऽयोग्योऽयमिति निष्कासितो गृहात्
एवं श्रोताऽपि शिष्योऽपि गुरुवचनपरमार्थं न वेत्ति सोऽयोग्य इति ३।

अथ चतुर्थो धूर्तैर्व्युद्ग्राहितो नरोऽयोग्य इत्याह—

वरत्ववस्तुपरीक्षायां धूर्तव्युद्ग्राहणावशात्। अधमः कुग्रहाविष्टो हास्यः स्यात्गोपवन्नरः ॥ १ ॥

स्पष्टः। राजपुरे गोचारणोपार्जितधन एको गोपः। तन्मित्रं स्वर्णकारस्तं गोपं प्राह—"त्वद्धनस्यैकं
स्वर्णकटकमन्यकलादपार्श्वे कारय"। स प्राह—"त्वमेव कुरु"। स प्राह—

यदीच्छेद्विपुलां प्रीतिं तत्र त्रीणि निवारयेत्। विवादमर्थसंबन्धं परोक्षे दारदर्शनम् ॥ १ ॥

"लोका आवयोः स्नेहभङ्गुरा भवन्ति"। गोपः प्राह—"कटकं परीक्षयिष्यामि, मच्चित्तस्थैर्यमस्ति,
किं जनाः करिष्यन्ति?"। ततः स्वर्णकृता तुल्यमेवाकारि कटकयुग्मं, सौवर्णमेकं रिरिमयं च द्वितीयं।
ततः प्रथमं स्वर्णमयं तस्य दत्तं, तेन हट्टेषु दर्शितं, वणिग्भिरुक्तं—"इदं हैमं, इयच्चास्य मूल्यं लभ्यते"।
तत उज्ज्वालनार्थं स्वर्णकृता मार्गितं, तेन दत्तं, पुना रिरिमयं शुद्धं कृत्वा गोपस्य दत्तं। स मुग्धस्तत्प-
रावर्तमविदन् स्वगृहे मुक्तवान्। पुनः कार्ये उत्पन्ने वणिग्भ्यो दर्शितं। तैः रिरिमयं प्रोक्तं। गोपः प्राह—
"यूयमेवासत्यवादिनः, पूर्वं युष्माभिरेव शुद्धमुक्तं अतो मदयस्ये न कोऽपि दोषो विद्यते। एष पूर्वं

व्युद्ग्राहितो युक्तमयुक्तं वा न वेत्ति, तथैव यः कुश्रुतिव्युद्ग्राहितः सोऽपि यथास्थितं परमात्मतत्त्वं न वेत्ति ४ ॥

सिद्धान्तश्रवणेऽयोग्याश्चत्वारोऽमी प्रकाशिताः । हित्वाऽतस्तान् सुधीभिस्तु श्रोतव्यः श्रुतसंग्रहः ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ षोडशस्तम्भे सप्तत्रिंशदधिकद्विशततमं २३७ व्याख्यानम् ॥

## ॥ व्याख्यानं ॥ २३८ ॥

अथ स्याद्वादमतबाह्यो नरः सङ्घबाह्यः कार्य इत्याह ( सप्तमनिह्नवस्वरूपं )—

स्याद्वादयुक्तितो बोधं न प्राप्तवान् स निर्गुणः । विद्वन्मरालसङ्घेभ्यो बाह्यः कार्यः शुभात्मभिः ॥ १ ॥

स्पष्टः दशपुरे तोसलीपुत्रशिष्याः । आर्यवज्रस्वामिपार्श्वेऽधीतानि साधिकानि नव पूर्वाणि यैः, तथा स्वल्पमतिशिष्यान् ज्ञात्वा क्रमेणानुयोगा यैः पार्थक्येन स्थापिताः, तथा सीमन्धरवचसा निगोदपृच्छार्थं ये देवेन्द्रैर्वन्दिताः, ईदृशा आर्यरक्षितसूरयो विचरन्तो दशपुरे आगताः । इतश्च मथुरायां नास्ति-

१ श्रावयितव्य इत्यर्थः ।

कवादी समुत्थितः। तत्र च प्रतिवादिनः कस्यचिदभावात्सर्वसङ्घेनार्यरक्षितसूरय एव साम्प्रतं युगप्रधाना इति कृत्वा प्रस्तुतव्यतिकरकथनाय साधुसङ्घाटकः प्रेषितः। सूरयो वृद्धत्वाद्गन्तुमक्षमा वादलब्धिधरं गोष्ठामाहिलं प्रैषयत्। तेन तत्र गत्वा निग्रहीतोऽसौ वादी। ततः श्रावकैस्तत्रैव चतुर्मासीं कारितः। इतश्च सूरयो निजायुःप्रान्तमासन्नं विज्ञाय दध्युः—योग्यस्यैव विनेयस्य गणधारिता देया, यतः—

वूढो गणधरसद्दो गोयमाईहिं धीरपुरिसेहिं। जो तं ठवइ अपत्ते जाणंतो सो महापावो ॥ १ ॥

पदयोग्यस्तु दुर्बलिकापुष्पमित्र एवास्ति, शेषस्तु साधुवर्गो मम मातुलं गोष्ठामाहिलं वाऽनुजं फल्गुरक्षितं वा समीहते। ततश्च सर्वमपि तीर्थमुपवेश्य संबोधयन्ति। तद्यथा—इह किल त्रयो घटाः, तत्रैको वल्लानां, द्वितीयस्तैलस्य, तृतीयस्तु घृतस्य। तेषु चावाङ्मुखेषु कृतेषु वल्लाः सर्वेऽपि निर्गच्छन्ति, तैलं तु किञ्चिद्घटस्य लगति, घृतं तु बहुतरं लगति। तदहं दुर्बलिकापुष्पमित्रं प्रति सूत्रार्थोभयमाश्रित्य वल्लघटकल्पः संजातः, मत्कृतसमस्तयोरपि तयोस्तेन गृहीतत्वात्। फल्गुरक्षितं प्रति तैलघटतुल्योऽहं संपन्नः, सर्वयोरपि सूत्रार्थयोस्तेनागृहीतत्वात्। गोष्ठामाहिलं तु प्रति घृतघटकल्पोऽहं, बहुतरयोः सूत्रार्थयोर्मम पार्श्वेऽवस्थानात्। अत आद्य एव भवतां सूरिर्भवतु"। तत इच्छाम इति भणित्वा तैः सर्वैरिदं प्रतिपन्नं। पक्षद्वयस्याप्यनुशास्तिं दत्त्वा सूरयो भक्तं प्रत्याख्याय स्वर्गं गताः। तद्गोष्ठामाहिलेन श्रुतं। ततो मथुरातः समागतेन पृष्टमनेन यथा "को गणधरः स्वपदे सूरिभिर्निवेशितः?"। ततः सर्वैर्वल्लघटादिज्ञातान्युक्तानि। तच्छ्रुत्वाऽतीव दुर्मनाः पृथगुपाश्रये स्थितः सूरिदोषान् जग्राह। साधून् व्युद्ग्राहयति, वक्ति

च—"किं यूयं निष्पावकुम्भकल्पस्यास्यान्यर्णे श्रुताम्नायं गृह्णीथ ?"। अन्यदा सूरिशिष्यो विन्ध्यनामा कर्मप्रवादपूर्वस्य चिन्तनिकां करोति, तद्यथा—जीवप्रदेशैः सह बद्धं बन्धमात्रमेव कर्म भवति, यथाऽकषायस्येर्यापथिकीप्रत्ययं कर्म, तच्च कालान्तरस्थितिमप्राप्यैव जीवप्रदेशेभ्यो विघटते, शुष्ककुड्यापतितचूर्णमुष्टिवत् इति। स्पृष्टं तु जीवप्रदेशैरात्मीकृतं, एतच्चेत्थं बद्धं सत्कालान्तरेण विघटते, आर्द्रलेपकुड्ये सस्नेहचूर्णवत् इति। तत्र तदेव बद्धं स्पृष्टं च गाढतराध्यवसायेन बद्धत्वादपवर्तनादिकरणायोग्यं निकाचितमुच्यते, इदं च कालान्तरेण विपाकतोऽनुभवमन्तरेण प्रायो नापगच्छति, गाढतरबन्धत्वात्, आर्द्रकुड्यश्लेपितनिविडरूक्षेतिकाहस्तकवदिति। अयं च त्रिविधोऽपि बन्धः सूचीकलापोपमानाद्भावनीयः, तद्यथा—गुणवेष्टितसूचीकलापोपमं किल बद्धमुच्यते, लोहपट्टसूचीसङ्घातसदृशं तु बद्धस्पृष्टं स्यात्, बद्धस्पृष्टनिकाचितं तु अग्नितप्तघनाहतकोट्टितकृतसूचीनिचयसन्निभं भाव्यं। ननु निकाचितस्यानिकाचितस्य च कर्मणः को विशेषः ? इत्याह—इह कर्मविषयाण्यष्टौ करणानि भवन्ति। उक्तं च कर्मप्रकृतिग्रन्थे—"बंधणसंकमणुवट्ट०" तदेतान्यपवर्तनादीनि सर्वाण्यप्यनिकाचिते कर्मणि प्रवर्तन्ते, निकाचिते तु विपाकतः प्रायोऽनुभवनमेवेत्यनयोर्विशेषः। समाचीर्णोत्कृष्टतपसोत्कृष्टाध्यवसायबलेन च "तवसाउ निकाइयाणं पि" इति वचनान्निकाचितेऽपि कर्मण्यपवर्तनादिकरणप्रवृत्तिर्भवतीति प्रायोग्रहणं। तदत्र व्याख्याने क्षीरनीरन्यायेन वह्नितप्तायोगोलकन्यायेन च जीवप्रदेशैः सह कर्मसंबन्ध इति विन्ध्यसमीपे श्रुत्वा तथाविधकर्मोदयादभिनिवेशेन विप्रतिपन्नो माहिलः प्राह—ननु सदोषमिदं वाक्यं जीवकर्मणो-

स्तादात्म्यसंबन्धोऽविभागेन जीवप्रदेशवत्, तदा सर्वदैव जीवानां सकर्मकत्वान्मोक्षाभावः, तस्मान्मदीयं वाक्यं युक्तं—यथा कर्म स्पृष्टं सर्पकञ्चुकवत् स्पर्शनमात्रेणैव संयुक्तं, अथ बद्ध वह्न्ययःपिण्डादिन्यायेनाक्षीभूतमेव जीवं समन्वेति—अनुगच्छति, एवं मोक्षापत्तेः। इति श्रुत्वा जातशङ्को विन्ध्यः सूरिं पप्रच्छ। सूरयः प्रोचुः—"प्रागुक्तं तदेव तथ्यं। यतः—

जीवो हि स्वावगाढाभिव्योम्न एवाम्बरे स्थितम्। गृह्णाति कर्मदलिकं जातु न त्वन्यदेशगम्॥ १॥
अथात्माऽन्यप्रदेशस्थं कर्मादायानुवेष्टयेत्। यद्यात्मानं तदा तस्य घटते कञ्चुकोपमा॥ २॥"

इति गुरूदितं विन्ध्येन माहिलायोक्तं। तेन नाङ्गीकृतं। गुरुणा स्वयमाभिमुख्येनेत्थं चोदितः—त्वया किं कञ्चुकवत्स्पृष्टं कर्म प्रतिप्रदेशं प्रवृत्तं सदुच्यते? आहोस्विज्जीवपर्यन्ते त्वक्पर्यन्त एव प्रवृत्तं स्पृष्टमिष्यते? इति द्वयी गतिः। यदि आद्यः पक्षस्तर्हि जीवे सर्वगतं कर्म प्राप्नोति नभोवत्, कुतः? तस्य जीवस्यान्तरालं मध्यं तस्यानवस्थातः, न हि प्रतिप्रदेशे प्रवृत्ते कर्मणि जीवस्य कोऽपि मध्यप्रदेश उद्धरति येन कर्मणस्तत्रासर्वगतत्वं स्यात्, एवं सति साध्यविकलत्वात्कञ्चुकदृष्टान्तोऽसंबद्ध एवाप्नोति। अथ द्वितीयः पक्षो जीवस्य बहिः त्वक्पर्यन्ते प्रवृत्तत्वात्कञ्चुकवत्स्पृष्टं कर्मेष्यते तर्हि भवाद्भवान्तरं संक्रामतोऽन्तराले तन्नानुवर्तते बाह्याङ्गमलवत्। भवत्वनुगमाभावः, को दोषः? (इति चेत्) एवं सति सर्वेषां मोक्षः स्यात्, संसारहेतुकर्मणोऽभावात्, इत्यादयोऽनेके दोषा आपतन्ति। आह—ननु जीवकर्मणोर-

विज्ञागस्तर्हि तद्वियोगजावः कथं स्यात् ? गुरुराह—कर्मणो जीवेन सहाविज्ञागेन स्थितस्यापि काञ्चनोपलयोरिव विमोचनं—वियोगो ज्ञानक्रियाज्यां क्रियते, यथा तस्यैव कर्मणो मिथ्यात्वादिजिरादानं—ग्रहणं जीवेन सह संयोगो विधीयते । इत्यादिना बोधितोऽपि स्वाजिनिवेशं न जहौ । अथैकदा विन्ध्यसाधुर्नवमपूर्वे मुनेः प्रत्याख्यानमेवमवर्णयत्—यावज्जीवं सर्वप्रत्याख्यानं त्रिविधत्रिविधेन विधेयं । इति श्रुत्वा माहिलो जजल्प—ननु प्रत्याख्यानं सर्वमपि यावज्जीवादिपरिमाणं विना कार्यं, अवधिसहितं तु आशंसादिदोषदूषितं जवेत्, यथा पूर्णे प्रत्याख्याने देवलोकादौ सुराङ्गनासंजोगादिजोगानहं सेविष्ये, परिणामेऽशुद्धे प्रत्याख्यानमशुद्धं, यतः सूत्रे—

रागेण च दोसेण च परिणामेण च न दूसियं जं तु । तं खलु पच्चरकाणं जावविसुद्धं मुणेयव्वं ॥ १ ॥

अत्र गुरुरुत्तरमाह—याऽऽशंसा सा किं कालमानाज्जायते ? अथ वाञ्छया ? । यद्याद्यः पक्षस्तर्हि पौरुष्यादिपदोच्चारणेऽपि आशंसा स्यात्, अद्धाप्रत्याख्याने यामादिकालमानं प्रत्यक्षं प्रोक्तं । अथ तत्रापि तत्पदं नो वाच्यमिति, तदा प्रव्रज्यादिनत एवानशनापत्तिर्जवेत्, जिनैस्तु तपस्विनां सिद्धान्ते दशधाऽनागतादिकं प्रत्याख्यानं कर्तव्यत्वेन कथितं । अथ वाञ्छारूपो द्वितीयो विकल्पः सोऽपि न युज्यते, यतो मुनेरवद्यसेवाशाऽन्यजवे न विद्यते, अवधिं विनाऽपरिमाणे प्रत्याख्याने क्रियमाणेऽनागतकालः सर्वोऽपि प्रत्याख्यानगोचरः, तदा चायुःक्षयाद्देवजवं प्राप्तस्य यतेः सावद्यसेवनेऽवश्यं व्रतजङ्गः

प्रसज्यते, अत आशंसारहितत्वेन तत्सावधिकं प्रत्याख्यानं न दोषाय कायोत्सर्गनिदर्शनेन। एवं युक्तिभिः प्रज्ञापितोऽपि यावदसौ न किमपि श्रद्धत्ते तावत्पुष्पमित्राचार्यैरन्यगच्छगतबहुश्रुतस्थविराणामन्तिके नीतः। ततस्तैरप्युक्तोऽसौ—यादृशं सूरयः प्ररूपयन्ति आर्यरक्षितसूरिभिरपि तादृशमेव प्ररूपितं, न हीनाधिकं। ततो गोष्ठामाहिलेनोक्तं—"किं यूयमृषयो जानीथ? तीर्थंकरैस्तादृशमेवोक्तं यादृशमहं प्ररूपयामि"। ततः स्थविरैरुक्तं—"मिथ्याभिनिविष्टो मा कार्षीस्तीर्थंकराशातनां, न किमपि त्वं जानासि"। तेन न स्वीकृतं। ततः सर्वेण हि सङ्घेन देवताऽऽह्वानार्थं कायोत्सर्गो विहितः। ततो भद्रका काचिद्देवता समागता, सा वदति—"आज्ञां ददातु, किं करोमि?" ततः सङ्घः प्रस्तुतमर्थं जानन्नपि सर्वजनप्रत्ययनिमित्तं ब्रवीति—"महाविदेहं गच्छ, तीर्थंकरं पृच्छ—किं सङ्घो यद्भणति तत्सत्यं उत यद्गोष्ठामाहिलो भणति तत्सत्यं?"। ततस्तया प्रोक्तं—"मम महाविदेहे गमनागमनं कुर्वन्त्याः प्रत्यूहविघातार्थमनुग्रहं कृत्वा कायोत्सर्गं कुरुत, येनाहं गच्छामि"। सङ्घेन तथैव कृतं। साऽपि तत्र गत्वा पृष्ट्वा चागता ब्रवीति यदुत "तीर्थंकरः समादिशति—श्रीवीरमुक्तिप्राप्तेश्चतुरशीत्यधिकपञ्चशतवर्षेष्वतीतेषु सप्तमो निह्नवो भावी, सोऽयं माहिलो मिथ्यावादी"। एतच्छ्रुत्वा माहिलो जगौ—"नन्वल्पर्द्धिकेयं वराकी नास्त्येतस्या न तत्र गमनशक्तिः" इति। एवमपि यावदसौ न किञ्चिन्मन्यते तावत्सङ्घबाह्यः कृतः अनालोचितप्रतिक्रान्तश्च कालं गतः॥

तथापि तं तन्मतमत्यजन्तं, चकार सङ्घोऽखिलसङ्घबाह्यम् ।
व्युद्ग्राहयन् सोऽपि जनाननेकान्, बभ्राम भूमौ गतबोधिरत्नः ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ
षोडशस्तम्भेऽष्टात्रिंशदधिकद्विशततमं २३८ व्याख्यानम् ॥

---

## व्याख्यानं ॥ २३९ ॥

अथ बोटिकवक्तव्यतामाह—

स्वल्पमात्रजिनप्रोक्तवचनोत्थापकारिणः । जमालिप्रमुखा ज्ञेया निह्नवाः सप्त शासने ॥ १ ॥
अथ सर्वविसंवादी निह्नवः प्रोच्यतेऽष्टमः । श्रीवीरमुक्तेर्जाताब्दशतैः षड्भिर्नवोत्तरैः ॥ २ ॥

कण्ठ्यौ । अष्टमनिह्नवज्ञातं चेदं—रथवीरपुरे शिवभूत्याह्वः क्षत्रियः सहस्रयोधी । तत्र राजसेवां कुर्वति नृपो दध्यौ—"अस्य वीर्यादिगुणान् परीक्षेऽहं" । ततः श्यामचतुर्दश्यां पशुमेकं वारुणीं च तस्य दत्त्वैवं प्रोक्तं—"त्वमेकाकी निशीथे प्रेतवने बलिं दत्त्वा समागच्छ" । स रात्रौ तत्र गतः । अनेकभूतप्रेतैर्भापितः, परं रोमोद्भेदोऽपि तस्य नाभूत् । नृपस्तं शूरमवबुध्य वह्वीं वृत्तिं ददौ । एकदा पार्थिवेन दक्षिणमथुरानृपजयार्थं सहस्रनराः प्रेषिताः, उत्तरमथुरानृपजयार्थमेकः शिवभूतिः प्रेषितः, स क्षणेन

जित्वाऽऽगात्। ततः सहस्रमल्ल इति नाम कृत्वा नृपो "वरं याचस्व" इति तं प्राह। सोऽप्यूचे—"हे प्रभो! मम स्वातन्त्र्यं देहि"। नृपेण दत्ते स राजप्रसादाद्विलासान् कुर्वन् नगरमध्ये पर्यटति। रात्रौ स प्रहरद्वयेऽतिक्रान्ते गृहमागच्छति। तत एतदीयभार्या तन्मातरं भणति—"निर्वेदिताऽहं त्वत्पुत्रेण। न खल्वेष रात्रौ वेलायां कदाचिदप्यागच्छति, तत उज्जागरकेण क्षुधया च प्रत्यहं बाध्यमाना तिष्ठामि"। तयोक्तं—"वत्से! त्वमद्य स्वपिहि, अहं जागरिष्यामि"। ततः स मध्यरात्रौ समेत्य प्रोक्तवान्—"द्वारमुद्घाटय"। ततः प्रकुपितया मात्रा प्रोक्तं—"हे दुर्जन! यन्निशीथे यत्रैतस्यां वेलायां द्वाराण्युद्घाटितानि सन्ति तत्र गच्छ"। श्रुत्वेत्यतिक्रोधपरेण पर्यटताऽपावृतद्वारः साधूपाश्रयो दृष्टः, तेषां पार्श्वे तेन वन्दित्वा व्रतं याचितं। तैश्च राजवल्लभो मात्रादिभिरमुत्कलितश्चेति न दत्तं। ततः खेलमल्लकाऽऽदक्षां गृहीत्वा तेन स्वयमेव लोचः कृतः। कृष्णसूरिसाधुभिर्लिङ्गं समर्पितं। कालान्तरेण कृष्णाचार्येण सह विहरंस्तत्रागात्। राज्ञा सहस्रमल्लाय रत्नकम्बलो दत्तः। तत आचार्यैः शिवभूतिरुक्तः—"किमनेन साधूनामनेकपापहेतुना गृहीतेन?"। ततस्तेन संगोप्य मूर्च्छया धृतः, प्रत्यहं संभालयति (रक्षति)। गुरुभिर्मूर्च्छितोऽयमत्रेति ज्ञात्वा तस्मिन् क्वापि गते तत्कम्बलरत्नं पाटयित्वा साधूनां पादप्रोञ्छनकादीनि कारितानि। ततो ज्ञातव्यतिकरः कषायितस्तिष्ठति। अन्यदा सूरयो जिनकल्पिकान् वर्णयन्ति—"ते जिनकल्पिका द्विविधाः, एके पाणौ भुञ्जते अन्ये तु पात्रकेऽश्नन्ति, तेऽपि प्रत्येकं जिनैर्द्विधा प्रोक्ताः, एके स्वल्पसचेलका अन्ये त्वचेलकाः" इति श्रुत्वा शिवभूतिना प्रोक्तं—"यद्येवं तर्हि किमिदानीं बहु-

पधिः परिगृह्यते ? स एव जिनकल्पः किं न क्रियते ?" गुरुर्जगौ—"भारते श्रीवीरपौत्रेण श्रीजम्बूस्वामिना समं जिनकल्पादिदशवस्तुव्युच्छेदोऽभूत्, संहननाद्यभावात्साम्प्रतमसौ कर्तुं न शक्यते एव"। ततोऽसाववक्—"अल्पसत्त्वानां व्युच्छिन्नोऽसौ, न मादृशां, मादृशो हि महासत्त्वोऽधुनाऽप्यमुं कर्तुमीष्टे, मोक्षार्थिना सकलपरिग्रहस्त्याज्य एव किं पुनरनेन कषायमूर्छादिदोषनिधिना परिग्रहानर्थेनेति। अचेलका जिनेन्द्राः, अतोऽचेलतैव सुन्दरेति"। ततो गुरुणा प्रोक्तं—"हन्त यद्येवं तर्हि देहेऽपि कषायभयमूर्छादयो दोषाः कस्यापि संभवन्तीति सोऽपि व्रतग्रहणानन्तरमेव त्याज्यः। यच्च श्रुते निष्परिग्रहत्वमुक्तं तद्धर्मोपकरणेषु मूर्छा न कर्तव्येति, न पुनः सर्वथा धर्मोपकरणस्य त्यागः। अथ जिनेन्द्रा अपि सर्वथा नाचेलकाः "सव्वेऽवि एगदूसेण निग्गया जिणवरा चउवीसं" इत्यादिवचनात्"। तदेवं गुरुणा स्थविरैश्च यथोक्तादिभिर्वदयमाणाभिश्च युक्तिभिः प्रज्ञाप्यमानोऽपि तथाविधकषायमोहोदयान्न स्वाग्रहान्निवृत्तोऽसौ। किंतु चीवराणि परित्यज्य निर्गतः। ततश्च बहिरुद्याने व्यवस्थितस्य तस्योत्तरा नाम भगिनी वन्दनार्थं गता। सा च त्यक्तचीवरं तं भ्रातरमालोक्य स्वयमपि चीवराणि त्यक्तवती। ततो भिक्षार्थं नगरमध्ये प्रविष्टा गणिकया दृष्टा। तत इत्थं विवस्त्रां बीभत्सामिमां वीक्ष्य "माऽस्माँल्लोकस्त्याक्षीत्" इत्यनिच्छन्त्यपि तया वस्त्रं परिधापिताऽसौ। तत एष व्यतिकरोऽनया शिवभूतये निवेदितः। ततोऽनेन "विवस्त्रा योषिन्नितरां बीभत्साऽतिलज्जनीया स्यात्" इति विचिन्त्य प्रोक्ताऽसौ—"तिष्ठ त्वमित्थमपि, न त्यक्तव्यं च त्वया वस्त्रं"। अथानेके जैनसाधवस्तं प्रतिबोधयन्ति। यस्माभिरेव

स्थानैर्वस्त्रधारणमनुज्ञातमागमे नैकान्ततः । उक्तं च—"तिहिं ठाणेहिं वत्थं धारेज्जा—हिरिवत्तियं १ दुगंछावत्तियं २ परिसहावत्तियं ३" । तत्र हीर्लज्जा संयमो वा प्रत्ययो निमित्तं यस्य तत् । तथा जुगुप्सा लोकविहिता निन्दा सा प्रत्ययो यस्य तत् । तथा परीषहाः शीतोष्णदंशमशकादयः प्रत्ययो यत्र तत् । इत्युक्तहेतवे वस्त्रं धार्यं ।

प्रयोगश्चात्र वस्त्रादि न दोषाय तपस्विनाम् । धर्मोपष्टम्भदायित्वात्क्षुध्याहारादिवत्स्फुटम् ॥ १ ॥

अथ त्वं वदसि—रौद्रध्यानं चतुर्विधं प्रोक्तं हिंसानुबन्धि १ मृषानुबन्धि २ स्तेयानुबन्धि ३ संरक्षणानुबन्धि ४ । तत्र हिंसायाः सत्त्ववधादिरूपाया अनुबन्धः सातत्येन चिन्तनं यत्र तद्धिंसानुबन्धि १ । मृषाऽसत्यं तस्यानुबन्धो यत्र तन्मृषानुबन्धि २ । स्तेयं चौर्यं तस्यानुबन्धो यत्र तत्स्तेयानुबन्धि ३ । तथा संरक्षणं मारणाद्युपायैस्तस्कारादिभ्यो निजवित्तस्य गोपनं तस्यानुबन्धः सातत्येन चिन्तनं यत्र रौद्रध्याने तत्तथा । एवं सति संरक्षणानुबन्धो रौद्रध्यानस्य चतुर्थो भेदः, स च वस्त्रादौ ज्यग्रहेतुत्वाद्वस्त्रादिकं दुर्गतिहेतुः, शस्त्रादिवत्, ततो न ग्राह्यं, इति तव बुद्धिर्भवेत्तर्हि त्वदुक्तयुक्त्या रौद्रध्यानं तदिदं देवानांप्रिय ! देहादिष्वपि तुल्यं, तेष्वपि जलज्वलनमलिम्लुचदंशश्वापदादिविषकण्टकादिभ्यः संरक्षणानुबन्धस्य तुल्यत्वात्, अतस्तेऽपि परित्याज्याः प्राप्यन्ते । अथ देहादेर्मोक्षसाधनत्वाद्यतनया तत्संरक्षणानुबन्धविधानं कथं न प्रशस्तं ? ततः कथं परित्याज्याः वस्त्रादयोऽपीति ? ततश्च—"मुच्छा परिग्गहो वुत्तो इति वुत्तं महेसिणा" इत्यादिवचनात् यत्र वस्त्रकनकदेहादौ मूर्छा समुत्पद्यते तन्निश्चयतः परमार्थतो

ग्रन्थः, यत्र तु सा नोपजायते तदग्रन्थः । आह—ननु यदि वस्त्रं भुनक्ति तर्हि साधोः कथमचेलपरिषहसहिष्णुत्वं, चेलेऽसत्येव तदुपपत्तेः ? तदयुक्तं, जीर्णादिभिरपि वस्त्रैरचेलकत्वं लोकरूढमेव । यथेह काऽपि योषित् कटीवेष्टितजीर्णबहुच्छिद्रैकशाटिका कञ्चित्कोलिकं वदति—"त्वरस्व भोः शालविक ! शीघ्रो भूत्वा मदीयपोतीसाटिकां निर्माय दत्स्व, नग्निका वर्तेऽहं" । तदिह सवस्त्रायामपि योषिति नाग्न्यवाचकशब्दः प्रवर्तते "जस्सट्ठा कीरइ नग्गभावो अएहएहीणयअदतवयणं" इत्यादि न विरुध्यते । एवं मुखवस्त्रिकारजोहरणादि चोपकरणं संयमोपकारित्वेन योज्यं ।

स्थानोपवेशनस्वापनिक्षेपग्रहणादिषु । जन्तुप्रमार्जनार्थं हि रजोहरणमिष्यते ॥ १ ॥
संपातिमादिसत्त्वानां रक्षायै मुखवस्त्रिका । भक्तपानस्थजन्तूनां परी ( प्रती ) क्षायै च पात्रकम् ॥ २ ॥

पात्राभावे हि संसक्तगोरसादयो हस्त एवानाभोगादिकारणाद्गृहीताः, पश्चात् किं कर्तव्यं ? तद्गतसत्त्वानां प्राणविपत्तिरेव स्यात् । पाणौ गृहीतरसानां परिगलने सति कुन्थुकीटिकादिप्राणघातनं स्यात् । ये च भाजनधोवनादिभिः पश्चात्कर्मादयो दोषा आपतन्ति, अतो बालग्लानादीनां पारिष्ठापनिकासमितिसत्यापनार्थं पात्रग्रहणं संयमार्हं । अपि च जघन्यतोऽपि किञ्चिन्न्यूननवमपूर्वपाठका उत्तमधृतिसंहननाः "तवेण सुत्तेण सत्तेण" इत्यादिभावनया कृतपरिकर्माण एव जिनकल्पं प्रतिपद्यन्ते, नान्यथा, इति न रथ्यापुरुषकल्पानां भवादृशां जिनकल्पस्तीर्थकरैरनुज्ञातः । तथा तीर्थकरतुल्यतां करोषि त्वं तन्न योग्यं, जिनास्तु पाणिप्रतिग्रहाद्यनन्तातिशयैर्युक्ता इत्याद्यनेकयुक्तिभिः शिक्षितोऽपि स मिथ्याभिनिवे-

शादनेकपरमात्ममुनीन्द्रवचनोत्थापको बभूव। शिवभूतेः शिष्यौ द्वौ बुद्धिशालिनौ कौण्डिन्यकोटवीराख्यावभूतां। ताभ्यां परंपराऽऽसीत्। क्रमेण "केवलिनो न भुञ्जते, स्त्रियो मुक्तिं न यान्ति, त्रिविधाहारनियमोपवासे सचित्तजलपाने न दोषः, देवद्रव्यस्य तु दिक्पटसाधूनां ग्रहणे व्यापारणे च न दोषः," इत्यादिकतिपयवाक्यन्यूनाष्टशतवचांसि जैनागमव्यतिरिक्तानि रचयन्ति स्म, स्वेच्छया जल्पन्ति स्म, अतः सर्वविसंवादिनो ज्ञेया बोटिकसंतानवर्तिनोऽवसेयाः, बोटिकात्समुत्पन्ना दिक्पटाः॥

इत्यष्टमो दिक्पटसंज्ञनिह्नवः, प्रकाशितो हारितशुद्धबोधकः।
लब्ध्वाऽपि बोधिर्व्रजतीति कस्यचि—त्तद्रक्षणं भोः कुरुत प्रयत्नतः॥ १॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ षोडशस्तम्भे एकोनचत्वारिंशदधिकद्विशततमं २३९ व्याख्यानम्॥

## व्याख्यानं ॥ २४० ॥

अथ श्रुतनिन्दकानाह—

श्रीमद्वीरजिनं नत्वा वक्ष्येऽहं श्रुतनिन्दकान्। चरित्रं वङ्कचूलीकाध्ययनाद्धारितं यथा॥ १॥

स्पष्टः। भावार्थस्तु दृष्टान्तेन ज्ञेयः—पञ्चमपट्टधरः श्रीयशोभद्रगुरुः, तद्विनेयो भद्रबाहुः श्रुतकेवली,

तच्छिष्योऽग्निदत्तनामा मिथिलोद्याने प्रतिमां प्रतिपन्नस्तपश्चरति स्म। इतो द्वाविंशतिर्गोष्ठिकनरा मद्यमांसासक्ताः कामलतया वेश्यया सह कुचेष्टां तन्वन्तः प्रत्यहं वने क्रीडन्ति स्म। मदान्धा एकदा तं साधुं वीक्ष्यातितीक्ष्णशस्त्रहस्तास्तद्वधार्थं युगपद्धाविरे। ते सर्वेऽन्धकूपे सहसा पतिता अन्योऽन्यशस्त्रापहता मृत्युना गृहीताः। साधुस्तान् पश्यन् दध्यौ—"हा हा! अकृतसुकृता अकाले मृताः"। इति ध्यात्वा कायोत्सर्गं पारयित्वा यशोभद्रादिगुरुसमीपे समागतः। तेषां पुरो विनेयोऽग्निदत्तो द्वाविंशतिगोष्ठिकनराणां प्रेत्यगत्यादिकं पप्रच्छ। तदा सूरिराट् त्रिज्ञानोपयुक्तो दृष्टिवादाज्ञाविताऽर्थो यशोभद्राह्वः श्रुतोपयोगं प्रयुञ्जानस्तेषां बहुयोनिपरिभ्रमणं प्राह—हे अग्निदत्त! ते द्वाविंशतिनरास्तव वधार्थं धावन्तोऽन्धकूपे पतितास्तां गणिकां काङ्क्षमाणा अन्तर्मुहूर्त्तमात्रतदध्यवसायेन मृता गणिकाकामलतादक्षिणस्तनविटप्रदेशे स्वकृतनखक्षते कृमित्वेनोत्पन्नाः, तेन स्तनवेदनाऽतिप्रादुर्भूता। चिकित्सका औषधादिभिः खेदं गता हारिताः। एको वैद्यो लब्धोपाय उरोजं विदार्य ये द्वाविंशतिकृमयो द्वीन्द्रिया अस्थिमांसशोणितवस्त्राशास्तान् जलभाजने मुमोच। वैद्यस्तान् वेश्याया अदर्शयत्। स्तनस्तु व्रणसंरोहिण्या सज्जीकृतः। वैद्यस्य सा बहुदानं ददौ। अथ तेषु कृमिषु पूर्वभवानुरागात्करुणां दधती सा दध्यौ—"इमे वराका मदीयकरस्पर्शान्मरिष्यन्ति, अतोऽहं पुरपरिखापतितश्वशवे गत्वा मुञ्चामि"। ततस्ते क्षपणकोष्ठके क्षिप्ताः। यतः—"तत्थऽवि ते दुवीस कीमकीडगा आयबहुहातएहाभिभूया समाणा अंतमुहुत्तपहुत्तेहिं कालगया"। ततस्ते साधारणवनस्पतौ मुस्ताकन्दत्वं प्राप्स्यन्ति, तत्र खन्यमाना मृताः पृथ्व्यादि-

पञ्चकेकेन्द्रियेषु जघन्यमध्यमस्थितिका भविष्यन्ति । ततस्ते कामलताकुक्षौ गण्डोलत्वेनोत्पत्स्यन्ते, तत्र विरेचनाद्विपन्नास्ते वेश्यामलद्वारेण निर्गतास्तत्रैव पुरीषे उत्पत्स्यन्ते, तत्रान्तर्मुहूर्त्तायुष्यं त्रीन्द्रियसंबन्धि भुक्त्वा विपन्नाः सन्तो वेश्योच्चारे तत्रैव चतुरिन्द्रिया भविष्यन्ति । यतः—"तीसे कामलयाए उच्चारे पासवणे खेलजल्लसिंघाणवंतसे सत्तवार विगलिंदियाण ताणं जहाकमं पाविहि त्ति । इत्थमुणुणती-सभववत्तव्वया" । ततः पुनस्ते द्वाविंशतित्रिंशत्तमे भवे तद्वेश्याशौचगृहे निर्धमने मण्डूकत्वेन संमूर्छिष्यन्ति, तत्र दिनपृथक्त्वायुष्यमतिक्रम्यैकत्रिंशत्तमे भवे वेश्यागृहे गर्भजोन्दरा भविष्यन्ति । तत्र मासपृथक्त्वायुःक्षयेण द्वात्रिंशत्तमे भवे तद्गणिकागृहद्वारे तन्मलोत्सर्गमाहरन्तो गर्ताशूकरा भविष्यन्ति । तत्र वर्षपृथक्त्वस्थितिक्षयेण त्रयस्त्रिंशत्तमे भवेऽवन्तिदेशे श्वपाककुलेषूत्पत्स्यन्ते । उक्तं च—"तेण ते दुवीस सोवागा वुड्ढिं पत्ता दुमसंगाणे दीहदंताला लंबोदरा गुलियरासिसन्निकासा अदंसणिज्जा जणाणं दुगंछा उप्पायमाणा सकामकुसला आविहोहिंति" । अत्रान्तरे हे अग्निदत्त ! सा गणिका वृद्धिं प्राप्ता द्रव्यं स्वधर्मस्थाने संस्थाप्य परिव्राजिकादीक्षां धर्मं चाङ्गीकृत्य मिथिलातो निर्गत्य काशीजनपदमध्य-स्थितगङ्गानद्युपकण्ठस्थतपस्विनामन्तिके शौचमूलं धर्मं चचार । क्रमेण पर्यटन्ती अवन्तिदेशस्थितसि-प्रासरित्तटे आगता । तत्रानेकजनानां पुरः शौचमूलं धर्मं प्रादुष्करिष्यति । तदुक्तं च—"सेऽवि सोए दुविहे पन्नत्ते दव्वसोए १ भावसोए २ अ । दव्वउ उदयमट्टियाए य भावउ दब्भेहि य मंतेहि य जेणं

१ जराम्

अम्हं किमवि असुइं भवइ सव्वं मट्टियाहिं लिंपइज्जइ। तओ सुहोदएण पक्खालिज्जइ। ततेण सा असुई भवइ ?। एवं खलु सत्ता जलभिसेयसत्ता परमपयं गच्छंति"। ततस्ते द्वाविंशतिश्वपाकास्तं धर्मं श्रुत्वा रसिका भविष्यन्ति, विशेषतो जैनमुनिचैत्यानां प्रत्यनीका अवर्णवादिनो भविष्यन्ति। ततो वैराग्यं गतास्ते पञ्च वर्षाणि यावत्परिव्राजकदीक्षां तत्पार्श्वेऽङ्गीकृत्यायुःक्षयेण तत्रैवावन्त्यां चतुस्त्रिंशत्तमे भवे ब्राह्मणकुलेषु उत्पत्स्यन्ते। तत्रानेकजनसमीपे ब्राह्मणचेष्टां कुर्वाणा जीविष्यन्ति। अन्यदा कुशस्थलजूपपुरो ब्राह्मणचेष्टया सर्वेषां हास्यं जनयन्तोऽष्टमतपःपारणे गोचर्यर्थं निर्गतमेकं साधुयुगलं प्रेक्ष्य पुरोहितवचसा तन्मुनियुगलं हीलयिष्यन्ति, तथापि मौनावलम्बि तत्साधुयुग्मं वीक्ष्य स्वयमेव ते ब्राह्मणाः श्रान्ता मुनियुगलं विसर्जयिष्यन्ति। ततो हे अग्निदत्त! ते ब्राह्मणा एकत्र सुप्ता अकस्मादकालविद्युत्पातेन मृत्युं प्राप्स्यन्ति। ततः पञ्चत्रिंशत्तमे भवे मध्यविषये भिन्नभिन्नकुलेषूत्पत्स्यन्ते। उक्तं च—
"मज्झविसएसु पुढो पुढो कुलेसु चउद्दसविज्जापरया दिया समुपज्जइस्संति। ततेण छव्वीस दिया धाराउरे जन्नदत्तदियामंतणेण जण्णवाडम्मि ठिया पिहितदुवारा दवेहिं सिप्पीहवणे करेमाणे वज्जग्गिणा उट्ठिएणं दज्झहुत्ता अट्टज्झाणोवगया पिवासासोसीयकंठा सिप्पानईदहम्मि मच्छा होहिंति"। एवं जलचराणां मध्ये सप्तभववक्तव्यता, ततः खेचरयोनिषु नवभववक्तव्यता, ततः स्थलचरयोनिमध्ये एकादशभववक्तव्यता ज्ञेयेति, एवं द्वाषष्टिभवग्रहणं। तत्र द्वाषष्टितमे भवे ते द्वाविंशतिगोष्ठिकनरा मृगत्वं लप्स्यन्ते। तत्र वनदवाग्निना दग्धास्त्रिषष्टितमे भवे मध्यविषयेषु भिन्नभिन्नश्रावककुले समुत्पत्स्यन्ते।

तत्रोन्मुक्तबाह्यावस्था धृष्टाः परवञ्चकाः पूर्वभवमिथ्यात्वभावतो जिनमार्गप्रत्यनीका देवगुरुनिन्दकाश्च भाविनः। बहूनां नरनारीणां पुरतः कथयिष्यन्ति—"अश्मधातुनिर्घटितप्रतिमापूजनं व्यर्थं, हिंसानिदानत्वात्, इत्यादियुक्त्या चैत्यतीर्थागमोत्थापनं विधास्यन्ति। अथ सा तपस्विनी अष्टसप्ततिवर्षाणि यावद्गृहवासं परिपाल्य षड्विंशतिवर्षाणि यावत्परिव्राजकमार्गानुरक्ता सर्वायुश्चतुरुत्तरशतवर्षमितं भुक्त्वा सप्तदिनानशनेन मृत्वा वानव्यन्तरस्य सुवत्सस्य दक्षिणेन्द्रस्य देशोनपल्यार्धायुष्का सुवत्सानाम्नी देवी भविष्यति। तत्र विभङ्गज्ञानेन पूर्ववद्भवसंबन्धिनस्तान् द्वाविंशतिं वणिजो दृष्ट्वा सा देवी हृष्टा तुष्टा तेषां सर्वत्र साहाय्यं विधास्यतीति। देवीप्रभावात्ते सर्वर्द्ध्या वृद्धिं प्राप्स्यन्ति। तदनु सर्वलोकानां पुरो वाढमुद्घोषयिष्यन्ति—"भोः! पश्यतास्मद्धर्मफलं प्रत्यक्षं, वयं महासौख्यमनुभवामः, यूयमप्यस्मद्धर्मादरं कुरुत, किं स्यादश्मबिम्बार्चया षट्कायोपमर्दिकया?"। एवं ते द्वाविंशतिभ्रष्टश्राद्धा अनेकजनान् कुमार्गे पातयिष्यन्ति। तत्समये स्वामिप्ररूपितश्रुतहीलनं भविष्यति, श्रमणानां निर्ग्रन्थानां नोदयपूजासत्कारा भविष्यन्ति, अतिदुष्करं च धर्मपालनं भविष्यति। ततस्ते द्वाविंशतिर्वणिज आयुरवसानसमये षोडशरोगातङ्काभिभूता आर्तध्यानोपगताः कालं कृत्वा घर्मायाः प्रथमपृथिव्याः प्रथमप्रस्तटे दशसहस्रवर्षस्थितिकनारकित्वं प्राप्स्यन्ति। ततः परमनेकयोनिषु भ्रमिष्यन्ति। इति महादुर्लभबोधिनः श्रीमज्जिनागमहेलिकाश्चेति। अथाग्निदत्तः शिष्यः पुनर्गुरुं प्रणम्य व्यजिज्ञपत्—"स्वामिन्! कस्मिन् काले एषां श्रुतनिन्दकानामुत्पत्तिर्भाविनी?"। सूरिः प्राह—तत्सूत्रगाथायामुक्तं च—

भणइ जसभद्दसूरी सुउवउगेण अग्गिदत्तमुणिं ।
सुणसु महाभाय जहा सुअहीलणमिह जहा उदउ ॥ १ ॥
मुक्खाउ वीरपहुणो छसयहियएगनवइअहिएहिं ।
वरिसाइ संपइनिवो जिणपडिमाआवउ होही ॥ २ ॥
ततो अ सोलसएहिं नवनवइसुएहिं वरिसेहिं । ते छुग वाणियगा अवमन्नइस्संति सुयमिणं ॥ ३ ॥
तम्मि समए अग्गिदत्ता संघसुयरासिनक्खत्ते । अट्ठतीसइमो छुट्ठो वणिस्सइ धूमकेउगहो ॥ ४ ॥
तस्स ठिइ तिन्नि सया तित्तिसा एगरासिवरिसाणं । तम्मिय सीलपइट्ठो संघस्स सुयस्स उदउ अत्थि ॥ ५ ॥
इय जसभद्दगुरुणं वयणं सोच्चा मुणिसुवेरग्गो । पायाहिणं कुणंतो पुणो पुणो वंदए पाए ॥ ६ ॥
आपुच्छिऊण सूरिं सगुरुं तह भद्दबाहुसंभूयं । संलेहणापवन्नो गिउऽग्गिदत्तो पढमकप्पे ॥ ७ ॥
मिथ्यागुणस्थानकवासिनस्ते, सिद्धान्तचैत्यादि विलोपयन्तः ।
संसारकूपेष्ववटेष्वटन्त्य—न्यैर्नो तथा कार्यमिहागमज्ञैः ॥ १ ॥
॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ षोडश-
स्तम्भे चत्वारिंशदधिकद्विशततमं २४० व्याख्यानम् ॥

## ॥ समाप्तोऽयं षोडशः स्तम्भः ॥

## ॥ अथ सप्तदशः स्तम्भः ॥

### एकचत्वारिंशदधिकद्विशततमं व्याख्यानं ॥ २४१ ॥

अथ क्रोधफलमाह—

वद्धं यद्येन ( यैश्च ) क्रोधेन वचसा पूर्वजन्मनि । रुदद्भिर्वेद्यतेऽवश्यं तत्कर्मेह शरीरिभिः ॥ १ ॥

स्पष्टः । अत्रार्थे ज्ञातमिदम्—अमरपुरे मकरध्वजो नृपः । तस्य पत्न्या मदनसेनया मस्तकात् पलितं दर्शितं । तेन प्रबुद्धः स्त्रिया सह तापसीं दीक्षां जग्राह । अन्यदा राजपत्न्या तापस्या गूढगर्भया सुतः प्रसूतः परमनुचिताहारेण सा मूर्छां प्राप । तदा राजतापसो महाखेदपरोऽभूत् । सुतस्तु स्वनकाय श्रेष्ठिने दत्तः । श्रेष्ठिना स्वभार्यायै दत्तः । तस्यामरदत्त इति नाम कृतं । यौवने तस्य मित्रानन्दाभिधः सुहृज्जज्ञे । एकदा तौ सिप्रासैकते वटसन्निधौ अणुष्ठिकादण्डाभ्यां क्रीडतः । इतश्चामरदत्तेन प्रणुन्नो- ष्ठिका वटे वद्धस्य चौरस्य मुखान्तरे प्रविवेश । मित्रानन्दो हसन्मित्रं प्राह—"पश्येदं महदद्भुतं" । तदा कुणपेनोक्तं—"किं हससि ? तवापीदृश्यवस्था भाविनी, अवश्यं तव मुखेऽण्णोलिका प्रवेक्ष्यति" ।

१ मृत्युम्.

तन्निशम्य भीतः कुत्रापि रतिं न प्राप्नोति । तममरः शिक्षां ददौ—"किं व्यन्तरवाक्येन भ्रान्तोऽसि ? तेन हास्याद्युक्तं भविष्यति, अत उद्यमं कुरु । यतः—

आपन्निमित्तदृष्टाऽपि जीवितान्तविधायिनी । शान्ता पुरुषकारेण ज्ञानगर्भस्य मन्त्रिणः ॥ १ ॥

इदं स्थानं विहायान्यत्र गच्छावः" । ततः समसुखदुःखौ तौ निर्गत्य पाटलीपुरोपान्ते जग्मतुः । तत्र वृक्षादिपरिमण्डितमेकं प्रोत्तुङ्गं प्रासादं वीक्ष्यान्तः प्रविश्य रूपलक्ष्मीमपश्यतां । तत्रैका सरसा वर्णिकाऽमरदत्तेन विधिघटितेव पाञ्चालिका दृष्टा । तद्रूपलावण्यादिभिर्मोहितो नैति पुरमध्ये । मित्रानन्दो भूयो भूयः कथनेन श्रान्तो जगौ—"किं पाषाणकन्यायां रतिं बद्ध्वा स्थितोऽसि ? आकाशरोमन्थनमिव निष्फलं" । अमरः प्राह—"हे मित्र ! इतः स्थानाच्चलामि चेत्तदा मम मृत्युर्भवेत्" । तच्छ्रुत्वा मित्रानन्दो भृशं रुरोद । अमरोऽपि तां विना स्थातुमक्षमो रुरोद । तावत्प्रासादकारकः श्रेष्ठी आययौ । तेनेदमुक्तं—"भो भद्रौ ! युवां किं रुदिथः ?" । मित्रानन्देन सर्वं प्रोक्तं, "अतो हे तात ! अस्मिन् संकटे क उपायो भावी ?" । श्रेष्ठी प्राह—"अस्याः कारकः शूरदेवः सूत्रकृत्सोपारकेऽस्ति" । सोऽवोचत्—"हे तात ! मन्मित्रपर्युपासनां करोषि चेत्तदा तत्र गत्वाऽहं पृच्छामि किमियं पुत्रिका निसर्गतश्चित्रिता ? वर्तमानमूलस्वरूपं दृष्ट्वा वा ? यदि तस्याः सद्भावस्तदा बन्धोः समीहितं पूरयिष्ये" । ततः श्रेष्ठिना तत्प्रतीकारेऽङ्गीकृतेऽमरोऽवदत्—"यदि तवापायं श्रोष्यामि तदा मेऽसवो यास्यन्ति" । इतरः स्माह—"द्विमास्यन्तर्यद्यहं नायामि तदा मित्रं नास्तीत्यवगन्तव्यं" इत्याश्वास्य सोपारके गत्वा प्राज्यने-

पथ्यं धृत्वा स्थपतेर्गृहे प्रययौ । तेनापि सत्कृत्यागमनकारणं पृष्टः प्राह—"मम देवकुलकरणेच्छा वर्तते, परं प्रतिकृतिः काचिद्दर्श्यतां" । सोऽब्रवीत्—"पाटलीपुरे मत्कृतप्रासादस्त्वया दृष्टोऽस्ति न वा?" । सोऽवादीत्—"दृष्टोऽस्ति, परं पाञ्चालिकास्वरूपं भवता स्वबुद्ध्या रचितं प्रतिच्छन्दं दृष्ट्वा वा?" । स जगौ—"अवन्तीनृपसुताया रत्नमञ्जर्याः प्रतिच्छन्देन सा कृता" । स प्राह—"सुदिन एष्यामि, त्वं सज्जो भवेः" । ततः सोऽवन्त्यां ययौ । तत्र गोपुरमध्ये देवकुलेऽवसत् । अत्रान्तरे इमामुद्घोषणां श्रुतवान्—"रात्रेश्चतुरो यामान् य इदं मृतकं रक्षेत् तस्मै दीनारसहस्रं दद्मः" । तन्मित्रानन्देनाङ्गीकृतं, तदा लोकैरित्थं शिक्षितः—"अत्र पुर उत्सूरे जाते गोपुरे स्थगिते कश्चिन्मृत्युमेति तच्छवं रात्रौ मारी भक्षयति, अतस्त्वं समर्थोऽसि यदि तर्ह्यङ्गीकुरु" । स प्राह—"किमेतन्महत्कार्यं वीराणां" । ततस्तस्मा ईप्सितधनार्धं शवं चार्पयित्वा "शेषं प्रभाते दास्यामि" इत्युक्त्वेभ्यो गृहेऽगात् । अथ रात्रौ तेन भूताद्युपसर्गात्तच्छवं रक्षितं, प्रभाते च स्वजनैस्तद्भस्मसात्कृतं, परं शेषधनं याचितमपि न दत्ते । तदा सोऽवदत्—"राजसमक्षं धनं गृह्णामि चेत्तदाऽहं वीराग्रणीर्भवेयं" । ततश्चारुवेषं विधाय राजवेश्यायाः सदनं ययौ । तया सत्कारः कृतः । तेन चत्वारि दीनाराणां शतानि दत्तानि । हृष्टाऽक्का स्वपुत्रीं राजवेश्यां प्राह—"अस्य महती सेवा कार्या" । ततो रात्रौ भोगसामग्रीं कृत्वा सुशय्यायां गतः स दध्यौ—"विपयासक्तानां कार्याणि न सिध्यन्ति" इति विचिन्त्याब्रवीत्—"हे भद्रे! एकं पट्टमानय, इष्टस्मरणं करोमि" । तया झटिति हेममयः पट्ट आनीतः । तत्रोपविश्य पद्मासनं निविडं कृत्वा स्थितः । स्त्रीकृता-

नेककामचिह्नान्यपश्यन् समग्रां रात्रिमुल्लङ्घ्य प्रभातेऽन्यत्र ययौ । द्वितीयापि रात्रिस्तथैवातिक्रान्ता । ततोऽक्का प्राह—"भद्र ! राज्ञामपि दुर्लभां मम पुत्रीं किं विडम्बयसि ?" सोऽवदत्—"समये सर्वं करिष्यामि, परं राज्ञो गृहे तव प्रवेशोऽस्ति न वा ?" । सोवाच—"मम पुत्री राज्ञश्चमरधारिणी, राज्ञः पुत्री रत्नमञ्जरी तु मत्सुतासखी वर्तते" । तच्छ्रुत्वा स राजवेश्यां प्राह—"हे भद्रे ! तर्हि तदग्रे त्वं कथय—यस्य गुणगणस्त्वया श्रुतः हे सखि ! जातानुरागया त्वया यस्य मुदा लेखः प्रेषितस्तस्यामरस्य सुहृदागतोऽस्ति" । अथ सा तस्या अन्तिकं गत्वोवाच—"हे सखि ! अद्याहं त्वत्प्रियोदन्तं निवेदितुमागताऽस्मि" । ततः स्मेरास्या साऽऽह—"कोऽसौ मम प्रियः ?" । सा ज्ञातगुणानखिलाँस्तस्यावोचत् । श्रुत्वा राजपुत्र्येवं दध्यौ—"नूनमपूर्वः कोऽपि धूर्तः, मम त्वद्यापि कोऽपि वल्लभो नास्ति, परमीदृशी येन कूटरचना कृता तं पश्यामि" । ततः स्माह—"हे सखि ! अमुना गवाक्षेण सोऽद्यानेतव्यो मम प्रियसंदेशवाचको लेखयुतः" । ततः स्वगृह एत्य वेश्यया सर्वं तस्योक्तं । सोऽपि रात्रावक्कादर्शितमार्गेण सप्त प्राकारानुल्लङ्घ्य कन्यावासगृहे गतः । अक्का च तद्वीर्यं शशंस पुत्र्या अग्रे । अथ राजपुत्री तमालोक्य तस्य धैर्यं निरीक्ष्य प्रियोदन्तलिखनचातुर्यं चावेक्ष्य रूपलावण्यजल्पनकलाकुशलं तं दृष्ट्वा स्तम्भितेव तस्थौ । तदा स तद्धस्ताद्राजनामाङ्कं कटकमुपाददे क्षुरिकया च वामजङ्घायां त्रिशूलं कृत्वा निर्ययौ । तद्गुणाक्षिप्ता सा दध्यौ—"नूनं नैष सामान्यो नरः, अतो मया । साधूकृतं यदेष न संभाषितः" । इति चिन्तापरा निशात्यये निद्रामवाप । अथ प्रभाते मित्रानन्दो राजसमक्षं पूत्चकार—"हे नृप ! अखण्डित-

शासने त्वयि सत्यमुक इभ्यो मम मार्ग्यं धनं न दत्ते, त्वं लोकपालोऽसि, दुष्टं निगृहाण"। ततो नृपेण स्वनरैः समाकारितः। सोऽपि ज्ञातव्यतिकरस्तस्मै धनं दत्त्वा नृपं प्रणम्य प्राह-"लोकाचारेण पितुर्विरहेण च द्रव्यदाने विलम्बोऽभूत्"। राज्ञा सत्यं मत्वा विसर्जितः। ततो राजा मित्रानन्दं पप्रच्छ—"त्वया रात्रौ शवं केनोपायेन रक्षितं?"। "हे नृप! रात्रौ भूतवेतालराक्षसशाकिनीव्यन्तर्यादयो नानाशस्त्रधरा आजग्मुः। मयाऽपि त्रियामान् यावद्भूतैः सह बहु युद्धं कृतं। सर्वे गुरुदत्तमन्त्रतो नष्टा ययुः। ततश्चतुर्थप्रहरे दिव्यांशुकाच्छादिताङ्गी अप्सरःसमाना नानाभरणभूषिता मुक्तकेशा कराला ज्वलनज्वालां वमन्ती कर्त्रिकाकरा मम पार्श्वे काचिदबलाऽऽययौ, प्राह च-'हे दुष्ट! अद्य त्वां भक्षयामि' इतिवादिनीं तामालोक्य मया चिन्तितं—नूनं सेयं मारी। ततो मयाऽपि तया सह घोरं युद्धं कृतं। बलात्तत्करं मोटयित्वा कटकं गृहीतं, पुनः क्षुरिकया नश्यन्ती वामोरौ लक्षिता"। तच्छ्रुत्वा विस्मितो राजा प्रोचे—"तत्कटकं दर्शय, यन्मारीहस्ताद्गृहीतं"। तेनापि तद्दर्शितं। राजा स्वनामाङ्कं कटकं दृष्ट्वा दध्यौ—"किमहो मम कन्यकैव मार्यभवत्? यत्तस्या भूषणं ह्यदः"। ततो देहचिन्तामिषेण नृपो गृहे गत्वा कन्यकां प्रसुप्तां भ्रष्टकरकटकां व्रणस्थाने कृतं पट्टबन्धं चावेक्ष्य वज्राहत इवाभवत्। "अहो! अनया मम वंशे कलङ्को दत्तः"। भूयो नृपो मित्रं प्रच्छन्नं प्राह—"हे भद्र! मम सुता मारी, नास्त्यत्र संदेहः, ततोऽस्या निग्रहं कुरु"। स प्राह—"हे नृप! युष्मत्कुले नैवं भवेत्"। "हे मित्र! सत्यं मे सुता मारी, यावत्सर्वनगरं न मारयति तावत्केनाप्युपायेनास्या निग्रहः कार्यः"। स आह—

"अवेक्षे तावत्सा साध्याऽसाध्या वा?" । नृपः प्राह—"स्वेच्छया गत्वा पश्य" । स कन्यापार्श्वे गतः, तयोपलक्षितः, आसनं दत्तं । तदनु स प्राह—"हे सुभ्रूः मया तव कलङ्को दत्तः, अतोऽत्रावासो नार्हस्तव, परं चिन्तां मा कुरु, त्वां सौख्यस्थले नेष्यामि" । सा तद्गुणायत्ता प्राह—"इमे प्राणास्तवायत्ताः । यतः—

अन्धो नरपतेश्चित्तं व्याख्यानं महिला जलम् । तत्रैतानि हि गच्छन्ति नीयन्ते यत्र शिक्षकैः ॥१॥"

इति श्रुत्वा मित्रस्तां जगाद—"नृपान्तिके मया सर्षपक्षेपे कृते त्वया फेत्कारा मोच्याः" । तयाङ्गीकृतं । ततः स नृपं प्राह—"स्वामिन्! सत्यं त्वदुक्तं, परमेकं वाहनं सज्जीकुरु । रात्रौ मन्त्रबलेन तां मारीमारोप्य त्वद्देशान्तं नयामि । अन्तरा यत्र सूर्य उदेष्यति तत्र सा मारी स्थास्यति" । ततो नीतेन राज्ञा तस्याग्रे वायुवेगा वडवा ढौकिता । संध्यायां केशेषु गृहीत्वा सा समर्पिता, तेनापि फेत्कारान्मुञ्चती ढकिता । तां वडवारूढां पुरस्कृत्य स चचाल । राजा गोपुरं पिधाय स्वगृहमागात् । सोऽपि मित्रपत्नीत्वान्मातुरिव तस्या भक्तिं चकार । इतश्चामरदत्तः पूर्णमासद्वयावधिश्चिताप्रवेशोत्सुको जातः । तत्समये काकतालीयन्यायेन झटित्येत्य तौ तस्य मिलितौ । तदैव तमेवाग्निं पौरांश्च साक्षीकृत्य पाणिग्रहणं कृतं । पौराः पुनः स्त्रीस्वरूपं मित्रधैर्यं अमरभाग्यं च प्रशशंसुः । अथ तस्मिन्नेव समये तत्पुराधीशेऽपुत्रे मृते प्रकृतिवर्गैः पञ्च दिव्यानि कृतानि । तेभ्यो राज्यं प्राप्तं, अमरदत्तो महामहेन राज्यस्वामी जातः । तेन मित्रो मन्त्रीकृतः । रत्नसारो नगरश्रेष्ठी कृतः । इत्थमखण्डशासनो राज्यं पालया-

मास। अथ राजकार्यरतोऽपि मित्रानन्दस्तद्भवोदितं कदापि न विस्मरति। ततो मित्रो नृपमवदत्—"तत्पुरप्रत्यासन्नत्वेन मे मनो दूयते, तन्मां दूरे प्रेषय"। राज्ञोक्तं—"हे सखे! यद्येवं तदा गच्छास्मीयसेवकैः सह वसन्तपुरे, परं प्रत्यहं सुखवार्ता प्रेषयेः" अथ स शुभदिने प्रयाणमकरोत्। मित्रे गते नृपस्तद्वियोगार्दितस्तस्य क्षेमवार्तां स्पृहयति, परं बहुभिरपि दिनैस्तस्य स्वरूपं किमपि न ज्ञातवान्। तेन भ्रान्तचित्तो राड् देवीमूचे—"हा! मित्रस्य काचिद्वार्ताऽपि न श्रुता"। सा प्राह—"हे प्राणेश! ज्ञानिगुरुं विना संदेहो न छिद्यते"। अत्रान्तरे वनपालेनैत्य नृपो विज्ञप्तः—"स्वामिन्! अत्रोद्याने ज्ञानभानुगुरवः समायासिषुः"। ततस्तस्य पारितोषिकं दत्त्वा पट्टराज्ञ्या सह नृपो महोत्सवपूर्वकं गुरुं नत्वा निषसाद। अनेकजनपृष्टसंशयापहरं तं गुरुं ज्ञानिनमध्यक्षं वीक्ष्य स्वसुहृदः कथां पप्रच्छ। गुरुराह—"हे राजन्! त्वत्समीपाच्चलितोऽसौ महादूरं गत्वा एकत्र गिरिनदीतटे तस्थिवान्। तत्र तव सेवका भोक्तुं निविष्टाः। अत्रान्तरेऽतर्किता चौरधाटी पपात। भिल्लैस्ते सर्वे पराजिताः। मित्रानन्दस्त्वेकाकी पलायितः क्वचिद्वटाधः सुप्तः, सर्पेण दष्टः, तत्रागतेनैकेन तपस्विना निर्विषीकृतः। पुनर्युष्मत्समीपमागच्छन्मार्गे तस्करैर्गृहीत्वा वणिगन्तिके विक्रीतः। स वणिक् पारसकूले गन्तुमना अवन्त्यामागत्य बहिः स्थितः। तत्र रात्रौ गतबन्धनो मित्रो नंष्ट्वा पुर्यां निर्धमनेनान्तः प्रविवेश। आरक्षकैर्दृष्ट्वा चौरवद्बद्धः। प्रभाते पूर्वोक्तवटवृक्षे उद्बद्धः स दध्यौ—"अहो! शववाक्यं सत्यं जातं। यतः—

यत्र वा तत्र वा यातु यद्वा तद्वा करोत्वसौ ।
तथापि मुच्यते प्राणी न पूर्वकृतकर्मणः ॥ १ ॥"

अन्यदा रममाणानां गोपानामुन्नतिकोत्प्लुत्य तस्यापि मुखेऽविशत् " । तन्निशम्य राजा मुहुर्व्यलपत् । राज्ञ्येवमाह—" हे देवर !

यदाहं भवताऽऽनीता तदाऽनेके विनिर्मिताः ।
उपायाः स्वविपत्तौ ते क्व गता हा महामते ॥ १ ॥ "

अथ दम्पती गुरुः प्राह—

शोकोऽवश्यं परित्याज्यो राजन् धर्मोद्यमं कुरु ।
येनेदृशानां दुःखानां भाजनं नोपजायते ॥ १ ॥

पुनर्नृपः पप्रच्छ "स्वामिन् ! मन्मित्रजीवः कुत्र गतावुत्पन्नः ?" । सूरिः प्रोवाच—"हे नृप ! त्वत्पत्नी-कुक्षौ सुतत्वेन गर्भे संजातः क्रमाद्राजा भविष्यति" । पुनर्दम्पती भवाणां पूर्वभवान् पप्रच्छतुः । सूरिराह—"हे राजन् ! इतो भवात्तृतीये भवे त्वं क्षेमंकराभिधः कौटुम्बिक आसीः । सत्यश्रीर्भार्याऽभूत् । चन्द्रसेनाभिधस्तयोः कर्मकरो बभूव । सोऽन्यदा क्षेत्रे कर्म कुर्वाणः कञ्चनाध्वगं परक्षेत्रे धान्यशिंबां गृह्णन्तं वीक्ष्यैवमूचे—"एनं महाचौरमुद्बन्धयत" । इति वचसा बद्धं कर्म न याति स्म । सत्यश्रियाऽपि स्वपुत्रस्त्रियं प्रतीत्थमुक्तं—"किं शीघ्रं निशाचरीव भुङ्क्षे ? लघुभिः कवलैः किं न भुङ्क्षे ? यथा गलरोधो

न स्यात्" । अन्यदा स्वामिनोक्तं—"जोः कर्मकर ! अद्यामुष्मिन् ग्रामे प्रयाहि"। सोऽवदत्—"अद्याहं बन्धूनां मिलने व्याकुलोऽस्मि" । कुपितेन तेनोक्तं—"स्वजनमिलनं तव मा जवतु" । अत्रान्तरे मुनिद्वन्द्वं तस्य गृहे समागतं । क्षेमंकरेण स्वजार्यायै प्रोक्तं महाहर्षेण—"प्रासुकमकृतकारितमन्नादिकं प्रतिलाजय" । तदा कर्मकरो दध्यौ—"धन्यावेतौ, याज्यां जक्तितो मुनी प्रतिलाजितौ" । अत्रान्तरे तेषां त्रयाणामुपरि क्षणिकाऽपतत्, तेन सममेव पञ्चत्वं गताः । स कर्मकरस्य जीवस्तव सखा मित्रानन्दोऽजूत् । स पान्यः शिम्बाग्राही विपद्य तद्वटे व्यन्तरो जज्ञे । एतं वीक्ष्य वैरं स्मृत्वा शवमुखेन जजल्प" । इत्यादि श्रुत्वा दम्पती जातिस्मरणं प्रापतुः । गुरूक्तं सत्यं मत्वा गृह आजग्मतुः । क्रमेण प्रवृद्धे तत्पुत्रे राज्यं दत्त्वा दीक्षां जगृहतुः । क्रमेण मोक्षं प्रापतुः ॥

क्रोधः स्वल्पोऽपि दुःखाय जवेत् पूर्वोक्तयुक्तिजिः ।
ज्ञात्वाऽवश्यं परित्याज्यो निर्वाणसुखमिक्षुना ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ सप्तदशस्तम्जे एकचत्वारिंशदधिकद्विशततमं २४१ व्याख्यानम् ॥

## अथ द्विचत्वारिंशदधिकद्विशततमं व्याख्यानं ॥ २४२ ॥

## ॥ अथ मानत्यागफलमाह ॥

मानत्यागान्महौजस्वी तत्त्वज्ञानी सुदक्षताम् ।
दधन् दधौ महाज्ञानं बाहुबली मुनीश्वरः ॥ १ ॥

स्पष्टः । श्रीऋषभदेवपुत्रः षष्टिवर्षसहस्रैः षट्खण्डां पृथ्वीं साधयित्वा भरतोऽयोध्यायामाजगाम । तत्र द्वादशाब्दिके चक्रिराज्याभिषेके वर्तमाने स भूप आगतानागतान् जनानवलोकयन् तत्र निजानुजाननायातान् विज्ञाय स्वबान्धवान् प्रति प्रत्येकं दूतान् प्रेषितवान् । ते गत्वा तानेवमाहुः—"भो भरतबान्धवाः ! यूयं तं भूपं भजध्वं" । ततस्तैरुक्तं—"वयमपि नाभेयसूनवः भरतोऽपि पितुः सूनुः किमस्मत्तः सर्वेभ्योऽधिको योऽस्माकं सेवां वाञ्छति । भो दूताः ! यूयं स्वस्थाने यात, वयं तातं पृष्ट्वोचितं करिष्यामः" । ततस्ते सुवर्णगिरौ जिनान्तिके गत्वाऽभ्यधुः—"भोः तात ! षट्खण्डेन राज्येनातृप्तो भवद्भिर्दत्तमस्माकं राज्यं ग्रहीतुं समीहते । भगवदाज्ञया वयं सर्वेऽपि संभूय तस्य राज्यं गृह्णीमः" । स्वामिना तान्मुग्धान् प्रति धर्मदेशना दत्ता—

संबुज्झह किं न बुज्झह संबोहि खलु पेच्च दुल्लहा ।
नो हूवणमंति राइओ नो सुलहं पुणरवि जीवियं ॥ १ ॥"

भगवद्देशनां श्रुत्वाऽष्टनवतिभरतानुजैर्व्रतं भेजे। तेषां राज्यानि भरतनृपो जग्राह। एकदा सेनापतिर्नरदेवं नत्वैवं व्यजिज्ञपत्—"स्वामिन्! बाहुबली भूपालस्त्वया न जितः तस्मिन्नजिते त्वया षट्खण्डं जितमप्यजितं, यतश्चक्रं शस्त्रागारे न प्रविशति"। इति श्रुत्वा वाग्मी दूतः तक्षशिलां प्रति प्रेषितः। स्तोकप्रयाणैर्गच्छन् बहुलदेशे ग्रामे ग्रामे नगरे नगरे बहुजनमुखतो बाहुबलिनो यशः शृण्वन् तक्षशिलायां पुरि समागतः। ततः प्रतिहारेण सुवेगो दूतो बाहुबलिन आज्ञया स्वर्णवर्णाभमन्तःसभं प्रवेशितः। तं भूपं नमस्कृत्य पुरः स्थितः। बाहुबलिना बान्धवनगरादिकुशलं पृष्टं, तदुत्तरं दत्त्वा प्राह—"भो नृप! तवाग्रजन्मा त्वन्मिलनोत्सुकस्त्वामाह्वयति। अतस्त्वमेकवारं तं नत्वा तस्याज्ञां शिरसि धृत्वाऽत्र समागच्छेः। यतो बान्धवोऽपि भरताज्ञां न मन्यते तर्ह्यस्याकिञ्चित्करः पराक्रम इति लोकापवादविध्वंसाय, अन्यथा तव राज्यसंशयो भविष्यति। यतः—

करालगरलः सर्पः पावकः पवनोद्धुरः।
प्रभुः प्रौढप्रतापश्च विश्वास्या न त्रयोऽप्यमी॥ १॥

निर्जरा अपि यं पर्युपासते तस्य सेवया हीनत्वं नास्ति"। इति श्रुत्वा भूपो बभाषे—"हे दूत! तव भूपो मां वीक्ष्य लज्जिष्यति, यतो बाल्यावस्थायां जलकेल्यवसरे पादं धृत्वा नभसि कन्दुकवदुच्छालितस्तदपि विस्मृतं! भो दूत! षष्टिवर्षसहस्रेषु पापैर्भृतस्य तव भूपस्यान्यः कोऽपि प्रायश्चित्तदायको नास्ति, अहमेवास्मि। शीघ्रं समानय बलपरीक्षायै"। ततः सुवेगः सभयः प्रत्यावृत्तः स्तोकैरेव दिनैः

स्वपुरीमागत्य भरतान्तिकेऽनुजस्य सर्वस्वरूपं गदितवान्। "बाहुबली शक्रेणापि जेतुं न शक्यते" इति श्रुत्वा भरतः सपादकोटिस्वपुत्रान्वितः ससैन्यस्तक्षशिलां प्रति चचाल। बाहुबल्यपि सम्मुखं समागात्। तस्य ज्येष्ठपुत्रः सोमयशा नृपः स एकोऽपि लक्षत्रयहस्तिहयरथानां जेता। अस्य त्रिलक्षतनयाः। तेषु कनिष्ठोऽप्येकोऽक्षौहिणीमितां सेनां जेतुं समर्थः। अक्षौहिणीमानं तु—२१८७० गजाः, २१८७० रथाः, ६५६१० अश्वाः, १०९३५० पदातयः इति। अथ चक्रिसैन्ये चतुरशीतिलक्षाणि निस्वानानां समकालमवादिषुः, अष्टादशलक्षकुन्तुभीनां निर्घोषाः षोडशलक्षाणि तूर्याणि। तानि श्रुत्वा सोत्साहा भटा मिथो युयुधिरे प्रत्यहं। एकदा बाहुबलिनो भक्तोऽनिलवेगो विद्याधरश्चक्रिसेनापतिमस्त्रैर्निर्जित्याकाशगत्या चक्रिगजसेनां व्यगाहत, कन्दुकानिव गजानुल्लाल्य पुनर्भूमौ पततो मुष्ट्या जघान। चक्री तमजय्यं वीक्ष्य चक्रं मुमोच। तद्वीक्ष्य भीतो नष्टः मेरुकन्दरसागरादिषु यत्र यत्र याति तत्र तत्र चक्रं पूर्वार्जितकर्मेव पृष्ठं न मुञ्चति, तदा विद्यया वज्रपञ्जरं निर्माय तत्र प्रविष्टः। तदा चक्रसुराः प्राहुः—"रे रे रङ्क! किं पौरुषं विरुम्बयसि ?"। ततः षण्मासान्ते जातामर्षो बहिर्निःसृतः, तावच्चक्रं तच्छिरश्छित्वा चक्रिहस्तेऽतिष्ठत्। एवं युध्यमानयोर्द्वादशवर्षाणि व्यतीयुः। एकदा चक्रिज्येष्ठात्मजः सूर्ययशा बाहुबलिसैन्ये दावाग्निरिव प्रससार, क्षणात् पितृव्यान्यर्णे आगतः। तं बली प्राह—"वत्स! त्वं लघुरसि, यदेवं मम सेनां विगाहसे तेनाहं हृष्टोऽस्मि, त्वया पुत्रेणास्माकं वंशः समुद्योतितः, परं त्रैलोक्येऽपि स कश्चिन्नास्ति यो मम क्रोधं सहते, तस्मान्मम दृष्टिं त्यक्त्वा दूरतो याहि"। स प्राह—"तात! अद्य त्वया विना को

मम सङ्ग्रामाभिलाषं पूरयति ?" इत्युक्त्वा धनुष्टङ्कारवं चकार । तदा सुराः संभूय परस्परयुद्धयुक्तं निषिध्य द्वयोर्बन्ध्वोः शिक्षामिति प्राहुः—"भो युगादीशपुत्रौ ! तातेनेदं विश्वं पालितं अधुना युवां किं संहर्तुं प्रवृत्तौ ? एतन्न युज्यते युवयोः । बलपरीक्षार्थमुभाभ्यामेवास्मदादिष्टैर्दृष्टि १ वाग् २ मुष्टि ३ बाहु ४ दण्डाख्य ५ लक्षणैः पञ्चभिर्युद्धैर्योद्धव्यं"। इति सुरवाक्ये द्वाभ्यामपि प्रतिपन्ने सुरनराः साक्षीभूय तस्थुः । तदा चक्रिसैनिका दध्युः—"अनेन सह द्वन्द्वयुद्धे शक्रस्यापि जयप्राप्तौ संदेहस्तर्हि अस्मत्स्वामी कथं जयं प्राप्स्यति ?" इति ध्यायतो भटान् वीक्ष्य चक्री स्वबलदर्शनायैकं महाकूपं कारयित्वा तस्योपकण्ठे स्थित्वा स्वस्य वामभुजं महालोहशृङ्खलाभिर्बद्ध्वा सर्वसैनिकान् प्राह—"यूयं सर्वेऽपि संभूय शृङ्खलाकर्षणेन मां गर्तायां क्षिपत" । तैः सर्वैः कर्षितोऽपि मनाग् न चचाल । यतश्चक्रिणं भरतोत्पन्नसर्वनरनारीगजाश्वादयः संभूयाकर्षणं कर्तुं तिलमात्रमपि न क्षमाः तर्हि सेनाभिः किं भवेत् ? । ततश्चक्री हृदयलेपकरणमिषेण स्वहस्तमाचकर्ष, तेन ते सर्वेऽपि शृङ्खलालग्ना लतालग्नाः पक्षिण इव लम्बन्ते स्म । इति पराक्रमं वीक्ष्य हृष्टाः साक्षिण इव दूरे तस्थुः । ततश्चक्रिभूपौ प्राग्दृष्टियुद्धार्थं संमुखं स्थितौ अनिमेषदृष्ट्याऽवलोकयतः स्म । ताम्रलोचनौ भयंकरावभूतां । ततो बाहुबलिमुखं भीषणाक्षं विलोकयतश्चक्रिणो लोचने बाष्पाकुले वेगात्प्रमिलिते । तत्सैन्यं सर्वं न्यग्मुखं जातं । ततो लज्जितं चक्रिणं स प्राह—"भ्रातः ! किमुद्विग्नोऽसि ? कुरु वाग्युद्धं मया सह" । इति तेनोक्तश्चक्री महाघोरं सिंहनादं चकार, तेन जातं बधिरं स्कन्धावारमण्डलं । ततः सामर्षो बाहुबली सिंहनादं चकार तेन सैनिकाः सर्वेऽपि

मूर्च्छिता इव बभूवुः। पुनरपि चक्री भूपश्च सिंहनादं दुःसहं चक्रतुः। तदा चक्रिणो ध्वनिः पूर्वाह्णच्छायेव दुर्जनसौहृदमिव यथाक्रमं हीयमानोऽभूत्। तेन विलक्षं चक्रिणं भूपः स्माह—"हे भ्रातः! मा विषीद, मया काकतालीयन्यायेन यदि जितं तर्हि किं जातं? इदानीं सज्जो भव मुष्टियुद्धाय" इति भूपेनोत्साहितः प्रोच्चैर्भुजास्फोटं कृत्वोत्प्लुत्यान्योऽन्यमाश्लिष्य भुजाभ्यां पीडयन्तौ जगर्जतुः। ततो भूपश्चक्रिणं करेण गृहीत्वा लीलया कन्दुकवदुच्चैराकाशे उदलालयत्। क्षणाददृश्योऽभूत्। तेन सैन्यद्वयेऽपि हाहारवः प्रसृतः। भूपश्चिन्तया दध्यौ—"यावदार्योऽयं भूमौ पतित्वा न विशीर्यते तावदन्तरिक्षादेव गृह्णामि" इति विचिन्त्य तद्रूपाकारौ करौ कृत्वोर्ध्वदृष्टिस्तस्थौ। चिरेण स आययौ। बलिना बाहू प्रसार्य धृतः। ततः क्रोधाध्मातश्चक्री तन्मूर्ध्नि मुष्टिघातेन तममूर्छयत्। भूपोऽपि चिरेण प्राप्तचैतन्यश्चक्रिणं हृदि मुष्टिघातं कृत्वा मूर्छां गमितवान्। क्षणाल्लब्धसंज्ञश्चक्री रोषारुणो दण्डेन भूपमूर्ध्न्यताडयत्, तेन मुकुटः शतखण्डः कृतः। क्षणं नेत्रे निमील्य भूपो लोहमयदण्डेन चक्रिसन्नाहं शकलीचकार। ततश्चक्री दण्डघातेन भूपं जानुप्रमाणं भूमौ मग्नीचकार। ततो निर्गत्यायसदण्डेन भूपेन निहतश्चक्री आकण्ठं भूमौ मग्नः। क्षणाच्चैतन्यं प्राप्य निर्गतो दध्यौ—"भूपैश्चक्री न जीयते" इतीयं शाश्वती स्थितिरस्ति, अनेनाहं पञ्चभिर्युद्धैर्जितः तर्हि मयि चक्रित्वं न हि" इति ध्यायतस्तस्य पाणौ चक्ररत्नमुपागतम्। तदा चक्री भूपं स्माह—"अद्यापि तव किञ्चिन्न नष्टं, ममाज्ञां मन्यस्व, नो चेदनेन चक्रेण यमातिथिर्भविष्यसि"। भूपः स्माह—"वाक्याडम्बरं वृथा किं वहसि? साम्प्रतमस्यापि बलं दर्शय" इत्यादि निर्भर्त्सितश्चक्री कोपाच्चक्रं

मुमोच, तत्तं प्रदक्षिणीकृत्य पुनश्चक्रिकरे ययौ। यतः सामान्येऽपि चक्रिगोत्रे चक्रं न प्रभवति, तर्हि तथाविधे चरमशरीरिणि कोऽवकाशस्तस्य ?। अथ बाहुबली मुष्टिमुत्पाट्य "चक्रं वा यक्षसहस्रं वा तदधिपं वाऽद्य चूर्णयामि" इति विचिन्त्य चक्रिणं प्रत्यधावत। पुनर्दध्यौ—"अनेनावश्यं वधो भावी ततो मां विश्वे षट्खण्डनाथहन्तारं वदिष्यन्ति जनाः, अतो धिग्मयाऽहङ्कृत्याऽनेकपापान्यार्जितानि। धन्यास्ते ममानुजा यैः पूर्वमेव तातपादसमीपे दीक्षा गृहीता, धिग्मामद्यापि पापरतं"। इति ध्यात्वा तेनैव मुष्टिना स्वमूर्ध्नि लोचं चकार। ततः "साधु साधु" इति वदन्तो देवास्तस्योपरि पुष्पवृष्टिं चक्रुः। ततश्चक्री तं निःस्पृहं वीक्ष्य लज्जानम्रास्यः स्वनिन्दां तत्प्रशंसां च कुर्वन्नुवाच—"हे बन्धो ! अहं तु पातकिनां मुख्योऽस्मि, त्वं तु कृपालूनां धुर्योऽसि। त्वयाऽहमनेकधा जितोऽस्मि, अधुना व्रतास्त्रेण रागादयो जिताः, अतो नास्ति त्रैलोक्येऽपि त्वदधिकः कोऽपि बलवान्, क्षमस्व ममापराधं"। अथ मुनिर्दध्यौ—"तातपार्श्वे गच्छतो मे पूर्वगृहीतव्रतानां बन्धूनां वन्दनादि कुर्वतो लघुत्वं स्यात्, ततः केवलं प्राप्य यास्यामि"। इति विचिन्त्य कायोत्सर्गं कृत्वा तस्थौ। अथ चक्री बाहुबलिज्येष्ठपुत्रं सोमयशसं पुरस्कृत्य बहुलदेशे जगाम। तदा तक्षशिलोद्याने सहस्रारं नानामणिरत्नमयं धर्मचक्राङ्कं प्रासादं वीक्ष्य प्रभुं प्रणम्य चक्रिणा तत्स्वरूपं पृष्टो भ्रातृव्यः स्माह—"पूर्वं श्रीतातो विहरन् सन्ध्यायामेकदाऽऽजगाम। तद्विज्ञाय भवदीयानुजेन ध्यातं—"इदानीं रात्रिर्जाता, प्रभाते महोत्सवैस्तातं वन्दिष्ये"। ततः सामग्रीं कृत्वा प्रत्यूषे तत्रायातः, तातमदृष्ट्वोच्चै रुरोद "धिगस्तु मां धर्मे विलम्बकारिणं, इदानीं तु पुनः क्व मे

तातदर्शनं ?" इत्यादि विलपन्नमात्यैर्बोधितो वालुकाप्रतिबिम्बितौ भगवत्पादौ नत्वा पुनस्तातभक्त्याऽमात्यं प्राह—"एतौ पूज्यौ तातपादौ मा कश्चिदन्यः स्पृशतु" अतोऽष्टयोजनविस्तृतं धर्मचक्रप्रासादमकारयत्" । इति श्रुत्वा स्तुत्वा चक्री तक्षशिलाराज्ये सोमयशसमभ्यषिञ्चत् । तस्य चतुर्विंशतिसहस्राणि राज्यः श्रेयांसप्रमुखा द्वासप्ततिसहस्राणि पुत्राश्चाभूवन् । अथ भरतः सर्वत्र षट्खण्डक्षोण्यां स्वाज्ञामयीं विधाय स्वपुरं प्रति प्रस्थितः । अथ मुनिर्निद्रातन्द्राहारविवर्जितस्तत्र ध्यानतत्परस्तस्थौ । तत्र तस्य मूर्ध्नि कर्णयोः कूर्चमध्ये च पक्षिणो नीडानि चक्रुः प्रावृषि दर्भाङ्कुराः पादतलं भित्त्वा निर्ययुः, लताश्च शरीरं वेष्टयामासुः व्याघ्रादयो दुष्टसत्त्वा अपि भद्रकत्वं प्रापुः । इत्थं संवत्सरान्ते तस्य ज्ञानोत्पत्तेरवसरं ज्ञात्वा मानत्यागार्थं श्रीयुगादीशो ब्राह्मीसुन्दर्यौ साध्व्यौ तत्र प्रैषीत् । ते तत्रागत्य वल्लीवितानान्तरितं तं कथञ्चिदुपलक्ष्योचतुः—"भो बन्धो बाहुबलिन् ! आवयोर्मुखेन श्रीतातपादास्त्वां समादिशन्ति मतङ्गजारूढेन केवलं कथं लभ्यते ? ततोऽवतर मतङ्गजादस्मात् । मतङ्गजारूढस्त्वं ज्ञानं वाञ्छसि चेत्तदा तक्षशिला कथं निवारिता ?" । इति श्रुत्वा स निर्ग्रन्थो दध्यौ—"अहो ! एते मम भगिन्यौ किमेवं जल्पतः ? सर्वथा मुक्तपरिग्रहस्य मम गजारोहणं कुतः संभवति ? अथवा ज्ञातमेतत् यतो मानगजारूढोऽहं इयन्तं कालं वृथैव कदर्थनां प्राप्तः, माने विद्यमाने कथं केवलावाप्तिः स्यात् ? ततो गुणाधिकान् पूज्यान् गत्वा नमस्करोमि" इति ध्यात्वा यावत् पाद उत्पाटयति तावदेव केवलज्ञानमुत्पन्नं । देवताम-

दत्तं यतिलिङ्गं धारयित्वा भगवत्समवसरणे गत्वा "नमस्तीर्थाय" इति जिनं प्रदक्षिणीकृत्य केवलि-सभायां निषसाद इति ॥

सत्यो हि बाहुबलिरेव महाबली स, षट्खण्डनाथमपि यः प्रथमं जिगाय ।
विश्वैककण्टकमतोऽपि च मानमल्लं, हत्वा महोदयसुखं परमं स्ववाप ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ सप्तदशस्तम्भे द्विचत्वारिंशदधिकद्विशततमं २४२ व्याख्यानम् ॥

---

## अथ त्रिचत्वारिंशदधिकद्विशततमं २४३ व्याख्यानं ॥

अथ मायापिण्डमाह—

भक्तादिहेतवे कुर्वन्नानारूपाणि मायया ।
साधोर्वञ्चयतः श्राद्धान्मायापिण्डः स उच्यते ॥ १ ॥

स्पष्टः । अत्रार्थे आषाढभूतिज्ञातं—यथा राजगृहे सिंहरथो नृपः । अन्यदा तत्रागतधर्मरुच्याचार्य-शिष्यो विविधविज्ञानी क्षपको लब्धिमान् गुरोरादेशं प्राप्यैकाकी पुरे गोचर्यां निःसृतः मध्याह्ने महर्द्धि-कर्माख्यनटगृहे गतः । तत्र नटपुत्रीभ्यां भुवनसुन्दरीजयसुन्दरीनाम्नीभ्यां कन्याभ्यां सुभव्यनिष्पन्न

एको मोदको दत्तः; तं मुनिर्गृहीत्वा गृहाद्बहिर्निःसृत्य दध्यौ—"एष एको मद्गुरूणां भावी" इति विचिन्त्यान्यरूपं यौवनपूर्णं तूर्णं तूर्णं विधाय पुनस्तद्गृह एत्य धर्मलाभो दत्तः। ताभ्यां मोदकमर्पयित्वा प्रतिलाभितः। तं लात्वा भूयः सोऽचिन्तयत् बहिस्तत्रैव प्रतोलीद्वारे समागत्य—"अयं द्वितीयो मम धर्माचार्याणां भावी" इति ध्यात्वा तृतीयं जराजर्जरमक्षणा काणं रूपं कृत्वा तृतीयं मोदकं जग्राह। "अस्मादुपाध्यायस्य" इति विचार्य कुब्जरूपेण चतुर्थमादाय "संघाटिकसाधोरसौ" इति कुष्ठिरूपं निष्पाद्य पञ्चमं संगृह्य "सतीर्थ्यस्यायं" इति संचिन्त्य स्वात्मार्थं द्वादशवर्षीयबालरूपेण षष्ठमुपादाय कृतकृत्यः स्वगुरुपार्श्वे आगतः। अथ तत्साधोश्चरित्रं गवाक्षस्थनटेन दृष्ट्वा चिन्तितं—"अहो! असौ भव्यो नटो भवति" इति तत्स्वरूपं पुत्रीभ्यां पत्न्यै च निवेदितं "अशनादिनाऽयं प्रलोभनीयः, सुवर्णपुरुषोऽयमस्ति, रूपपरावर्तलब्धिमानसौ तथोपचरणीयो यथाऽस्मद्गृहमायाति, अन्नादने रसलोभान्वितत्वादचिरेण फंदके (पाशे) पतिष्यति, मायाविमाया वीक्ष्या"। इत्युक्त्वा तमाकार्य यथेष्टं मोदकांश्च दत्त्वा "नित्यमत्रागन्तव्यं, युष्मत्प्रसादादत्र बहुतरं वर्तते" इति भणितं। ततः सोऽपि तत्रैव नित्यपिण्डं गृह्णन्नटपुत्रीकृतहावभावविलासहास्यलावण्यनेपथ्यनर्मोक्तिभिर्वशीभूतः, स रागदृष्ट्या तदाकृतिं सीमन्तं पदपार्ष्णिकां च पुनः पुनर्विलोकयति। तदा कन्याभ्यामिति विज्ञप्तः—"स्वामिन्! त्वद्रूपचर्यचातुर्यवीक्षणेनानुरक्ते आवामुभे कुमारिके अभूव, अस्मदङ्गव्याप्तस्मरज्वरव्यथां त्वं निर्णाशय, कृपां कुरु, करभोरुमुसमत्र चित्रशालायामर्कतूलतुल्यतूलिकायां वोभुज्यते, अतोऽत्रैव तिष्ठ, तादृशमोदकादीन् भुङ्क्ष्व, योऽध्यक्षसौ-

ख्यानि मुक्त्वाऽदृष्टप्रेत्यसुखानि वाञ्छति स मूढः"। ततः सोऽवक्—"अहं मद्गुरुं धर्माचार्यं चापृच्छ्यैष्या-मि"। ते ऊचतुः—"अथ त्वद्विरहव्यथासहनेऽक्षमे आवां, अतः सत्यं वचः प्रयच्छ, येनाधारेण घटिका-मुहूर्त्तादिकालं निर्गमयावः"। इति तच्चेष्टामिष्टां कृत्वा भ्रष्टचारित्रचेष्टः तदादिष्टवचनं दत्त्वा गुरुपार्श्वे समेत्येत्यूचे—"स्वामिन् पूज्य! शिशुभावतो गृहीतदीक्षेण मयाऽद्यापि किञ्चित् पञ्चेन्द्रियसौख्यं न दृष्टं, इदानीं ममोज्ञे नटकन्यके सुरसुन्दरीसमे संपृक्ते, तत्राहं गच्छामि, ममाज्ञां ददातु, एतत्पतद्ग्रहं रजोहरणं मुखपट्टीं च गृहाण" ततः सूरिणा ध्यातं—"अहो! मायापिण्डाहारग्रहणफलमिदं भवत्येव, यत उत्त-रगुणहानितो मूलगुणा विनश्यन्ति, परमसौ नटपुत्रीपाशतो निर्गत्यात्रागतोऽस्ति तेन किञ्चिदाकारतो ज्ञेयः, परं भ्रष्टसंयमचेतनयाऽसौ न वेत्ति यत्सावद्यवाग्निपिद्धा मुनयः कथं सावद्यप्रवर्तनाज्ञां प्रदास्यन्ति? परं विलोकयामि अस्य स्थैर्यं किं सर्वथा व्रततो भ्रष्टमथवा किञ्चिदपि न्यूनं!" इति ध्यात्वा सूरिर्ज-जल्प—"हे शिष्य! इन्द्रादिसौख्यं विहाय नटपुत्र्यङ्गसङ्गाभिष्वङ्गरतो भवसि त्वं तथापि मद्यमांसाशनं त्वया न विधेयं, एतद्द्वयोः प्रत्याख्यानं न त्याज्यं एतदाहारिणामपि सङ्गो न कार्य इति मद्वाक्यं प्रमाणी-कुरु"। स विनयावनम्रो भूत्वाऽवक्—"स्वामिन्! आजीवितव्यमिदं धारयिष्येऽहं"। ततो गुरुणा ध्यातं—"एतावतैवास्य महान् गुणो भावी, परं सर्वथा श्रद्धाविमुक्तोऽयं नास्ति, यतः स्वल्पमात्रविरतिसं-रक्षणान्मुनिगुणस्थानकाल्कर्मवशतः पतितस्याप्यस्योद्धारो भावीति"। ततः स चारित्रं त्यक्त्वा चरित्रर-सिको नटगृह आगत्योवाच तेभ्यः—"यूयं सर्वेऽपि मद्यमांसाशनं सर्वथा त्यजथ चेत्तदाऽहं स्थास्यामि,

नान्यथा" । ततो नटेन स्वपुत्र्यौ तस्मै दत्त्वा तद्वाक्यं स्वीकृतं । स ताभ्यां सह सौख्यान्यभुनक् । अथ नृपान्यर्णे ये ये नर्तकाः समायान्ति, तान् स्वकलया निर्जित्यानेकधनवसनान्युपार्ज्य श्वशुरगृहं पूरितं । तस्य श्लाघा नटकुले सर्वत्र महती जाता । तत्र तस्य सौख्यमग्नानि द्वादश वर्षाणि व्यतीयुः । अत्रान्तर एको नृत्यकृद्वादेऽनेकान्नृत्यकारकान् जित्वा तत्सङ्ख्यार्थं चतुरशीतिस्वर्णपुत्तलकानि पादे बद्ध्वाऽनेकधा श्रुतपूर्वापाढनायकवर्णनामसहमानो राजसभायामेत्य नृपमिति व्यजिज्ञपत्—" तव राजनटमाकारय, कलां प्रदर्श्य जयामि" । नृपेण स आकारितः । सोऽपि तत्रैत्य नटेन सह पणबन्धमित्यकरोत्—"योऽत्र न जयमावहति स स्वसर्वस्वं विहाय व्रजति" तद्वाभ्यां जनसमक्षं स्वीकृतं । अथाषाढः स्वगृहं एत्य समस्तस्वजनान् प्राह—"अहं तन्नटजयार्थं गच्छामि" । तदा तत्प्राणवल्लभाभ्यां प्रोक्तं—"कार्यसिद्धिं निष्पाद्य शीघ्रं समागच्छेः" । ततः स सामग्रीयुतस्तत्रागात् । अथ नटात्मजाभ्यां ध्यातं—"अहो ! बहवो वासरा व्यतीयुर्मद्यमांसाशनं विना, तदद्य स्वैरं भुञ्जमहे, भर्ता तु तेन सह वादलीनः षण्मासान्ते समेष्यति" । ततस्ताभ्यां मद्यमाकण्ठं पीतं, तेनोन्मत्ते बभूवतुः । प्रथमं तेन नटेन कला दर्शिता, तत आषाढो हेलयाऽनेककलाभिस्तं जितवान् । तेन स निर्मदीभूय स्वलदर्मा चतुरशीतिपुत्तलकानि च मुक्त्वा सलज्जः प्रणष्टः । तदा शीघ्रं स स्वगृहे समेतः, मदोन्मत्ते दुर्गन्धाढ्ये मक्षिकाव्याप्तास्ये ते उभे वीक्ष्य दध्यौ—"धिग्धिङ्मां अलीकगृहभूतायामनेकमक्षिकाचुम्बितास्यायामेतादृश्यामहमन्धीभूय द्विधाऽपि पतितः' । इत्यादिवैराग्यपरो गुरुवचनं संस्मृत्याट्टालिकाउत्तीर्य सर्वेषां प्राह—"अनेकपापमन्दिरं सुन्दरीचरित्रं विचित्रं

वीक्ष्य मोहमग्नेन चारित्ररत्नं हस्तागतमपि न परीक्षितं । तथा सीमन्तिनीनां सीमन्तः सीमन्तप्रस्तरदायक इति निष्कारणजगद्वत्सलजिनवचनमज्ञानिना मया व्यर्थं विहितं । इदानीं चरित्रशब्दस्याद्याक्षरं द्वितीयमात्रायुक्तं करोमि, प्रागादिवर्णो मात्रया हीनः कृतस्तन्नार्हं" । इत्युक्तवन्तं तं भयेन प्रणष्टमद्यविकारे ते उभे नत्वा दीनास्ये साश्रुनेत्रे ऊचतुः—"स्वामिन् प्राणेश ! दास्योरेकमपराधं क्षमस्व, किमत्राबालायौवनं व्यर्थं करोषि ?" । स प्राह—"भोगाशाऽनन्तशो भुक्ताऽपि परमात्मपथावाप्तिं विना न जरां समेति" इत्यादिबहुधाधर्मवाणी तेन सम्यगुदिताऽपि न ते धर्मं किञ्चिदवापतुः, प्रत्युत धनं जीवितोपायं याचितं ताभ्यां "एतद्दत्त्वा व्रज, अन्यथा न हि" । तत आषाढः सिंहरथनृपान्तिके गत्वाऽवक्—"भो नृप ! तव चक्रवर्तिसंबन्धि नाटकं दर्शयामि" । नृपः प्राह—"सज्जो भव" । अथ सप्ताहेन भरतचक्रिनाटकं नवमकरोत् । ततो नाट्यप्रारम्भे पञ्चशती राजकुमाराणां सज्जिता, कथितं च—"अहं यत्करोमि भवद्भिरपि तदेव करणीयं । ततः स्वयं भरतीभूय चक्रोत्पत्तिषट्खण्डसाधनं कृत्वा द्वात्रिंशत्सहस्रमुकुटबन्धनृपाः कृताः चतुरशीतिलक्षा हयगजरथाश्च निर्मिताः, षण्णवतिकोटिभटान्वितः षट्खण्डान् विजित्य विद्याधरस्त्रीरत्नं परिणीय ऋषभकूटेऽभिधानं लिखित्वा एकलक्षद्विनवतिसहस्रस्त्रीपरिवृतो गृहे समेतः राज्याभिषेकः कृतश्चेत्यादि सर्वं कृत्वा क्रमेणादर्शभुवने गतः, तत्र चाङ्गुलीयकरत्नपातात्स्वयमेव भरतभावनया लब्धकेवलालोको गृहीतद्रव्यलिङ्गो विहितपञ्चमुष्टिलोचः ततः स राजादीन् संबोध्य पात्रीकृतराजसुतपञ्चशत्याः प्रदत्तव्रतो भव्यलोकमबोधयत् । ततश्चक्रिनाट्यार्थं समूहीकृतानेकरत्नादिकं तेन-

नटेन गृहीतं, आजीवितं निःस्वं गतं। अथ स मुनिस्तैः साधुभिः सहान्यत्र विजहार, गुरूणामपि वन्द्योऽभूत्। एतत्स्वरूपं श्रुत्वा गुर्वादयः पुनः पुनर्मस्तकं धूनयन्ति—"अहो! देवादयश्चक्रीशर्द्धितुल्यतां तन्वन्ति बाह्यस्वरूपाण्यभेदेन दर्शयन्ति तत्र नाश्चर्यं, अनेन तु बाह्यस्वरूपं तादृशं विधायान्तः किमपि तदभेदेन निष्पादितं तन्महदाश्चर्यम्॥

मायाशनाद्भ्रष्टमना हि चैकया, शुद्ध्या समुद्धारित (तः) बाधकस्थले।
प्रारब्ध(ब्धे) नाट्ये भरतेशनामके, चित्रस्वरूपं प्रकटीचकार तत्॥ १॥

॥ इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ सप्तदशस्तम्भे
त्रयश्चत्वारिंशदधिकद्विशततमं २४३ व्याख्यानम्॥

## अथ चतुश्चत्वारिंशदधिकद्विशततमं २४४ व्याख्यानं॥

अथ लोभोऽनर्थकृदित्याह—

पुमाननर्थमाप्नोति लोभक्षोभितमानसः। यतो लोभपराभूतः सागरः सागरेऽपतत्॥ १॥
अतिलोभो न कर्तव्यो लोभो नैव च नैव च[1]। अतिलोभाद्विनष्टात्मा सागरः सागरं गतः॥ २॥

---

१ 'लोभं नैव परित्यजेत् इति वा पाठः।'

स्पष्टौ । ज्ञातं चेदं—सागरतीरवर्तिनि ध्यानसागरनाम्नि नगरे चतुर्विंशतिकोटिसुवर्णस्वामी सागरनामा श्रेष्ठी, स च कृतान्त इव क्रूरदृष्टिः, कितव इव विहितविश्ववञ्चनः, काकपाक इव कठोरवचनः, सर्प इव कुटिलगतिः, पामर इव कलहमतिः । तस्य चत्वारः पुत्राः । तेषां वध्वश्चतस्रः । कालेन श्रेष्ठिभार्या परासुरभूत् । श्रेष्ठी कृपणत्वात् कृष्णतरलितचित्तवृत्तिर्गृह एव तिष्ठति । तद्दृष्टौ यः कोऽपि गृहजनो भव्यभोजनं सुवस्त्रपरिधानं स्नानदानादिकं च कुरुते तेन सहाहर्निशं कलहं विदधाति का वार्ता भिक्षाचराणां ? काकादिभिरपि त्यज्यते तस्य द्वारं । पोष्यापोषकगृहिणां लोकाचाररहितत्वेनायशः शोभामहिमादिहानिश्च । यतः—

वृद्धौ मातापितरौ साध्वी भार्या लघूनि शिशूनि च । अप्युपायशतं कृत्वा पोष्याणि मनुरब्रवीत् ॥ १ ॥

सागरश्रेष्ठिगृहे सकलस्वजनाः सीदन्ति । पुत्रवध्वः स्वच्छन्दवृत्त्या श्रेष्ठिनि सुप्ते रात्रौ भुञ्जते क्रीडन्ति च । एकदा नभसि व्रजन्त्येका योगिनी गवाक्षे तस्थुषीः श्वशुरवासे श्वश्रूराहित्येन म्लानमुखास्ताः स्नुषा अवलोक्य कौतुकेन तासां पुरस्तादुत्तीर्णा । ताभिश्च गोत्रदेवीव वन्दिता मोदकादिदानैश्च भृशं तोषिता सा योगिनी पाठसिद्धं नभोगतिविद्यामन्त्रं दत्त्वा पक्षिणीवाकाशमुत्पपात । एकदा निशि पत्यादिषु सुप्तेषु ताः स्नुषास्तेन मन्त्रेणाधिवासितं काष्ठमारुह्य रत्नद्वीपं गताः, सर्वत्र क्रीडां कृत्वा पश्चाद्रात्रौ समागत्य तत् काष्ठं यत्र तत्र प्रोज्झ्य सुप्ताः । एवं सर्वदा रात्रौ कुर्वन्ति । अन्यदा पशुबन्ध[...]हादिचिन्ताकारिणा कर्मकरेण काष्ठस्य यत्र तत्र गमागमकारणं जिज्ञासुना रात्रौ प्रच्छन्नवृत्त्या विलोकितं, ज्ञातं वधूनां

चरित्रं, चिन्तितं च—"कल्ये विलोकयिष्यामि एताः क्व व्रजन्ति ?"। ततो द्वितीयदिनसन्ध्यायां सर्वं स्वकार्यं कृत्वा तत्र शुषिरे काष्ठे प्रविश्य स्थितः। रात्रौ काष्ठं पूर्ववच्चलित्वा गतं स्वर्णद्वीपे। चतस्रोऽपि वध्वो वने भ्रमन्ति। कर्मकरोऽपि काष्ठाद्बहिर्निर्गत्य सर्वत्र सुवर्णं पश्यन् विस्मितः वधूसमागमावसरं कियत्सुवर्णं गृहीत्वा पूर्वरीत्या शुषिरे प्रविष्टः। आगतास्ताः, मन्त्रशक्त्योत्पपात दारु, क्षणं स्वस्थानमागताः। एवं कियति काले गते कर्मकृत्स्वर्णबलेन गृहकर्म सम्यग्न करोति, श्रेष्ठिनः संमुखं वक्ति। श्रेष्ठिधूर्तेन चिन्तितं यदनेन किमपि लब्धं मद्गृहात्। एकदा रहसि ज्ञापितः श्रेष्ठिना तथा यथा तेन सर्वोऽपि व्यतिकरो जनराजीर्णः प्रकाशितः। "अद्याहं यास्यामि, कदापि त्वया कस्यापि न वाच्यं" इति कर्मकरं प्रज्ञाप्य रात्रौ प्रच्छन्नः काष्ठशुषिरे स्थितः। पूर्वरीत्या काष्ठं स्वर्णद्वीपं प्राप्तं। निर्गतः श्रेष्ठी। दृष्टा सर्वापि भूमिः स्वर्णमयी। लोभाकुलेन भृतं काष्ठशुषिरं, स्वयं गात्रं संगोप्य ( संकुच्य ) स्थितः, किञ्चित्स्वर्णमुत्सङ्गेऽग्रहीत्। ततः वधूद्वयं काष्ठोपरि तिष्ठति, द्वयं च वहति इति व्यवस्थया पश्चादागच्छन्तीनां तासां महाभारो जातः। यावता समुद्रमध्ये समायातास्तावच्छ्रान्ताः कथयन्ति परस्परं—"एतत्काष्ठं त्यक्त्वा जलोपरि यत्काष्ठं तरति तद्गृह्यते"। एतच्छ्रुत्वा मध्यस्थः श्रेष्ठी ब्रूते—"हे वध्वो ! अहं मध्येऽस्मि, न त्याज्यमेतत्"। तान्निरुक्तं—"चतुर्विंशतिकोटिस्वामिनस्तव किं न्यूनं यदत्र समेतोऽसि ? त्वत्पापं फलितं" इत्युक्त्वौषधैर्विना व्याधिर्गच्छतीति मत्वा, ससागरं तत्काष्ठं सागरान्तः प्रक्षिप्यान्यकाष्ठाधिरूढास्ताः स्वावासे समेताः। सागरान्तः पतितः सागरोऽपि द्विधा नीचैर्ययौ।

लोभाभिभूतान् प्रभवन्ति जीवान्, दुःखान्यसङ्ख्यानि पदे पदेऽपि ।
तृष्णा हि कृष्णाहिवधूरिवोग्रा, निहन्ति चैतन्यमशेषमाशु ॥ १ ॥

यतः—वामदेवेन मित्रेण रूपदेवो वनान्तरे । घोरनिद्रावशीभूतो लक्षलोभेन मारितः ॥ १ ॥

अथ सर्वेषां पापानां जनको लोभ एवेत्याह—

जनकः सर्वदोषाणां गुणग्रसनराक्षसः । कन्दो व्यसनवल्लीनां लोभः सर्वार्थबाधकः ॥ १ ॥

कण्ठ्यः । भावार्थस्तु संबन्धेन ज्ञेयः—पृथ्वीपुरे शुभंकरविप्रः । तस्य भार्या गुणवती जैनमतधर्ममर्मज्ञाऽभूत् । एकदा स विप्रः पठनार्थमन्यत्र देशे गतः । तत्र वेदपुराणालङ्कारग्रन्थव्याकरणतर्कसाहित्याभिधानकोशादिशास्त्राणि अधीत्य पदे पदेऽनेकवादिनो जित्वा जितकाशिः सन् स्वगृहे समेतः शास्त्रभृत्वाडम्बरं सर्वेषां पुरोऽत्यन्तं दर्शयति । तदा परमार्हती तद्भार्या दध्यौ—"अनेन मिथ्याशास्त्रमेकान्तवादमग्नमधीतं, परं स्याद्वादमार्गाज्ञनरो वस्तुषु योग्यायोग्यविवेचनं न जानाति, अतोऽहं पृच्छामि" । इति ध्यात्वा साऽपृच्छत्—"हे स्वामिन् ! सर्वेषां पापानां जनकः कः ? तदुच्यतां" । विप्रेणोक्तं—"हे भार्ये ! शास्त्राण्यवलोक्य कथयामि" । ततो यावच्छास्त्रमधीतं तावत्सर्वं विलोकितं पुस्तकन्यस्तं, परं पापस्य पिता न निर्गतः । ततो विप्रः खिन्नो भार्यां प्राह—"शास्त्रे त्वत्प्रश्नं नास्ति, त्वयैतत्कुतः श्रुतं ?" । साऽऽह—"मया तु मार्गे व्रजन्त्या जैनमुनिमुखत इत्थं पूर्वं श्रुतं यत्सर्वेषां पापानां जनक एकोऽस्ति अतस्तन्नाम पृच्छामि युष्मभ्यं" । विप्रः प्राह—"तत्र गत्वा पृच्छ्यते, निःसंदेहत्वमाप्यते" । स साध्व-

न्तिके गत्वा स्थितः। गीर्वाणभाषया कृतप्रश्नानां सम्यगुत्तरं प्राप्य हृष्टः, पुनः पप्रच्छ—"स्वामिन्! पापस्य जनकाह्वानं कथय"। गुरुराह—सन्ध्यायामत्रागन्तव्यं, तन्नाम कथयिष्ये"। स गतः। अथ गुरुणा ध्यातं—"नूनमेषोऽस्य भार्यया प्रतिबोधार्थं प्रेषितोऽस्ति, अत उपायेन बोधयामि"। ततो गुरुणैकस्मै श्राद्धाय भक्ताय प्रोक्तं—"द्वे रत्ने अमूल्ये गृहतो मम प्रेषय, कार्यमस्ति, अन्यच्च श्वपाकहस्ताभ्यामेकं खरशवमानाय्योपाश्रयतः शतहस्तेभ्यो बहिरेकान्तस्थले स्थाप्यं"। श्राद्धेन तत्कार्यं शीघ्रं कृतं। ततः सन्ध्याकाले समागते विप्रे भद्रं तं प्रति गुरुराह—"एकमस्मत्कार्यं त्वं करोषि चेत्तदा इदं रत्नं ददामि, कार्ये कृते पुनर्द्वितीयं च"। सोऽपि श्रुत्वा रत्ने दृष्ट्वा हृष्टः प्राह—"पूज्य! कथय कार्यं"। मुनिः प्राह—"एतदुपाश्रयाङ्गणे एकं खरस्य शवं पतितमस्ति, तस्मिन्नत्रस्थे सति अस्माकं स्वाध्यायादिधर्मकार्येऽन्तरायः स्यात्, अतस्तदुत्पाट्य बहिः प्रदेशे निक्षिप"। तेनाऽपि ध्यातं—"अन्धकारे प्रसृते साम्प्रतं विप्रं वेदपारगं को जानाति? अतः स्वार्थं साधयामि"। ततः श्वपाकसदृशं वेषं विधाय तद्भस्मकर्णमृतकं स्कन्धे निधाय यज्ञोपवीतं संगोप्य बाह्यप्रदेशे परिष्ठाप्य शीघ्रं स्नात्वा च समागतः। गुरुं प्राह—"स्वामिन्! मया तत्कृतं, युष्मद्वाक्यं स्वयं पालयत"। सूरिणा द्वे रत्ने दत्ते। पुनर्गुरुं प्राह सः—"हे भगवन्! तदुत्तरं प्रकाशय"। सूरिः प्राह—"अद्यापि त्वया न ज्ञातं?"। स दध्यौ सुलभबोधित्वादनेकशास्त्रज्ञत्वात्सम्यग्विचारेणोपपन्नः—"अहो! अहं विप्रो ब्रह्म जानातीति ब्राह्मणः गायत्रीजापकृदपीदृशीं निन्द्यदशां लोभाभिभूतः प्राप्तः। यदुक्तं विद्यते धर्मशास्त्रादिषु—

लोभश्चेदतिपापकर्मजनको य(त)द्यस्ति किं पातकैः,
सत्यं चेत्तपसाऽपि किं शुचि मनो यद्यस्ति तीर्थेन किम् ।
सौजन्यं यदि किं निजैश्च महिमा यद्यस्ति किं मण्डनैः,
सद्विद्या यदि किं धनैरपयशो यद्यस्ति किं मृत्युना ॥ १ ॥

ततः स्वगृह एत्य भार्यां प्राह—"हे भार्ये ! जैनसूरिणाऽहं सम्यग्बोधितः, एष धर्मो लोकोत्तरः सर्वोत्तमश्च, अजितेनैकेन लोभेन सर्वं व्यर्थं, लोभग्रस्तः सर्वाणि पापानि करोति"। ततः स गुरुसमीपं गत्वा नत्वा च विज्ञप्तिं चकार—"स्वामिन् ! मम ज्ञानादिरत्नत्रयं युष्मत्प्रसादेन प्राप्तं इत्यादिना गुरुं प्राशंसत् ॥

लोभनिग्रहसमो न हि धर्मो, लोभसंग्रहसमं न हि पापम् ।
निःस्पृहेण गुरुणा हितयुक्त्या, स्त्रीनियुक्त(क्तः)प्रतिबोधित(तः)विप्रः ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ सप्तदशस्तम्भे चतुश्चत्वारिंशदधिकद्विशततमं २४४ व्याख्यानम् ॥

# पञ्चचत्वारिंशदधिकद्विशततमं २४५ व्याख्यानम् ॥

अथ लोभविपाकमाह—

आरभ्यते पूरयितुं लोभगर्तो यथा यथा । तथा तथा महच्चित्रं मुहुरेष विवर्धते ॥ १ ॥

अनन्ता भोजनाच्छादविषयद्रव्यसंचयाः । भुक्तास्तथापि लोभस्य नांशोऽपि परिपूर्यते ॥ २ ॥

स्पष्टौ । अत्रार्थे सुभूमचक्रिणो ज्ञातं—स्वर्गाद्द्वौ देवौ सुहृदौ विश्वानरधन्वन्तरिनामानौ एकः आप्तो[1]ऽपरश्च तापसभक्तः स्वस्वधर्मं वर्णयन्तौ धर्मपरीक्षार्थं मृत्युलोके आगतौ । तदा मिथिलेशपद्मरथो राज्यं त्यक्त्वा वासुपूज्यजिनान्तिके दीक्षां लात्वा मार्गे गच्छति, तं वीक्ष्यानेकभरसान्नादिना लोभितोऽपि क्षुधार्दितोऽपि न चचाल । ततोऽध्वन्येकस्मिन् कण्टकास्तीक्ष्णा द्वितीयस्मिन् भेकयश्च विकुर्विताः । तृतीयमार्गाभाव ईर्यासमितिपरश्चरणयो रुधिरस्रावे उत्पन्नेऽपि कण्टकाकुलमार्गं न जहौ । ततो गीतनृत्यरम्यादिरूपैः क्षोभितोऽपि न स्खलितः । ततो नैमित्तिकस्वरूपाणि कृत्वाऽऽहुः—"भो मुने ! वयं त्रिकालज्ञा जानीमो यत्त्वदीयमायुर्बह्वस्ति, अतो यौवनफलं भोगान् भुक्त्वा वार्धके तपः कुर्वीथाः" । ततो व्रती जगौ—"यद्यायुर्बहु तदा चिरकालं चारित्रं पालयिष्ये, भोगस्पृहा अनन्तशः कृताः, अथ यावज्जीवं तस्य स्पृहा नास्ति" । ततस्तौ जिनशासनं प्रशशंसतुः । अथारण्ये जटी जीर्णतापसो जमदग्निनामा

१ गुरुपर्याय आप्तशब्दोऽत्र पुस्ते.

निरं तपस्तपन् ध्यानमग्नोऽस्ति । तत्पार्श्वे आगत्य तत्कूर्चे चटकचटकीरूपं कृत्वा स्थितौ । चटकः प्राह स्वां प्रियां प्रति नृवाचा—"अहं हिमवन्तं यामि कतिचिद्दिनान्तर एष्यामि"। चटकी प्राह—"तत्र कयाचित्सह रागः स्यात्तदाऽहं किं कुर्वे प्रियभ्रष्टा ?" तदा तेन गोहत्यादिशपथाः कृताः, तथाऽपि सा स्माह—चेदहं नायामि तदा एतदृषिपापेन लिप्ये ईदृशं शपथं करोषि चेत्तदा गच्छ । तच्छ्रुत्वा रुष्टेन पक्षितर्जनार्थं करौ कूर्चे प्रसारितौ "अरे पक्षिणौ ! अहं कथं पापी ? ब्रूतं" । तावूचतुः—"हे तपोनिधे ! कोपं मा कृथाः, आत्मशास्त्रं पश्य । यतः—

अपुत्रस्य गतिर्नास्ति स्वर्गो नैव च नैव च । तस्मात् पुत्रमुखं वीक्ष्य सर्वकार्याणि साधयेत् ॥ १ ॥

त्वमप्यपुत्रोऽसि, अतस्ते कथं गतिः ?" । इति श्रुत्वा स क्षुभितस्तपांसि हित्वा कोष्ठकनगरे जितशत्रुनृपपार्श्वे गत्वा कन्यां ययाचे । राजाऽऽह—"मम शतमिताः सुताः सन्ति, या त्वां समीहते तां गृहाण" । ततः कन्यान्तःपुरे गतः । कन्याभिरसंस्कृताङ्गं तं वीक्ष्य थूत्कृतं । ततो रुष्टेन तेन सर्वा अपि ताः कुब्जीकृताः । ततः पश्चाद्वलमानेनाङ्गणे रेणुमध्ये एका पुत्रिका मुग्धा क्रीडन्ती दृष्टा । तस्या बीजपूरे दर्शिते तया पाणिस्तत्र प्रसारितः । तत "इयं मां वाञ्छति" इत्युक्त्वोत्पाट्य लात्वा गतः । राज्ञा शापभीत्या सहस्रगोकुलदास्यादियुता सा दत्ता । तदनु नृपप्रार्थनया तेन ताः सज्जीकृताः । वन आश्रमं कृत्वा सहस्रशो लालिता यौवनं प्राप्ता । तस्याः पाणिग्रहणं कृतं । ऋतुकाले चरुद्वयं ब्रह्मक्षत्रियजनकं साधयित्वाऽर्पितं रेणुकया क्षत्रियचरुर्भक्षितः । ब्रह्मचरुर्हस्तिनापुरेशानन्तवीर्यस्य भार्याया: स्वभगिन्याः

प्रेषितः। रेणुका रामं प्रसूते स्म भगिनी कृतवीर्यं च । अत्रान्तरे एको विद्याभृदतिसारी तत्रागतः। रामेण तस्य समाधिः कृता। तेन परशुविद्या दत्ता। रामेण साधिता । परशुराम इति प्रसिद्धिर्जाता। देवताधिष्ठितं कुठारं लात्वा भ्रमति। एकदा रेणुका भगिन्या मिलनार्थं गता। तत्र भगिनीपतिना साकं सङ्गोऽभूत् तेन पुत्रो जातः। रामेण कुशीलां स्वमातरं ज्ञात्वा सुतयुता माता मारिता । ततोऽनन्तवीर्येण रुष्टेन तदाश्रमो विनाशितः। रामेण परशुना स हतः। तद्राज्ये कृतवीर्यस्तत्परप्रकृतिवर्गैः स्थापितः। तेन पितुर्वैरनिर्यातनार्थं जमदग्निर्हतः। रामेण कृतवीर्यं हत्वा तद्राज्यं लब्धं । तदा कृतवीर्यस्त्रैका सगर्भा राज्ञी नंष्ट्वा तापसाश्रमे गता। तैरपि प्रच्छन्नं राज्ञः स्त्रियं मत्वा भूमिगृहे रक्षिता । तावता रामेण क्षत्रियोपरि रुष्टेन सप्तकृत्वः पृथ्वी निःक्षत्रिया कृता। तेषां दंष्ट्रा लात्वा स्थालं भृत्वा सभायां स्वसमीपेऽस्थापयत्। अथैकेन नैमित्तिकेन रामस्य पूर्वमुक्तमस्ति—"येन पुरुषेणागतेन तन्निरीक्षितेनेमा दंष्ट्राः क्षैरेयीरूपा भविष्यन्ति, तां च यः खादिष्यति तत्कराभ्यां त्वन्मृत्युः"। ततस्तेन दानशाला कारिता, तत्र सिंहासने दंष्ट्रास्थालं मुक्तमस्ति एकदा परशुरामः क्षत्रियवधार्थं भ्रमति, यत्र यत्र क्षत्रियस्य वासोऽस्ति तत्र तत्र परशुतो ज्वलनज्वाला निर्गच्छति, यत्र तया राजस्त्रिया गर्भः प्रसूतः भूमिमध्य उत्पन्नत्वात्सुभूम इति नाम दत्तं तत्र परशुमध्यतः पुनः पुनर्ज्वाला निःसरति, तदा परशुपतिना तापसाः पृष्टाः—"युष्मदाश्रमे कोऽपि क्षत्रियो विज्ञायते"। तेऽभ्यधुः—"वयं तापसाः क्षत्रिया एव"। ततः स

स्वपुरमेत्य राज्यं चकार । अत्रान्तरे वैताढ्ये मेघनादविद्याभृता नैमित्तिकाः पृष्टाः—"मत्पुत्र्याः को वरो भावी ?" । ते प्राहुः—"सुभूमो भविष्यति" । ततस्तेन स्वपुत्री भूमिगृहस्थस्यैव तस्य परिणायिता । अन्यदा सुभूमस्तत्रस्थो मातरं पप्रच्छ—"हे मातः ! पृथ्वी एतावत्येवास्ति ?" ततो माताऽवक्—"वत्स ! त्वत्पिता परशुरामेण हतः, अधुना स हस्तिनापुरराज्यं करोति तद्भयादावामत्र स्थितौ" । इति श्रुत्वा स रुष्टो मेघनादयुतस्तत्रायातः । तद्दृशा दंष्ट्राः सर्वाः परमान्नत्वं प्राप्ताः । तां क्षैरेयीमशितुं लग्नः । रामरक्षपाला हन्तुं धाविताः । मेघनादेन त्रासिताः । एतद्वृत्तान्तं श्रुत्वा परशुकरो हन्तुं शीघ्रं स्वयमागतः । सुभूमेन तदुपरि स्थालं भ्रमयित्वा मुक्तं, तच्चक्रं देवाधिष्ठितं जातं, तेन स पञ्चत्वं प्राप । देवैः सुभूमोपरि पुष्पवृष्टिः कृता । तद्वैरात् सुभूमेनैकविंशतिवारान्निर्ब्राह्मणी पृथ्वी कृता । क्रमेण षट्खण्डराज्यं लब्धं । लोभाद्धातकीखण्डद्वितीयद्वीपभरतषट्खण्डं साधयितुं सोद्यमी जातः । तदा देवदानवविद्याधरैरिति निषिद्धः—"पूर्वं भरतेश्वरादिभिः स्वाज्ञावशवर्तिनः षट्खण्डा एव विहिताः । अनन्तकालेऽनन्ताश्चक्रिणः संजाता भविष्यन्ति च, तेषामेतावत्येव नीतिः स्थितिश्च" । इत्यादिवाक्यान्यवगणय्य स्वसैन्येन सह लवणाम्भोनिध्यन्त्यर्णे समागात्, स्वचर्मरत्नं करस्पर्शेन वितत्य सर्वसैन्यं तदुपरि निवेश्य लवणसमुद्रस्य पारं प्राप्तुकामश्चचाल । ततः सर्वदेवैः स्वस्वमनसि ध्यातं—"अस्य बहवः सेवका देवाः सन्ति किं मद्भक्त्याऽस्य भवेत् ? न किमपि" इति ध्यात्वा सर्वैर्मुक्तः द्विलक्षयोजनमितसागरे मग्नः सप्तमावनौ गतः॥

के न यान्ति धनलोभपिशाच-ग्रस्तचित्तपुरुषा विपदोघम् ।
मार्वभौमपदतोऽपि सुभूमः, सप्तमावनिमवाप च लोभतः ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ सप्तदशस्तम्भे पञ्चचत्वारिंशदधिकद्विशततमं २४५ व्याख्यानम् ॥



## षट्चत्वारिंशदधिकद्विशततमं २४६ व्याख्यानं ॥

अथ क्रोधपिण्ड उच्यते—

उच्चाटनादिसामर्थ्यं शापमन्त्रतपोबलम् । प्रदर्श्य क्रोधतो लाति क्रोधपिण्डः स उच्यते ॥ १ ॥

स्पष्टः । भावार्थस्तु पुरो वक्ष्यमाणज्ञातेन ज्ञेयः । तथाहि—हस्तिकल्पे नगरे साधुरेको मासक्षपणपारणे धिग्जातीयगृहं गतः । तत्र मृतकभुक्त्युत्सवे विप्रेभ्यो दीयमानेषु घृतपूरेषु बहुकालं यावदूर्ध्वं स्थितोऽपि भिक्षां न प्राप, प्रत्युत ते द्विजाः साध्ववज्ञां चक्रुः—"निर्गच्छ निर्गच्छास्मदीयस्थलात्" । तदा साधुः क्रोधादवदत्—"अधुनाऽस्मिन् कार्ये न ददासि तर्हि पुनरेतादृश्येव कारणे समेष्याम्यहं" । इत्युक्त्वा निर्गतः । दैववशात्तस्य द्वितीयो मनुष्यो मृतः । साधुरपि तथैव तन्मासिके गतः । चिरेणाप्यलब्धभिक्षः

कोपाज्जजल्प—"पुनरेतत्सदृश्येव कार्ये जायमान एष्याम्यहं"। इति तथैवोक्त्वा चलितः। विधिवशात्तृतीयो मृतः। तन्मासिके स एव साधुस्तत्रागतः। बहुकालेऽपि भिक्षां न लब्धवान्। ततोऽवोचत्—"तथैवान्यस्मिन्नेवंभूते कार्ये दास्यसि" इति जल्पन् व्याघुट्य गच्छन् द्वारपालेन दृष्टः, तेन च गृहाधिपस्य निवेदितं—"अयं साधुः पुनः पुनर्भिक्षामप्राप्य गच्छति, एनं संमान्य ददातु"। गृहाधिपेन चिन्तितं—"किमपि कारणमस्ति, अन्यथा मासे मासे मृतकोत्सवः कथं समायाति? एतादृशेन कार्येण संपाद्यमानेन श्रान्तः, अथैनं संतोषयामि"। ततः शीघ्रं समुत्थाय गच्छन्तं साधुं नत्वा प्राह—"स्वामिन्! ममापराधं क्षमस्व, घृतपूराणि गृहीत्वा ममानुग्रहं कुरु, जीवितदानं देहि" इति क्षमयित्वा यथेष्टं घृतपूरैः प्रतिलाभितवान्। इत्येवं क्रोधपिण्डः स साधुरालोचनासमये ज्ञातो गुरुभिः। तैः प्रायश्चित्तदानेन स निर्मलो विहितः॥

अथ मानपिण्डस्वरूपमाह—

लब्धिपूर्णस्त्वमेवासीत्युत्साहितोऽन्यसाधुभिः। गृहिभ्यो गर्वितो गृह्णन्मानपिण्डः स उच्यते॥ १॥

स्पष्टः। भावार्थस्तु यथा—कोशलदेशे गिरिपुष्पितनगरे सेवतिकोत्सवे तरुणश्रमणानां संलापे एकेनोक्तं—"अद्य तु बहवोऽपि सेवतिका लभ्यन्ते, परं यः कल्येऽप्यानयति स लब्धिमान्"। अन्येनोक्तं—"किं घृतगुडरहिताभिस्ताभिः स्तोकाभिश्च?"। ततो गर्वपर्वत एकः क्षुल्लकोऽवोचत्—"कल्येऽहमीदृशीं सेवतिकां प्रचुरामानेष्यामि"। इति कृतप्रतिज्ञो द्वितीयदिने तदर्थं इभ्यगृहे तादृशास्ता निरीक्ष्य तद्गृ-

हिर्णी विविधोक्तिप्रार्थितामप्यददतीं स आख्यत् साहङ्कारं—"यथा तथाऽप्यहमिमां ग्रहीष्ये"। तयोक्तं—"यद्येवं भवेत्तदाऽवश्यं मम नासा घर्षणीया"। क्षुल्लकोऽपि तस्याः पतिं पर्षदासीनं कुतोऽपि ज्ञात्वा—"को भवतां मध्ये देवदत्ताख्यः ?" इत्यपृच्छत्। केनाप्युक्तं—"किं तेन सह कृत्यमस्ति ?"। स आह—"किञ्चिद्याचिष्ये"। तेऽप्यूचुः—"अहो ! किं शून्यगृहेषु सुकुमारिकां विलोकयसि ?"। तदपहासामर्षाद्देवदत्तः स्वयमाह—"वद, सोऽहमस्मि"। क्षुल्लकेनोक्तं—"यदि तेषां षण्णां मध्ये त्वं न भवसि, सप्तमश्चासि तदा वच्मि"। ते सर्वेऽपि सविस्मयमूचुः—"ते के षट् ?"। स आह—

श्वेताङ्गुलिर्बकोड्डायी तीर्थस्नाता च किङ्करः। हदनो गृध्ररिङ्खी च षडेते गृहिणीवशाः ॥ १ ॥

तत्राद्यो यथा—एकः कुलपुत्रकः प्रियानिर्देशकारी क्षुधालुर्याचितभोजनः शय्यास्थया पत्न्या भणितः—"यदा भोदयसे तदा चुल्लीभस्मापनीय ज्वलनेन्धनाद्यानय, येन शीघ्रं भोजयामि" इति नित्यं तथा कुर्वन् चुल्लीभस्मापनयनाज्जातश्वेताङ्गुलिर्लोकेन श्वेताङ्गुलिरित्युच्यते १। बकोड्डायी यथा—कश्चित् प्रियावचनानुगः पत्न्या भणितः—"जलाशयात्प्रत्यहं त्वयैव जलमानेतव्यं"। ततः स तत्कुर्वाणोऽपि दिने लज्जमानोऽन्धकारे तडागं याति, बकाश्चोड्डयन्ते इति लोकेन बकोड्डायीत्युच्यते २। तीर्थस्नाता यथा—कश्चित्कान्तायत्तो याचितस्नानः पत्न्योचे—"गच्छ स्नानसामग्रीं गृहीत्वा तत्रैव सरस्तीरे स्नात्वा शीघ्रं समागच्छेः" इति स तत्र स्नानकरणाल्लोकेन तीर्थस्नातेत्युच्यते ३। अथ किङ्करो यथा—एकः प्रियानुरागी

१ सुंवाळी इति भाषायां।

प्रातरुत्थाय "प्रिये किं करोमि ?" इत्याह । तस्या वाक्यतः खण्डनपेषणादिकरणाल्लोकैः किङ्कर इत्युक्तः । अथवा—ब्रह्मदत्तचक्रिणा देवतापार्श्वात्सर्वतिर्यग्वाग्ज्ञानं याचितं । तयोक्तं—"यदि मया दत्ता विद्याऽन्यस्मै कथयिष्यसि तदा तव मृतिर्भाविनी" । एकदाऽन्तःपुरस्थस्य चक्रिणो विलेपनार्थं चन्दनकच्चोलकं राज्ञ्या धृतं । तदा भित्तिस्थया गृहगोधिकया स्वजायया पतिः प्रोक्तः—"चन्दनं देहि मां" । स प्राह—"तदन्यर्णाज्ज्ञात्वा ददामि तदा राजा मां हन्त्येव" । साऽवक्—"यदि न ददासि चन्दनं तदाऽहं मृतैव" । इति श्रुत्वा चक्री जहास । तदा राज्ञी प्राह—"यदि न कथयसि हास्यहेतुं तदाऽहं मृतैव" । नृपोऽवक्—"तर्हि चितापार्श्वे गच्छ, हास्यहेतौ प्रोक्ते मम मृतिर्भाविनी" । कलहेऽत्यक्के राज्ञ्या सह चितायां प्रवेष्टुं चलितः । अत्रान्तरे पथि राज्ञोऽश्वानां भक्षणाय यवभृतं शकटं सेवकैर्नीयमानं वीक्ष्य छागी छागं प्राह—"मम यवपूलकं देहि" । बोत्कटोऽवदत्—"यद्यमुं तुभ्यं ददामि तदा नृपसेवका मम प्राणान् गृह्णन्ति" । साऽवक्—"यदि न दास्यसि तदाऽहं मृतैव" । बोत्कटोऽवक्—"अहं तु चक्रिवन्नारीकिङ्करो नास्मि यः प्रियावचसा मर्तुं चचाल" । इति श्रुत्वा चक्री दध्यौ—"अहं पशुतोऽपि मूर्खः, यतस्तद्वाक्यान्मर्तुं चलितोऽस्मि" । ततो बोत्कटं गुरुं कृत्वा पश्चाद्वलो ४ । रुदनो यथा—"एकः कुलपुत्रको भार्याऽऽदेशादपत्यानां क्षीरमूत्रोत्सर्गादिविधापनेन तत्पोतकक्षालनादिकर्मकरणेन च दुर्गन्धवस्त्रादिना लोकेन रुदन इत्युच्यते ५ । गृध्ररिङ्खी यथा—कश्चिद्भोजनायोपविष्टो व्यञ्जनतक्रादि याचते, निजमहिलया गृहकर्मव्यग्रतया साधिक्षेपं "गृहाण" इत्युक्ते दूराद्गृध्र इव रिङ्खन् रिङ्खन् स तदासन्नं यातीति लोकेन

गृध्रगृहिणीत्युच्यते ६ । तदहो ! एते षड् गृहिणीवशाः" । इति क्षुल्लकवचनं श्रुत्वा पर्षत्पुरुषैरुक्तं—"तैः पञ्चभिरप्येक एवासौ" । देवदत्तोऽप्याह—"किममीषां वचनैः ? याचस्व मनोऽभीष्टं" । क्षुल्लक ऊचे—"यद्येवं तर्हि घृतगुडान्विताः प्रभूताः सेवतिका देहि मे निजगृहात्" । आमेत्युक्त्वोत्थाय कथितपत्नीवृत्तान्तः स क्षुल्लकं द्वारेऽवस्थाप्य गृहिणीं कार्यव्यपदेशेन मालमारोप्य मुनियाचितसर्वदानसामग्रीममेलयत् । क्षुल्लकेन स्वनासाऽङ्गुलिघर्षदर्शनेन तस्या ज्ञापितं नामाघर्षणं । ततस्तेनाकार्य मुनये सेवतिका ददे । सोऽपि तां प्राप्य हृष्टः सर्वेषां साधूनां पुरः स्वगुणं स्वलब्धिं चावर्णयत् । एकदाऽऽलोचनासमये गुरुभिः पृष्टं—"त्वया मूलोत्तरगुणेषु किञ्चित्कदापि खण्डनं कृतमस्ति ?" । सोऽवक्—"मयैकदा देवदत्तगृहे सेवतिकार्थं महानाडम्बरः कृतः" । सूरिराह—"एष मानपिण्डः साधुभिः त्रिकालं परवस्तुषु गाढानुरागविरहितैर्न सेव्यः" । इति श्रुत्वा स स्वमनिन्दत् इति ॥

क्रोधपिण्डग्रसनान्मुनिधर्म—द्योतनं भवति नैव तथैव ।
मानपिण्डमपहाय निरीहैः, पिण्डशुद्धियतना खलु कार्या ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ सप्तदशस्तम्भे
पञ्चचत्वारिंशदधिकद्विशततमं २४६ व्याख्यानम् ॥

## सप्तचत्वारिंशदधिकद्विशततमं २४७ व्याख्यानं ॥

अथ लोलपिण्डमाह—

स्निग्धं मनोहरं पिण्डं वीक्ष्यातिरसलोलुपः । सर्वत्राटत्यनूचानो लोलपिण्डः स उच्यते ॥ १ ॥

स्पष्टः । भावार्थस्तु सिंहकेशरज्ञातेन ज्ञेयः । तथाहि—चम्पायां सुव्रतनामा साधुः मासक्षपणपारणे द्रव्याद्यभिग्रहं चतुर्विधं द्रव्यक्षेत्रकालभावाद्गृहीत्वा प्रथमपौरुष्यामेव गोचर्यर्थं निर्गतः । उत्कृष्टतपोयुक्तत्वात्सर्वः कालो गोचरीयोग्यः । यत उक्तं—"निच्चभत्तस्स भिक्खुस्स कप्पति एगं गोयरकालं" इत्यादि सामाचारीसूत्रं ज्ञेयं, नित्यमेकाशनिनः साधोरेकवारं गोचर्याः काले गृहस्थगृहे पारणार्थं निष्क्रमितुं प्रवेष्टुं च कल्पते, न तु द्वितीयवारं । यद्येकवारं भुक्ते सति आचार्योपाध्यायग्लानादीनां वैयावृत्त्यं कर्तुं न शक्नोति तदा द्विरपि भुङ्क्ते, तपसो हि वैयावृत्त्यं गरीय इति । अथवा बस्तिकूर्चकक्षादिरोमाणि न जातानि तावत्क्षुल्लकीक्षुल्लकयोरपि द्विर्भुञ्जानयोर्न दोषः । एकान्तरोपवासिनः साधोरेकगोचरकालेन न निर्वाहस्तदा द्वितीयवारं स भिक्षते । षष्ठभक्तकस्य द्वौ गोचरकालौ । अष्टमभक्तकस्य चतुःपञ्चोपवासकारकस्य च सर्वेऽपि गोचरकालाः, यदेच्छा भवति तदा भिक्षते, न तु प्रातर्गृहीतमेव धारयेत्, संचये जीवसंसक्तादिदोषसंभवात्, इति प्रसङ्गात् ( दर्शितं ) । अथ स मुनिराहारार्थं पुरे भ्रमन् स्वजनादौ सिंहकेशरमोदकस्य लाहणीं ( प्रभावनां ) जायमानां वीक्ष्याचिन्तयत्—"अद्य मया मोदका एव ग्राह्या-

तेऽपि सिंहकेशरका एव" इत्यभिग्रहं संप्रधार्य भिक्षायां प्रविष्टः, लोलुपतयाऽन्यत् प्रतिषेधति, तांश्चालभमानः संजातक्लिष्टाध्यवसायः केशरानेव ध्यायन् परिभ्रमति स्म । मध्याह्नो जातः । ततो "न लब्धा मया मोदका" इति प्रणष्टचित्तो बभूव । ततो गृहद्वारे प्रविशन् धर्मलाभस्थाने सिंहकेशरा इति वदति । एवं सकलमपि दिनं भ्रान्त्वा रात्रौ तथैवापणवीथीचत्वरचतुष्पथादिषु भ्रमति स्म । पश्चात्पौरुषीप्रतिलेखनप्रतिक्रमणक्रियादिकालोल्लङ्घनमपि न स्मृतिगोचरीकृतं । भास्वदंशुभिश्चुम्बिते लोकैः प्रारब्धगमनागमने पार्गे जन्तुरक्षार्थमालोक्य गमनं कार्यमित्यपि न स्मृतं । इत्थं भ्रमन् रजनीयामद्वयं व्यतिचक्राम । ततः श्रावकगृहे प्रविवेश । धर्मलाभस्थाने सिंहकेशरा इत्युवाच । सोऽपि श्रावकोऽभ्युत्थानादिकं विधाय "अतर्कितमकाले मुनेरागमनं कथं जातं?" इति विचिन्त्य दध्यौ—"अयं साधुः रूपकोऽद्यैव वासरे मयाऽप्रमत्तभावान्वितो दृष्टः, प्रागप्ययं धनधान्यसुवर्णकामिनीदासदास्यादिसंभृतं गृहं त्यक्त्वा वैराग्येण प्रव्रजितः, तत्सर्वमहं वेद्मि, गीतार्थोऽयमस्ति, परं सहसाऽत्रागमनं रात्रौ जातं तस्य को हेतुः? यद्यस्य विद्यमानदोषान् प्रत्यक्षं कथयामि तदा आप्तत्वं मयि कुतः? परमनेकसिद्धान्तपदार्थज्ञस्याग्रे मम वक्तुं नार्हं । अथवा महापुरुषाणां चरित्रमगम्यमकलनीयं चास्मादृशां विषयादिरतानां, अतो ज्ञानिन एव जानन्ति परमार्थमस्य मनोगतं, स्वरूपबाह्यव्यवहारातीतचेष्टावीक्षणेन गुणिनां गुणेषु दोषो नोद्भावनीयः । तथापि गुणग्रहणबुद्ध्याऽवश्यं परीक्षा कार्या । यतोऽसौ प्रतिपातभावयुक्तोऽस्ति? अथवा लेशमात्रेण?" इति विचिन्त्य पुनर्दध्यौ—"नास्य काचिद्विषयोन्मुखी चेष्टा दृश्यते, न च परधनस्वर्णहरण-

दिचेष्टा वीक्ष्यते, वस्त्राच्छादितास्येन भाषते, क्रमेण पदस्थापनयतनापरश्च दृश्यते, अतो नासौ मूलगुणघातकः । आहाराभिलाषुकस्तु ज्ञायते" । इति ध्यात्वा तेन नानारसवत्यः शर्कराः खण्डखज्जकघृतपूरमोतीचूरकूरकर्पूरवासितसुखाद्याश्चोपढौकिताः । मुनिवरस्तु पुनः पुनः "नेदं ममार्हं नेदं ममार्हं" इत्यवोचत् । तन्निशम्य स श्राद्धो दध्यौ—"अद्यापि साधुरयं मार्गरतः, यतोऽभिग्रहानुचितं नाङ्गीकरोति, तदनुसारेण याच्ञामपि न विधत्ते, ततः कथं ज्ञायतेऽस्याभिग्रहः? परं प्रवेशसमये सिंहकेशरा इति प्रोक्तमस्ति, तेन परिज्ञायते, नूनमनेनैते न क्वापि लब्धाः, तेनास्य चित्तं प्रणष्टं" । ततस्तेन लाहणिकागतमोदकभृतभाजनमुपढौकितं "भगवन्! ममानुग्रहं कुरु, गृहाण सिंहकेशरान्" । तेन ते गृहीताः, स्वस्थीभूतं तस्य मनः । ततः श्राद्धो दध्यौ—"चत्वारो भङ्गा मुनीनां विद्यन्ते, तथाहि—रात्रौ गृहीतान्नं रात्रावेव भुङ्क्ते १, रात्रौ गृहीतं दिवसे भुङ्क्ते २, दिवसे गृहीतं रात्रौ ३, दिवसगृहीतं दिवसे ४ च । एषु भङ्गेषु अन्त्य एवार्हः, शेषास्त्रयस्तु नार्हाः । कदाचिल्लोलुपतयाऽऽहारं करिष्यति तदोत्तरगुणहानिर्भविष्यति, क्रमेण मूलगुणघातोऽपि स्यात्, तेन महती क्षतिः, रात्रिभोजनमनन्तदोषदूषितं इत्यसौ गीतार्थत्वाज्जानन्नपि अधुना चेतसि तन्न स्फुरति । अथाहं तथा कुर्वे यदस्य कालनिर्णयेन महागुणः स्यात्" । इति ध्यात्वा युक्त्या च विनयं विधायोक्तवान्—"स्वामिन्! अद्य महद्भाग्यं मम यद्यूयं जङ्गमकल्पवृक्षा गुरुपार्श्वे गृहीतद्वयशिक्षाः सहसा मद्गृहे समागताः, भवदीयसाधुस्वरूपावलोकनेन पूर्वमुनयः पुण्डरीकाद्याः सर्वेऽप्यवेक्षिताः, एवं धन्यः संतोषी त्वं, पीयूषसमं भवदाचरणं चरणकरणं च । अहं मोहग्रस्तः कदेन्द्रि-

धर्मौख्यप्रशंसः पुत्रकलत्रासक्तश्चैकमुखेन युष्मदीयसद्भाववर्णनायामक्षमः। ईदृशेऽपि मयि अत्र पादावधारणेन महती कृपा कृता। अथैकं प्रश्नोत्तरं प्रयच्छ—प्रत्यहं प्रभाते विरलतारकनिरीक्षिते गगने सति नमस्कारादि प्रत्याख्यानं करोमि, अद्य मया पुरिमड्ढं प्रत्याख्यातं, तत्किं पूर्णं न वेति ?"। ततो मुनिना श्रुतदत्तोपयोगेन तारामण्डलं निरीक्षितं तेनोपलक्षिता यामद्वयातीता मध्यरात्रीति। उक्तं चोत्तराध्ययने षड्विंशाध्ययने—

पढमं पोरिसिं सज्झायं, बीअं झाणं झीयायई।
तइयाए निद्दमोक्खं तु, चउत्थिए भूयोऽवि सज्झायं॥ १॥

अथ रात्रिभागचतुष्कज्ञानोपायमाह—

जं नेइ जया रत्तिं, नक्खत्तं तंमि नह चउब्भाए। संपत्ते विरमिज्जा, सज्झाय पओसकालम्मि॥ १॥

यन्नयति प्रापयति समाप्तिं यदा रात्रिं नक्षत्रं यस्मिन् दिने यस्मिन् क्षेत्रे यस्मिन्नक्षत्रेऽस्तमिते रात्रिपर्यन्तो भवति, तच्च नक्षत्रं रविनक्षत्रात् प्रायश्चतुर्दशं भवतीति वृद्धाः, तस्मिन्नक्षत्रे नभश्चतुर्थभागे संप्राप्ते विरमेत् निवर्तेत स्वाध्यायात् प्रदोषकाले रात्रिमुखे प्रारब्धादिति शेषः। इत्थं ज्ञात्वाऽपि मनोभ्रमं ला मढेन मया विरूपमाचरितं, धिग्मो लोभाभिभूतस्य जीवितं। भोः श्रावक! जैनशासनतत्त्वज्ञ! धन्योऽसि कृतपुण्योऽसि त्वं, यदहं सिंहकेशरप्रदानात्पूर्वार्धप्रत्याख्यानप्रश्नेन संसारे निमज्जन् रक्षितः। सत्येयं तव चोदना, मार्गभ्रष्टस्य मम मार्गप्रापकत्वात् त्वं धर्मगुरुरसि, तव चातुर्यं धैर्यं च वागगोचरं" इत्यात्मनिन्दां

तस्य स्तुतिं च विधाय निशां ज्ञात्वा गमनेऽनाचारः स्यात् । अथ गृहं मार्गयित्वा तत्रैकान्ते तस्थौ ध्यानपरः । प्रजाते तदाहारपरिष्ठापनार्थं शुद्धस्थण्डिलभूमौ गत्वा विधिना मोदकांश्चूरयन् ढंढणसाधुरिव भावनां दध्यौ, शुक्लध्यानानलेन कर्मेन्धनानि प्रज्वालयितुं प्रवृत्तो यथा क्षणमात्रेण सकलान्यपि घातिकर्माण्युच्छेद्योत्पन्नकेवलज्ञानो जातः । देवैः स्वर्णाम्बुजं विहितं, तत्र स्थित्वा देशनां ददौ । तद्दृष्ट्वा तच्छ्रावकादीनां विस्मयोऽभूत् ॥

दोषपिण्डग्रहणं न विशुद्धं, सिंहकेशरमिवात्मनि धार्यम् ।
आप्तयुक्तिवचनात्स्वपकात्मा, सोऽगमन्निजगुणान् व्रतरागी ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ सप्तदशस्तम्भे सप्तचत्वारिंशदधिकद्विशततमं २४७ व्याख्यानम् ॥

---

## अष्टचत्वारिंशदधिकद्विशततमं २४८ व्याख्यानं ॥

अथ दशमाख्यप्रत्याख्यानस्य दश भेदान् तत्फलं चाह—

प्रत्याख्यानानि दिग्भेदैः कालिकानि प्रचक्षते । यथोत्तरं प्रत्याख्यानं वर्धमानफलं भवेत् ॥ १ ॥

स्पष्टः । नवरं प्रत्याख्यानदिग्भेदाः पूर्वसूरिभिर्निगदिता भाष्ये—

नवकारसहिय १ पोरिसि २ पुरिमड्ढे ३ गासणे ४ गठाणे य ५ ।
आयंबिल ६ अब्भत्तट्ठे ७ चरिमे अ ८ अभिग्गहे ९ विगई १०॥ १ ॥

अत्रायं नमस्कारसहितं प्रत्याख्यानं । तत्र प्रत्याख्यानभङ्गपरिहारार्थमनाभोगसहसाकारलक्षणौ द्वावाकारौ ज्ञेयौ । ननु कालस्यानुच्यमानत्वात्सङ्केतप्रत्याख्यानमेवेदं प्रतिभाति, तत्कथमद्धाप्रत्याख्यानमभिधीयते ? सत्यं, सहितशब्देन मुहूर्तस्य विशेषितत्वाददोषः । अथ मुहूर्त्तशब्दोऽप्यत्र न श्रूयते, तत्कथं तस्य विशेषत्वं ? न खलु गगनारविन्देऽसति अमन्दामोदसुन्दरमित्यादीनि विशेषणानि तस्य सहृदयैर्विधीयते । अत्र ब्रूत उत्तरं—अद्धाप्रत्याख्यानमध्ये तावदस्य पाठात् पौरुषीप्रत्याख्यानस्य च वक्ष्यमाणत्वान्निश्चितं तदर्वाग् मुहूर्त्त एवावशिष्यते, ततस्तस्य विशेषत्वं नानुपपन्नं । अथ मुहूर्त्तद्वयादिकमपि कस्मान्न लभ्यते ? यत एक एव मुहूर्त्तः विशेषः ? उच्यते—अल्पाकारत्वादस्य । पौरुष्यां हि षडाकाराः । अस्मिंश्च प्रत्याख्याने आकारद्वयवति स्वल्प एव कालोऽवशिष्यते, स च नमस्कारसहितः, पूर्णेऽपि काले नमस्कारपाठमन्तरेण प्रत्याख्यानस्यापूर्यमाणत्वात्, सत्यपि नमस्कारपाठे मुहूर्त्ताभ्यन्तरे प्रत्याख्यानभङ्गात्, ततः सिद्धमेतत् । अथ प्रथम एव मुहूर्त्त इति कुतो लभ्यते ? उच्यते—सूत्रे सूरे उग्गए इति वचनात् पौरुषीप्रत्याख्यानवत् । किंच नमस्कारसहितपौरुष्यादिकालप्रत्याख्यानं सूर्योदयात्प्राग् यद्युच्चार्यते तदा शुध्यति, नान्यथा, शेषप्रत्याख्यानानि सूर्योदयात्पश्चादपि क्रियन्ते । नमस्कारसहितं यदि सूर्योदयात्प्रागुच्चारितं तदा तत्पूर्तेः पश्चादपि पौरुष्यादिकं सर्वं क्रियते । स्वस्वावधिमध्ये नमस्कारसहि-

तोच्चारं विना सूर्योदयादनु कालप्रत्याख्यानं न शुध्यति । यदि दिनोदयात्प्राग् नमस्कारं विना पौरुष्या-दिकृतं तदा तत्पूर्तेरूर्ध्वमपरं कालप्रत्याख्यानं न शुध्यति, तन्मध्ये तु शुध्यतीति वृद्धव्यवहारः । इत्थं चतुर्विधाहारस्यैव भवति, रात्रिभोजनप्रत्याख्यानव्रतनिर्णयरूपत्वात् इति १ । पोरसीति—पुरुषप्रमाण-च्छाययोत्तराध्ययनोक्तया निर्वृत्ता पौरुषी प्रहरस्तन्मितकालं यावत्प्रत्याख्याति । अत्र प्रत्याख्याने षडाकारा ज्ञेयाः । तथा सार्धपौरुषीप्रत्याख्यानं पौरुषीवद्वाच्यं, तस्य तदन्तर्गतत्वात् २ । पुरिमड्ढं ति—पूर्वार्धं दिन-स्याद्यं प्रहरद्वयं तत्प्रत्याख्याति । अत्र षडाकाराः पौरुषीसत्का वाच्याः, एको महत्तराकारोऽधिकः कार्यः, तेन सह सप्त स्युः, सूर्योदयात्पूर्वार्धं यावद्धार्यं । किंच नमस्कारसहितादि प्रत्याख्यानं सूर्योदयात्प्राग् न स्वीकृतं तथापि पूर्वार्धप्रमुखं भवति । अपरार्धप्रत्याख्यानमपि प्रहरद्वयलक्षणं पूर्वार्धप्रत्याख्यानवज्ज्ञा-नीयं ३ । एगासणमिति—एकं सकृदशनं भोजनं, एकं वा आसनं एकाशनं एकासनं वा प्रत्याख्यानं । अत्राष्टावाकारा भवन्ति ४ । एगठाणेति—एकाशनवदाकुञ्चनप्रसारणाकारवर्जमेकमद्वितीयं स्थानमङ्ग-विन्यासरूपं यत्र तदेकस्थानं प्रत्याख्यानं, तद्यथा—भोजनकालेऽङ्गोपाङ्गं यथा स्थापितं तस्मिंस्तथास्थि-तेनैव भोक्तव्यं, मुखस्य हस्तस्य चाशक्यपरिहारत्वात्तच्चलनं न प्रतिषिद्धमिति । नन्वेकाशनादिप्रत्या-ख्यानं कथमद्धाप्रत्याख्यानं ? न ह्यत्र कालनियमः श्रूयते । सत्यं, अद्धाप्रत्याख्यानपूर्वाणि प्रायेणैकाश-नादीनि क्रियन्ते, अतो भण्यते इति ५ । आयंबिलमिति—आचाम्लो (म्लं) अवश्रावणं आम्लं चतुर्थो रसस्ताभ्यां निर्वृत्तं, एतच्च त्रिविधं, तथाहि—ओदनं १, कुल्माषान् २, सक्तुश्च ३, तानधिकृत्य

भवति । अथवाऽवश्रावणमिव लोके यदन्नादिकं निरसीभूय निःसरति तदाचाम्लं । अत्राष्टावाकाराः सन्ति इति ६ । अभक्तार्थे पञ्चाकाराः, भक्तेन भोजनेन अर्थः प्रयोजनं भक्तार्थः, न विद्यते भक्तार्थो यस्मिन् सोऽभक्तार्थ उपवास इत्यर्थः । तथा च रात्रौ[१] चतुर्धाऽऽहारो निषिद्धः द्वितीयदिने चोपवासं विधत्ते, तं प्रति चतुर्थप्रत्याख्यानं स्यात् । अपि च रात्रिप्रत्याख्यानं विनोपोषितस्तस्य अभत्तट्ठं इति पाठः प्रोच्यः, न चतुर्थभक्तं । अथवोपवासदिनात्पूर्वपश्चाद्दिनयोरुभयकोटिमिलनमेकाशनं दधाति तस्मै चतुर्थभक्तं अभत्तट्ठं इति भण्यते इति वृद्धसंप्रदायः ७ । तथा चरमो दिवसस्य भवस्य वा पाश्चात्यभागस्तत्र क्रियमाणं प्रत्याख्यानं दिवसचरिमं भवचरिमं चेति कथ्यते । अत्र चत्वार आकाराः । अथ साधूनां सर्वदा रात्रौ त्रिविधत्रिविधेन चतुर्विधाहारप्रत्याख्यानं स्याद्यावज्जीवं, श्राद्धानां तु यथाशक्त्या चतुर्विधत्रिविधादिकं विधेयं इति ८ । अथाभिग्रहप्रत्याख्याने चत्वार आकारा भवन्ति । अङ्गुष्ठमुष्टिग्रन्थ्यादिकं सर्वमभिग्रहे संभवति । अथ प्रमादपरिजिहीर्षोर्हि प्रत्याख्यानं विना न युक्तं क्षणमप्यासितुमिति नमस्कारसहितादिकालप्रत्याख्यानपूर्त्तिसमये ग्रन्थिसहितादि कार्यं, ग्रन्थिसहितं मुष्टिसहितं च बहुवारौषधादिभोजिनां बालग्लानादीनामपि सुसाध्यमित्यप्रमादहेतुः । तथा च महाफलं सकृत्कृतग्रन्थिसहितमात्रकपर्दियक्षीभूतमांसमद्यासक्तकुविन्दादेरिव । तथाहि—

---

१ पूर्वदिनरात्रौ.

क्षितिपुरे कुविन्दनामा तन्तुकारो मद्यादिरतः। तस्यैकदा वज्रस्वामिसूरिणा संपर्को जातः। तैः प्रोक्तं दशधाप्रत्याख्यानव्याख्यानं, तन्निशम्य तन्मध्ये ग्रन्थिसहितस्वरूपमित्थं गदितं—

जे निच्चमप्पमत्ता गंठिं बंधंति गंठिसहियस्स। सग्गापवग्गसोक्खं तेहि निबद्धं सगंठिम्मि ॥ १ ॥
नणिऊण नमुक्कारं निच्चं विस्सरणवज्जियं धन्ना। पारेंति गंठिसहियं गंठिं सह कम्मगंठीहिं ॥ २ ॥

रात्रिचतुर्विधाहारपरिहारस्थानोपवेशनपूर्वकताम्बूलादिव्यापारणमुखशुद्धिकरणादिविधिना ग्रन्थिसहितप्रत्याख्यानपालने एकवारभोजिनः प्रतिमासमेकोनत्रिंशत् द्विवारभोजिनस्त्वष्टाविंशतिर्निर्जला उपवासाः स्युरिति वृद्धाः। भोजनताम्बूलजलव्यापारणादौ हि प्रत्यहं घटीद्वयसंभवे मास एकोनत्रिंशत् घटीचतुष्टयसंभवे त्वष्टाविंशतिरुपवासा इत्यादि श्रुत्वा प्रबुद्धः स ग्रन्थिसहितं प्रत्याख्यानं दधौ। ततः स क्रमेण पञ्चत्वमवाप्य कपर्दियक्षोऽभूत्। अथ वज्रस्वामी चतुर्विधसङ्घैः परिवृतः सिद्धगिरियात्रार्थमचलत्। अन्तराले पुण्डरीकभूभृदाश्रितेन मिथ्यात्विदेवेनोपसर्गाः कृताः, दिङ्मूढं सङ्घं विधायागम्यातिदीर्घायतपर्वतीभूय तेन गमनमार्गः सर्वत्र रुद्धः। तदा सूरयः शासनदेवान् सस्मार। इतश्च स कपर्दियक्षो नूतनोत्पन्नत्वाद्दध्यौ—"मया किं किं पुण्यं विहितं ? येनात्र देवसौख्यं प्राप्तं ?"। ततोऽवधिज्ञानेन निर्धारितं, "अहो! गुरुदत्तप्रत्याख्यानफलं स्फुटमेव, अधुनाऽहं तं गुरुं वन्दे"। ततः स प्राग्भवस्वरूपं कृत्वा सूरीणामभ्यर्णं एत्य ननाम, इत्याख्याते स—"हे स्वामिन्! हे पूज्य! मामुपलक्षयसि ?"। सूरयो दशपूर्वपाठकत्वादुपयोगं दत्त्वा तत्प्राग्भववृत्तमाहुः। ततः स देवः प्राह—"मम कार्यं किञ्चित्स-

मादिश"। सूरिः प्राह—"केनापि दुष्टेनात्र सङ्घे उपद्रवः कृतोऽस्ति, तं निवारय"। तत्क्षणं तं जित्वा मिथ्यागिरिशिलात् पातितवान्। स महद्दूरं नंष्ट्वा क्वापि ग्रन्थं विवेश। ततो निरुपसर्गाः समस्ता गुरवः सिद्धाचले महामहेनाजग्मुः। तदा सूरिणा शत्रुञ्जयशैलेऽधिष्ठायकत्वेन कपर्दियक्षो न्यधीयत। अत एव पूर्वसूरिणा युगादिदेवस्तुतौ संस्मृतोऽस्ति—

य: पूर्वं तन्तुवायः सुकृतकृतलवैर्दुष्कृतैः पूरितोऽपि
प्रत्याख्यानप्रभावादमरमृगदृशामातिथेयं प्रपेदे।
मेवाहेवाकिशाली प्रथमजिनपदाम्भोजयोस्तीर्थरक्षा-
दक्षः श्रीयक्षराजः स भवतु भविनां विघ्नमर्दी कपर्दिः॥ १॥

एवं युक्त्या ग्रन्थिसहितमभिग्रहप्रत्याख्यानफलमुक्तं ए। तथा निर्विकृतिकं प्रत्याख्यानं विकृतित्यागरूपं। अत्राष्टौ नव वाऽऽकाराः सन्ति। यत्रोत्क्षिप्तविवेकोऽद्रवरूपाणां नवनीतगुडादीनां कर्तुं शक्यते तत्र नवाकाराः, द्रवरूपाणां विकृतीनामुद्धर्तुमशक्यानामष्टावाकारा इति। अत्र बहु वक्तव्यं, तत्प्रवचनसारोद्धारवृत्तितोऽवसेयं। अथ विकृतिभोजनफलमुच्यते—

विगइं विगईभीओ विगइगयं जो उ भुंजए साहू। विगई विगइसहावा विगइं विगई बला नेइ॥ १॥

विगतेर्नरकतिर्यक्कुदेवकुमानुषत्वादिकाया भीतस्त्रस्तः साधुः विकृतिं क्षीरादिकं चापरं विकृतिगतं क्षैरेयादिकं यो भुङ्क्ते स कुगतिं प्राप्नोति, कुतः? विकृतिर्बलात् जीवमनिच्छन्तमपि विकृतिस्वभावा मनो-

विकारकारिस्वभावा विकृतिः विगतिं कुगतिं नयति इत्यर्थः । अतो विकृतिः कारणे सति ग्राह्येति १० । अथैषां प्रत्याख्यानानां फलं श्लोकार्धेनोक्तं, तत्स्वरूपं चेदं—नारकी जीवोऽकामनिर्जराभिः कर्माणि शतवर्षान्तकालेन यावन्ति क्षिपति तावन्मितकर्माणि नमस्कारसहिताख्यप्रत्याख्यानेन भावुकजीवः क्षयं नयति । पौरुषीप्रत्याख्यानेन तु सहस्रवर्षमितपापकर्माणि क्षिपति । सार्धपौरुषीप्रत्याख्यानेन दशसहस्रवर्षमिताशुभकर्माणि क्षयीभवन्ति । नारकिजीवकर्म सर्वत्र ग्राह्यं, तथाहि—नारकी जीवः श्वभ्रस्थितः क्षुधातृषाक्षेत्राद्यनन्तवेदनां लक्षवर्षाणि यावदनुभूयाकामनिर्जरया प्राग्भवोपार्जितनिकाचितकर्मबन्धविच्छेदं तनोति तावद्वर्षमितं कर्मैकेन पूर्वार्धप्रत्याख्यानेन विलयं याति । एवं वर्धमानवर्धमान ( उत्तरोत्तर ) प्रत्याख्यानं प्रति दशगुणोऽङ्कः प्रवर्धनीयः । तथाहि—एकाशनेन दशलक्षवर्षकर्माणि क्षिपति । निर्विकृत्या कोटिमितवर्षकर्माणि विशीर्यन्ते । एकस्थानेन दशवर्षकोटिसत्ककर्माणि क्षयीभवन्ति। आचाम्लेन शतकोटिवर्षकर्माणि गच्छन्ति । ( अभिग्रहेण सहस्रकोटिवर्षकर्म क्षीयते )। उपवासेन दशसहस्रकोटिवर्षकर्माणि विलयं यान्ति । षष्ठतपसा एकलक्षकोटिवर्षकर्माणि यान्ति । अष्टमतपसा दशलक्षकोटिवर्षैर्नारकवेद्यकर्माणि विलयीभवन्ति । इत्यादि ज्ञेयं ।

इत्यादिप्रत्याख्यानफलं श्रुत्वा बलात्कारेणापि योग्यानां तत्कारयितव्यं तथाहि—

पाटलिपुरे शकटालसुतः श्रीयकमन्त्री श्रीनन्दराजस्य व्यापारमुद्रां चिरं दधार। पश्चाद्दीक्षां श्रीयकोऽङ्गीचकार । स क्षुधावानेकभक्तमपि तपः कर्तुं न क्षमः, क्रियां तनोति । एकदा पर्युषणायां यक्षार्यया

तत्रगिन्या स सहोदर इत्थं प्रेरितः—"हे बन्धो! प्रत्याख्यानानां फलं त्वं जानासि, अधुना साधुत्वं त्वया स्वीकृतं, पर्युषणायां विशेषतरं तपो विधेयं"। इत्यादिभगिनीसाध्वीवचसा लज्जितः स पौरुषीप्रत्याख्यानं जग्राह। तदवधौ पूर्णे पुनर्यक्षासाध्व्या प्रेरितः—"त्वं पूर्वार्धं प्रत्याख्याहि, इदं पर्वातिदुर्लभं, इयान् कालश्चैत्यपरिपाट्यापि सुखं यास्यति"। इति श्रुत्वा तथैवासौ प्रत्यपादि। पुनः समयेऽभिहितः—"इदानीमपार्धं यावत्तिष्ठ"। सोऽपि तथैवाकार्षीत्। पुनः साख्यत्—"भो बन्धो! अधुना प्रत्यासन्ना रात्रिः सुप्तस्य सुखं यास्यति, तदभक्तार्थं प्रत्याख्याहि"। इत्युक्तः स तथाऽकरोत्। ततो निशीथे प्राप्तेऽसौ क्षुत्पीडया प्रसरन्त्या देवगुरू स्मरन् विपद्य त्रिदिवं ययौ। ततः सा साध्वी चतुर्विधाहारं न गृह्णाति "ममर्षिहत्या लग्ना" इति बुद्ध्या। ततः सङ्घोऽकथयत्—"भवत्या शुद्धभावयेदं व्यधायि, तत इह ते प्रायश्चित्तं न किञ्चित्कर्तव्यमस्ति"। ततः सा श्रमणसङ्घं प्राह—"यदि जिनः साक्षादाख्याति तदा मे हृदये निर्वृतिर्जायते, नान्यथा",। अत्रार्थे सकलसङ्घः कायोत्सर्गमदात्। शासनदेव्यागत्योक्तं—"कार्यं ब्रूत, किं करोमि ?"। सङ्घः स्माह—"एतां श्रीसीमन्धरपार्श्वं नय"। साऽख्यत्—"यूयं निर्विघ्नगत्यर्थं कायोत्सर्गेण तिष्ठत"। तत्सङ्घे प्रतिपेदाने देवी तां जिनान्तिकेऽनैषीत्। प्रभुं नत्वा साध्व्या स्वोदन्तः प्रोक्तः। जिनोऽवक्—"त्वं निर्दोषाऽसि" तां वीक्ष्य तत्रत्या जना आश्चर्यं प्रापुः। जिनः कृपया तन्निमित्तं चूलिकाद्वयं व्याचक्रे। ततः सा छिन्नसंदेहा निजाश्रमं देव्याऽऽनीता। सङ्घेन कायोत्सर्गः पारितः। सा सङ्घं स्माह—"श्रीसीमन्धरो मन्मुखेन सङ्घाय पदानि प्रैषीत् चत्वार्यध्ययनानि च"। उक्तं च परिशिष्टपर्वग्रन्थे—

भावना च विमुक्तिश्च रतिकल्पमथापरम् । तथा विविक्तचर्या च तानि चैतानि नामतः ॥ १ ॥
अप्येकया वाचनया मया तानि धृतानि च । उज्झितानि च सङ्घाय तत्तथाख्यानपूर्वकम् ॥ २ ॥
आचाराङ्गस्य चूले द्वे आद्यमध्ययनद्वयम् । दशवैकालिकस्यान्यदथ सङ्घेन योजितम् ॥ ३ ॥
ततो यक्षार्या श्रीस्थूलभद्रादीनां पुरः प्रत्यहं श्रीसीमन्धरनिगदितं श्रीयकप्रत्याख्यानफलमवर्णयत् ॥

यक्षार्यया प्रेरितसाधुश्रीयक, एकोपवासेन गतिं शुभां दधौ ।
सीमन्धरेणापि हि शंसितावुभौ, कुर्यात्ततः कारयतां तपःस्पृहाम् ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ सप्तदश-
स्तम्भेऽष्टचत्वारिंशदधिकद्विशततमं २४८ व्याख्यानम् ॥

## एकोनपञ्चाशदधिकद्विशततमं व्याख्यानं २४९

अथ दशप्रत्याख्यानमाह—

प्रत्याख्यानं द्विधा प्रोक्तं मूलोत्तरगुणात्मकम् । द्वितीयं दशधा ज्ञेयमनागतादिभेदकम् ॥ १ ॥

प्रतीति अविरतिस्वरूपप्रवृत्तिप्रतिकूलतया आख्यानं प्रत्याख्यानं तद्द्विधा—मूलगुणा यतीनां महाव्रतानि श्राद्धानामणुव्रतानि । उत्तरगुणास्तु यतीनां पिण्डविशुद्ध्यादयः, श्राद्धानां गुणव्रतादयः । तत्र स्वयं प्रत्याख्यानकाले विनयपुरस्सरं सम्यगुपयुक्तः श्रीगुरुवचनमनुसरन् प्रत्याख्यानं कुरुते । तत्र प्रत्या-

ख्याने चतुर्भङ्गी, यथा—स्वयं शिष्यः प्रत्याख्यानस्वरूपं जानन् ज्ञस्यैव गुरोः पार्श्वे करोतीति प्रथमो भङ्गः १। गुरोर्ज्ञस्य स्वयमजानन् करोतीति द्वितीयः २। शिष्यस्य ज्ञत्वे गुरोरज्ञत्वे तृतीयः ३। शिष्यस्य गुरोश्चाज्ञत्वे चतुर्थः ४। तत्राद्यो भङ्गः शुद्धः। द्वितीयोऽपि शुद्धः, यदा गुरुर्ज्ञाता स्वयमजानानं शिष्यं संक्षेपतो बोधयित्वा प्रत्याख्यानं कारयति, अन्यथा त्वशुद्धः। एवं तृतीयोऽप्यशुद्धः, परमेषोऽपि तथा-विधगुरोरप्राप्तौ गुरुबहुमानाद्गुरोः संबन्धिनं पितृपितृव्यमातुलभ्रातृशिष्यादिकमज्ञमपि साक्षिणं कृत्वा यदा प्रत्याख्याति तदा शुद्धः। चतुर्थस्त्वशुद्ध एवेति। अथोत्तरगुणप्रत्याख्यानं द्वितीयं, तच्च दशधा प्रतिदिनोपयोगित्वेन तावद्गण्यतेऽनागतादिकं। उक्तं च—

अणागय १ मइक्कंतं २ कोडिसहियं ३ नियंटि ४ अणागारं ५।
सागार ६ निरवसेसं ७ परिमाणकडं ८ संकेय ९ अद्धा १० ॥ १ ॥

अनागतं भाविप्रत्याख्यानं भविष्यति पर्युषणादि पर्व, तत्र चाष्टमादि तपः कार्यं, पर्युषणादौ सूरि-ग्लानादिवैयावृत्त्यकरणान्तरायसद्भावात्तत्पर्वतोऽर्वागेव तत्तपःकरणं अनागतं तपः १। अतिक्रान्तं एव-मेवगुरुविश्रामणादिकार्यव्याकुलतया न तपति पर्युषणादौ, तदूर्ध्वं तत्पर्वणि व्यतीते तत्तपःकरणं अति-क्रान्तं २। कोटिसहितं प्रभातेऽभक्तार्थमुपवासं यत् कृत्वा उपवासं करोति द्वितीयप्रभातेऽपि इति कोटि-द्विकमिलने पूर्वदिने कृतं तस्यामेव वेलायां तपः प्रत्याख्याति तत्कोटी, एवं प्रत्याख्यानपारणादर्वागाचा-म्लादितपःकरणं तत्कोटितपः ३। नियन्त्रितं—नितरां यन्त्रितं प्रतिज्ञातदिनादौ ग्लानताद्यन्तरायस-

भावेऽपि नियमात् कर्तव्यं, तच्च प्राक् चतुर्दशपूर्वधरादयः कृतवन्तः प्रथमसंहनिनश्च, स्थविरा अपि पूर्वधरादिकालेऽकार्षुः। अधुना त्वेतन्नियन्त्रितं प्रत्याख्यानं व्युच्छिन्नम् ४। अणागारमिति—अनाकारं आकारैर्महत्तरादिभिर्यद्रहितं तदनाकारं, अस्मिन्नपि अनाभोगसहसाकारौ द्वावाकारौ वाच्यौ, येन कदाचिदनाभोगतः सहसा वा रभसेन मुखेऽङ्गुलितृणादि क्षिपेत्निपतेद्वा कुतोऽपि इति। शेषैर्महत्तरादिभिः रहितमनाकारं ५। साकारं महत्तरादिभिराकारैर्युक्तं यत्क्रियते तत्साकारप्रत्याख्यानं। एतेषु सत्सु गुर्वाज्ञया महति कार्यार्थे भुजिक्रियामपि कुर्वतो न भङ्गः ६। कृताकारत्रिकमपि निरवशेषमिति—अश्यते तदशनं मोदकमण्डकखज्जकादि, पीयत इति पानं खर्जूरद्राक्षापानादि, खादिमं नालिकेरफलादि गुडधानादिकं च, स्वादिममेलाफलकर्पूरलवङ्गपूगीफलादि, इदं (अमुं) चतुर्विधमप्याहारं व्युत्सृजति तन्निरवशेषं प्रत्याख्यानं ७। परिमाणकृतमिति—परिमाणं सङ्ख्यानं दत्तिकवलगृहभिक्षादीनां कृतं यस्मिंस्तत् परिमाणकृतं प्रत्याख्यातवस्त्वधिकग्रहणं त्याज्यं तत्परिमाणकृतं प्रत्याख्यानं ८। संकेयमिति—सङ्केतो गृहमुच्यते सह नि(सं)केतेन वर्तते, अथवा सङ्केता गृहस्थास्तेषामिदं साङ्केतं प्रत्याख्यानं, प्रायेण गृहस्थानामेवेदं स्यात् इति। अथवा केतं चिह्नमुच्यते, सह केतेन वर्तते तत्सङ्के(के)तं। तच्चैवं स्यात्—श्रावकः कोऽपि पौरुष्यादिप्रत्याख्यानं कृत्वा क्षेत्रादौ गतो गृहे वा तिष्ठन् पूर्णेऽपि पौरुष्यादौ प्रत्याख्याने यावदद्यापि भोजनसामग्री न जाता तावत्क्षणमपि प्रत्याख्यानरहितो मा भूवमित्यङ्गुष्ठादिकं चिह्नं करोति, यावदङ्गुष्ठं मुष्टिं ग्रन्थिं वा न मुञ्चामि गृहं वा न प्रविशामि स्वेदबिन्दवो वा न शुष्यन्ति दीपो

वा यावन्न निर्वाति तावन्न भुञ्जेऽहमिति । केनचित् पौरुष्यादि न कृतं, किंतु केवल एवाभिग्रहः क्रियते यावद्ग्रन्थ्यादिकं न छोटयतीत्यादि, तथा साधोरपीदं भवति ए । अद्धा इति—अद्धाशब्देन कालः, तस्य न कालस्य मुहूर्त्तपौरुष्यादिप्रमाणं यत्प्रत्याख्यानं तदद्धाप्रत्याख्यानं चरमं इति १० ।

अथ गृहीतं प्रत्याख्यानं सर्वथा दामन्नकवत्पालनीयं, तथाहि—

गजपुरे सुनन्दाख्य एकः कुलपुत्रोऽभूत् । तस्य जिनदासश्राद्धेन सह मैत्री जाता । तदन्तिके प्रत्यहं प्रत्याख्यानमाहात्म्यं शृणोति । एकदा श्राद्धेन गुरुसमीपे स नीतः । गुरुणाऽनागतादिप्रत्याख्यानस्वरूपं तत्फलं च वर्णितं । तन्निशम्य सुनन्दो मांसमद्यभक्षणप्रत्याख्यानं भावेन जग्राह । अन्यदा महति दुर्भिक्षे सर्वत्र प्रसृते पश्चारकवत्सर्वोऽपि जनो मांसभक्षणतत्परः प्रायोऽजनि । तदा क्षुधापीडितैः स्वजनैरुपालम्भपूर्वकं कथञ्चित्तस्य श्यालकेन समं मत्स्यग्रहणार्थं ह्रदेऽनीयत सः । ततः सुनन्दो जले जालं निक्षेप्य मत्स्यान् प्रेक्ष्य मुञ्चति । तदा भावुकः प्राह—"रे मद्भगिनीपते ! त्वं तन्मुण्डकवाक्यजाले पतितः कथं कलत्रादीन् दुःखजालतः कर्षिष्यसि ? तव दयार्द्रत्वं दृष्टं, दिनद्वये जातेऽपि एकोऽपि मत्स्यो नागात्" । स प्राह—"किं करोमि ? अस्याभ्यासो मया कदापि न कृतः" । ततः स शिक्षयति, परं स्वचित्ते धर्मनैश्चल्यं नामुञ्चत् । तृतीयेऽह्नि तु एकस्य झषस्य पक्षं त्रुटितं वीक्ष्य शोकार्तः स्वजनान् जगाद—"अहं तु जातुचिदिमां न कुर्वे" । इत्युदित्वा तेनादीनमनसा निरवशेषं प्रत्याख्यानमनशनं च विहितं । ततो राजगृहे मणिकारश्रेष्ठिवेश्मनि सुतत्वेनोत्पन्नः । पितृभ्यां दामन्नक इति नाम स्थापितं । क्रमादष्टवर्ष-

प्रमाणे जाते सति मार्युपद्रवेण तस्य सर्वं कुलं विनष्टं। तद्भयेन भीतो दम्यर्थात्रष्टः, अन्यत्र भ्राम्यन् सागरपोतश्रेष्ठिगृहेऽगात्। तत्र दास्यकर्म कृत्वा प्राणवृत्तिं विदधे। अन्यदा तत्र साधुयुगलमागमत्, तयोर्ज्येष्ठस्तु सामुद्रिकशास्त्रदक्षस्तं दामन्नकं वीक्ष्य द्वितीयं मुनिं स्माह—"असौ दासो वृद्धिं प्राप्तः सद्मस्य गृहस्य स्वामी भविता"। तत्सर्वं कुड्यान्तरस्थितेन श्रेष्ठिना श्रुतं। वज्राहत इवोत्पन्नविषाद इति दध्यौ—"नूनमद्यैवैनं शिशुं केनचिदुपायेन मारयामि। बीजे नष्टेऽङ्कुरस्योद्भवः कुतो भावी?"। इति ध्यात्वा सागरश्रेष्ठी मोदकैस्तं बालं प्रलोभ्य श्वपचपाटके प्रेषितवान्। तत्रैको मातङ्गोऽर्थदानैर्वशीकृतः स तद्वधाय समादिष्टः, अभिज्ञानं च याचितं श्रेष्ठिना। अथ तं बालं मृगार्भकमिव मुग्धं वीक्ष्य संजातकरुणः स श्वपाकस्तत्कनिष्ठाङ्गुलिं छित्त्वा तमिदं वचः प्रत्यूचे—"अरे मुग्ध! यदि जीवितुमिच्छसि तर्हि द्रुतमितो नंष्ट्वा गच्छ"। तन्निशम्य कम्पमानाङ्गस्ततो नश्यन् झटित्येव क्रमेण यत्र सागरश्रेष्ठिनो गोकुलमस्ति तद्ग्रामं प्राप। गोकुलरक्षकेण नयान्वितां तस्य चेष्टां वीक्ष्य पुत्रत्वेन विधाय रक्षितः। क्रमेण यौवनं प्राप। अन्यदा सागरश्रेष्ठी गोकुले याति स्म। तत्र छिन्नाङ्गुल्योपलक्षितं दामन्नकं निरीक्ष्य तत्समये सद्यः कस्यचित्कार्यस्य मिषं विधाय गोकुलपालकमापृच्छ्य श्रेष्ठी स्वपुत्रोपरि लेखं लिखित्वा तस्मै दामन्नकाय दत्त्वा प्रैषयत्। स तं लात्वा द्रुतं राजगृहं ययौ। तत्पुरोद्याने स्मरदेवकुले स श्रान्तो विश्राम, सद्यो निद्रां प्राप। इतश्च सागरपुत्री विषानाम्नी वरार्थिनी तद्देवकुलेऽगमत्। तत्र दामन्नकपार्श्वे तातमुद्रया मुद्रितं तं लेखमालोक्य सद्यो लघुहस्ता तमाददौ। तं लेखं विमुच्येत्यवाचयत्—"स्वस्तिश्री-

गोकुलात् श्रेष्ठिसागरदत्तः समुद्रदत्तं पुत्रं सस्नेहमित्यादिशति अधीतपादस्यास्य पुरा हे वत्स ! विषं प्रदीयतां, अत्रार्थे संशयो न कार्यं" इति वाचयित्वाऽञ्जनशलाकया बिन्दुं विलोप्य विषशब्दे विषा इत्यकरोत् तद्रूपमोहिता स्वनाम न्यधात्। ततो मुद्रयित्वा सा स्वगेहे मुदा समागमत्। प्रबुद्धः सोऽपि गत्वा श्रेष्ठिसुताय लेखमार्पयत्। सोऽपि लेखं वाचयित्वा हृष्टः तात्कालिकलग्नेन महताडम्बरेण तेन सर्व-समक्षं स्वभगिनी विषानाम्नी दत्ता। स तया समं सुखं व्यलसत्। ततो गोष्ठात्सागरोऽगात् गृहं। तन्नि-शम्य विषण्णो दध्यौ—"अहो ! चिन्तितमन्यथा जातं, अधुना तु जामाता जातस्तथापि प्रपञ्चं विधाय मारयामि. पुत्रीवैधव्यं भविता तद्वरं, परंतु वैरी वृद्धिं प्राप्तस्तन्न चारु"। इति ध्यात्वा तं श्वपाकं प्राह— "अरे ! तदा त्वया तदभिज्ञानं प्रदर्श्याहं वञ्चितः, तन्नाहं"। सोऽवक्—"इदानीं दर्शय, अवश्यं तं हन्मि"। अथ श्रेष्ठी वधुघातसङ्केतं मातृकादेवीगृहे दत्त्वा स्ववेश्मन्येत्य जामातरं प्राह—"हे वत्स ! त्वं स्वपत्न्या सह मातृकादेवीप्रासादे पूजार्थं व्रज, यत्प्रसादाद्दम्पतिकुशलं स्यात्"। अथ सूर्यास्तसमये तौ तदर्चार्थं प्रचेलतुः। मार्गान्तराले सागरसुतो मिलितः, तेनोक्तं—"कोऽयं प्रथमं पूजायाः समयः, यतः प्रदोषो वस्तुदोषः आसन्नप्रवर्धमानतमोभरत्वात्" इत्युक्त्वा तौ तत्र संस्थाप्य स्वयं गतः पूजार्थं। तदन्तः प्रविशन् पूर्वश्रेष्ठिसङ्केतितश्वपाकेन भ्रान्त्या हतः दुर्गाया बलिं कर्तुमिवाग्रत आत्मजो मृतः। तदाकर्ण्य सागरो वक्षःस्फोटेन पञ्चत्वमाप। राजादिभिस्तद्गृहस्वामी दामन्नकः कृतः। एकदा पश्चाद्रात्रौ मङ्गलपाठ-कमुखत एकामिमां गाथां शुश्राव—

अणुपुव्वमावडंतावि आवया तस्स संपया हुंति । सुहडुक्कयय पुरुओ जस्स कयंतो वहइ पक्खं ॥ १ ॥

त्रिवारान् श्रुत्वा त्रिलक्षदानं तस्मै ददौ । तत्प्रयोजनं नृपेण पृष्टं । दामन्नकः सर्वं प्राक्चरित्रं जगाद । ततो ज्ञानिगुरुसंयोगमवाप्य पुराजवकृतप्रत्याख्यानफलं सम्यगवबुध्य जातिस्मृत्या च विशेषेण धर्मतत्परो बभूव । ततो देवलोकसुखं प्राप्य क्रमाद्विदेहे सिद्धिं प्राप्स्यति ॥

वैरिप्रयुक्तं व्यसनं व्यलीकतां, प्रापेति पूर्वं कृतदेशसंयमात् ।
दामन्नकोऽभ्युदयमियाय तत्फलं, लोकोत्तरं तत्त्वमहो व्रतात्मनः ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ सप्तदश-
स्तम्भे एकोनपञ्चाशदधिकद्विशततमं २४९ व्याख्यानम् ॥

## पञ्चाशदधिकद्विशततमं २५० व्याख्यानम् ॥

अथ व्रतखण्डनफलमाह—

यथा श्रेष्ठिसुतः पूर्वं धर्मखण्डनयाऽनया ( लज्जत् ) । धनदाख्यः फलखण्डं मत्स्योदरपराजिघः ॥ १ ॥

स्पष्टः । ज्ञातं चेदं—कनकपुरे कनकरथो राजा। तत्र सागर(रत्नसार)दत्तश्रेष्ठी, तस्यात्मजो धनदत्तः । तत्पुरे सिंहलकितवोऽन्यदा देवतालये गतः, तेनोक्तं—"भङ्क्ष्यामि त्वन्मूर्तिं नो चेद्धनं ददासि मे"। तयोक्तं—"तव पुण्यं न तथापि गाथामिमां त्वं गृहाण—

जं चिय विहिणा लिहियं, तं चिय परिणमइ सयललोयस्स।
इअ जाणेविय धीरा, विहुरेऽवि न कायरा हुंति ॥ १ ॥

एषा गाथा दिनारसहस्रेण देया"। ततो गृहीत्वा गतश्चतुष्पथे। धनदत्तेन वाचयित्वा दिनारसहस्रं दत्त्वा गृहीता। तत्पित्रा ज्ञातं। निष्कासितो गृहात्। तत उत्तरदिशं गतो मार्गे चौरैर्गृहीतः, वणजारकाणां दत्तो मूल्येन। तैः पार्श्वकूले विक्रीतः, तत्र रुधिरकृते पात्रितो (त्वष्टः) गृहीतं रुधिरं, जातो निश्चेतनः। रुधिरखरण्टितत्वाद्गृहीतो भारण्डैः, उत्पाट्य स्वर्णद्वीपे मुक्तः। सर्वत्र गाथार्थं विचार्य सुखं जीवति। तत्र रात्रावरणिकाष्ठादिभिरग्निमुत्पाद्य तापितः। प्रातरेकत्र भूमौ हेम दृष्टं। तत्रेष्टिका निजनामाङ्किताः पातिताः। अष्टौ सहस्राः पञ्चाधिकाः सङ्घाटकाः कृताः। इतश्च तत्र प्रवहणिका जलार्थं समायाताः। तैः पृष्टः—"कथं त्वमत्र भोः?"। तेनोक्तं—मदीयानि सुवर्णेष्टिकारत्नानि भाटकेन गृहाण, चतुर्थांशं दास्ये, नौस्वामिना प्रवहणे सर्वं क्षिप्तं। ततो विश्वास्य कूपे पातितो लोभान्नौस्वामिना। तत्र कूपान्तः सोपानपङ्क्तिर्दृष्टा। गतस्तेन पथा। दृष्टं शून्यं पुरं। तत्र चक्रेश्वरीदेवीचैत्यं रम्यं वीक्ष्य गतो मध्ये। वन्दिता, पूजिता। भक्तितुष्टया देव्या रत्नपञ्चकं दत्तं—एकेन सौभाग्यं, द्वितीयेन रोगोच्छेदः, तृतीयमापद्धरकं, चतुर्थं विषापहं, पञ्चमं लक्ष्मीदायकं। ततः पुरमध्ये गतः, परं निर्मानुषं। ततो गतो धवलगृहस्योपरि। तत्रैका कन्या दृष्टा। तया कृतं स्वागतं। तेन पुरशून्यादिहेतुं पृष्टा साऽऽह—श्रीतिलकपुरे महेन्द्रो राजा मम पिता। एकदा शत्रुभिर्वेष्टितं नगरं। रात्रौ व्यन्तर एकः समेतः। राज्ञोक्तं—"कस्त्वं?"।

तेनोक्तं—"तव पूर्वजन्ममित्रमस्मि"। "तर्हि मम पुरं समानुषं तत्र मुञ्च यत्रोपद्रवः शत्रोर्न स्यात्"। तेनैकं पुरं कूपबाह्ये न्यस्तं, द्वितीयं कूपमार्गेणात्रानीतं। एकदा राक्षसोऽत्रागतः। तेन द्वे अपि नगरे निर्मानुषे कृते। तेन मां विना सर्वमानवाशनं कृतं। सोऽद्य मां परिणेष्यति। यावदिति वार्तां कुरुतः तावद्व्योम्नि शब्दं कुर्वन् स राक्षसः समागात्। तयोक्तं—"त्वमत्र छन्नं संतिष्ठ, स पापात्मा त्वां न हन्ति, ततोऽनेन चन्द्रहासखड्गेन देवपूजासमये पापीयान् हन्तव्यः"। स गुप्तं स्थितः, तेन प्रस्तावे हतः। ततस्तां परिणीय सर्वरत्नादिसारं संगृह्य तत्र कूपे समागतौ। तदा नाविका जलार्थं समागताः। मध्ये मनुष्यौ ज्ञात्वा निष्कासितौ नौस्वामिना नूरमादाय चटापितौ प्रवहणे। नौस्वामिना स्त्रीरूपं काञ्चनं च वीक्ष्य मोहितेन तं विश्वास्य पातितः समुद्रे। गाथार्थं विज्ञापयति। पतता भाग्येन लब्धं फलकं। यावत्कल्लोलैः प्रेर्यमाणो गच्छति तावन्महाकायमत्स्येन गिलितः सफलकः। अत्र महाविषादं प्राप्तो गाथार्थं विज्ञापितवान्—"जं जं विहिणा लिहियं०"। अन्येद्युर्मत्स्यस्तस्य भारेण खिन्नस्तटे गतः गृहीतो धीवरैः। यावद्विदारयन्ति तावन्निःसृतः स पुरुषो मूर्छितः स मन्दं मन्दं सज्जीकृतः। कनकपुरस्वामिनस्तद्वृत्तान्तं निवेद्यानीतो राजसमीपे। राज्ञा पूर्ववृत्तान्तं स पृष्टः। निवेदितं सर्वमेकान्ते। ततः स्थगिकाधरः कृतः, महासन्मानादिकं दत्तं। एकदा येन कूपे पातितः स इभ्यः समेतः तस्मिन् वेलाकूले। ततः प्राभृतं गृहीत्वा नृपाग्रे मुक्त्वोपविष्टः। स्थगिकाधरमुपलक्ष्य स वणिग्दध्यौ—"अयं नवीनः, अस्य जात्यादिकमद्यापि कोऽपि न वेत्ति"। ध्यात्वेति प्रारब्ध उपायः। तेन शिक्षिताः श्वपाकाः—"अहं सुवर्णेष्टिकानां

मंपुटानि दास्यामि, त्वज्ञिरमुं स्थगिकाधरमालिङ्ग्यैवं वाच्यं—हे बान्धव ! घनतैरर्दिनैर्मिलितस्त्वं” इति
तेषां ज्ञापितं । अन्येद्युस्तैः सर्वं तथा कृतं । तद्दृष्ट्वा राज्ञा पृष्टं—“किमेतत् ?”। तैरुक्तं—“अस्माकं बान्ध-
वोऽसौ, अतो रुदिमः” । ततः स मत्स्योदरो राज्ञा पृष्टः—“रे रे ! मम गृहे कथमायातः ? सर्वं म्लेच्छी-
कृतं” । तेनोक्तम्—“स्वामिन् ! महाप्रबन्धोऽस्ति श्रूयतां ततः “जं चिय०” इत्यादि कथितं तेनामूल-
चूलं । ततो रत्नपञ्चकं जङ्घां विदार्य निष्कास्य राज्ञेऽर्पितं देव्यर्पितं । “एतत्पञ्चकं मम पार्श्वेऽस्ति पाश्चा-
त्यसर्वस्वमेतेषां पार्श्वे तिष्ठति” । ततो राज्ञा ते ताडिताः सत्यं प्रोचुः—“लक्ष्मीयं गृहीता” । अष्टौ संपुटा
दत्ताः । राज्ञा ते स्फोटिताः । मध्ये दृष्टं नाम धनदत्तस्य । ततो नृपेनाकारितो नौस्वामी “रे रे मार्यता-
मेषः, अनेन द्रोहबुद्धिना धनदत्तस्य सर्वं गृहीतं क्षिप्तश्च कूपे” एवमुक्त्वा गृहीतं सर्वस्वं, कृतो दरिद्र-
प्रायः पश्चात्स मोचितो मत्स्योदरेण, निष्कासितो राज्ञा नगरात् गृहीतसर्वस्वः । प्रशंसां कृत्वा मत्स्योदरस्य
राज्ञा पृष्टं—“कस्य सुतस्त्वं ? कथय” । “देवास्मिन्नेव नगरे श्रेष्ठी रत्नसारनामा मम पिता” इत्यादि-
वृत्तान्तः प्रोक्तः । हृष्टो राजाऽऽह—“तर्हि गच्छ त्वं स्वपितुर्गृहे” । “देव ! अहं देवदत्तं प्रतीक्षे” ।
राज्ञोक्तं—“कस्मात्कारणात् ?” । तदा तेन निजप्रियावृत्तान्तः सकलोऽपि निवेदितः । ततः स देवदत्तः
कियति काले गते आगतः । स प्राभृतं लात्वा तिलकमञ्जर्या सहागतः । मत्स्योदरेण नृपाय निवेदितं—
“स एष देवदत्तः, एषा मम प्रियतमा” । ततो राज्ञा स श्रेष्ठी पृष्टः—“केयं सुन्दरी रूपकिन्नरी पिहिता-
नना ?” । देवदत्तेनोक्तं—“देव ! मया कटाहद्वीपादानीता, परमसौ कथयति यदि राजाऽऽदेशं दास्यति

तदा तव गृहे समेष्यामि" । ततो राज्ञा सा पृष्टा—"किमयं वक्ति ? अस्य वाञ्छितं करोषि न वा ?" । साऽवक्—"हे नरनाथ ! मम भर्ताऽनेन समुद्रे पातितः । अहं पतिव्रताऽस्मि । मम वैश्वानरं देहि । एतावद्दिनानि विप्रतार्यात्रानीतः पूर्वं मया भर्तृमुखात् "जं चिय विहिणा०" इत्यादि श्रुतं, तदनुसारेण सर्वं निष्पन्नं, अतः किं शोचनेन ?" ।। राज्ञोक्तं—"हे वत्से ! कथं त्वं निजभर्तारमुपलक्षयसि ?" । तयोक्तं—"क्वास्ति देव ! मम भर्ताऽनेन पापात्मना समुद्रे पातितः ?" । ततो राज्ञा दर्शितः स्थगिकाधरः । तयोक्तं—"स्वामिन् ! समानाकृतयः प्रचुराः पुरुषाः सन्ति" । ततो मत्स्योदरेण तिलकपुरवृत्तान्तखेचरमारणकूपनिःसरणादिकः सर्ववृत्तान्तः कथितः । तया ज्ञातं "एष मम भर्ता" । राज्ञा देवदत्तो गृहीतसर्वस्वः कृतः । मार्यमाणो मोचितो मत्स्योदरेण । ततो राज्ञाऽनुज्ञातो गतो मत्स्योदरस्तया सह पितुर्गृहे । तत्र प्रवेशविस्तरः कृतो राज्ञा । ततो हृष्टौ जातौ मातापितरौ । एकदा राज्ञा सह गत उद्याने मुनिवन्दनार्थं । वन्दिता मुनयः । श्रुता धर्मदेशना । तेन मुनिः पृष्टः—"भगवन् ! पूर्वभवे मया किं कृतं ?" । कथयन्ति गुरवः—भो धनदत्त ! श्रृणु पूर्वभवं । पुरा रत्नपुरे महणाह्वश्रेष्ठिसुत उद्याने गतो मुनिं ददर्श । तं नत्वा स्थितः । तदा गुरूक्तदेशनां श्रुत्वा सम्यक्त्वमूलं गृहिधर्ममुपाददे । पुनः साधूनत्वा निजमन्दिरं गतः । द्रव्येण जिनचैत्यमुत्तुङ्गं कारयित्वा दध्यौ—"बहुद्रव्यव्ययो मया धर्मरसाधिक्येन पराधीनतया कथं कृतः ?" । स एवं वासनाभ्रष्टोऽपि लोकानुरोधेन प्रतिमामप्यकारयत् । पुनर्दध्यौ—"उपार्जितधनस्य चतुर्थभागो धर्मे निधेयः, मया तु काचिदपि धारणा न कृता, तत्किं कृतं ? अधुनाऽस्य फलं भावि न

वा? यतः शास्त्रे स्तोकस्यापि महत्फलं श्रूयते"। एवं ससंशयोऽपि पूजादिकं करोति। अन्यदा साधुयुगलं प्रतिलाभ्य दध्यौ—"यद्येते निर्मलं वेषं धारयन्ति तदा जैनधर्मे किं दूषणं लगति? अथवा मया दुर्ध्यानं कृतं, यतो मुनयः कन्दर्पोपायरूपदेहपरिचर्याकरणशुश्रूषादीन्नैव विदधति"। एवं शुभभावेन शुभकर्म अशुभध्यानेन चाशुभमन्तरान्तरा उपार्जयत्। आयुःक्षये विपद्य स देवो भुवनाधिपोऽभवत्। ततश्च्युत्वा त्वं मत्स्योदराख्यो जातः।

कृत्वा कृत्वान्तरा धर्मो, यत्त्वया दूषितस्तदा। सुखानि दुःखमिश्राणि, लब्धानीह ततः स्फुटम्॥ १॥

इति श्रुत्वा मूर्छितो जातिस्मृतिं प्राप्य सत्यं धर्माधर्मफलं विचार्य पितरावापृच्छ्य प्राप्तवैराग्यो नृपादिभिः सह दीक्षां जग्राह। वैमानिकदेवसुखं भुक्त्वा महाविदेहे मुक्तिं गतः॥

मानुष्यकादिसामग्रीं, लब्ध्वा ज्ञात्वा भवस्थितिम्। धर्मो निरन्तरं कार्यो, निरन्तरसुखार्थिभिः॥ १॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ सप्तदशस्तम्भे पञ्चाशदधिकद्विशततमं २५० व्याख्यानम्॥

## अथ एकपञ्चाशदधिकद्विशततमं २५१ व्याख्यानं॥

अथ मौनैकादशीकथाप्रारम्भः—

प्रणम्य श्रीमद्वामेयं, पार्श्वयक्षादिपूजितम्। माहात्म्यं स्तौमि श्रीमौनैकादश्या गद्यपद्यतः॥ १॥

स्पष्टः । माहात्म्यं चेदं—द्वारिकायां श्रीनेमिजिनः समवसृतः । उद्यानपालवाक्यतः श्रीकृष्णो मुदितः सर्वर्द्ध्या श्रीशैवेयं नत्वेति देशनामशृणोत् । यतः—

एगदिने जे देवा चवंति तेसिं पि माणुसा थोवा । कत्तो मे मणुयभवो इति सुरवरो उद्दिट्ठं ॥ १ ॥

एवं नरत्वं दुर्लभं ज्ञात्वा न प्रमादो विधेयः । यतः—

अन्नाण १ संसउ २ चेव मिच्छत्ताणं ३ तहेव य । रागो ४ दोसो ५ मइब्भंसो ६ धम्मम्मि य अणायरो ७ ॥१॥

जोगाण दुप्पणिहाणं ८ पमाउ अट्ठ महाभवे । संसारुत्तारकामेण सव्वहा वज्जियव्वउ ॥ २ ॥

इत्यष्ट प्रमादा हेयाः । इत्यादिधर्मदेशनां श्रुत्वा इन्द्रानुजः श्रीजगद्गुरुं प्राह—"राजकार्यव्यग्रेण मया कथमजस्रं धर्मो विधीयते ? अतो वर्षवासरेषु एकं सारं दिवसं वद" । भगवानुवाच—हे वत्स !

एवं चेत्तर्हि मार्गस्य मासः पक्षे सिते शुभा । एकादशी प्रयत्नेन त्वया सेव्या पीताम्बर ॥ १ ॥

अस्मिन् दिने वर्तमानचतुर्विंशतिकायां त्रयाणां जिनानां पञ्च कल्याणकानि जातानि । यतः—

अस्यां चक्रिपदं हित्वाऽर्हदरजिनो व्रतम् । जन्म दीक्षां च सज्ज्ञानं मल्ली ज्ञानं नमीश्वरः ॥ १ ॥

इत्थं पञ्चसु भरतेषु नियतं पञ्च पञ्च कल्याणकानि जायन्ते । एवं दशस्वपि क्षेत्रेषु एकत्र मिलनात् पञ्चाशत्सङ्ख्ययाऽर्हतां कल्याणकानि भवन्ति । त्रिकालविभेदतः सार्धशतं भवेत् । त्रिंशच्चतुर्विंशतिकामध्ये नवतिजिनानां तानि १५० ज्ञातव्यानि । अतोऽयं वासरः श्रेष्ठतरः । तथा शैवशास्त्रेऽर्कपुराणे एकादशीमाहात्म्यं दर्शितं । तथाहि—

हेमन्ते चैव संप्राप्ते मासे मार्गशिते पुनः । शुक्लपक्षे कुर्यात्पार्थ ! उपोष्यैकादशीं शुभाम् ॥ १ ॥
द्विलक्षविप्रा गृहे यस्य भुञ्जते च दिने दिने । एकादश्युपवासेन तत्फलं लभते नरः ॥ २ ॥
केदारे उदकं पीत्वा पुनर्जन्म न विद्यते । एकादश्युपवासेन पुनर्जन्म न विद्यते ॥ ३ ॥
एकादशी यथा पार्थ गर्भवासक्षयंकरी । व्रतमेतत्समं पुण्यं न भूतं न भविष्यति ॥ ४ ॥
गोसहस्रेण यत्पुण्यं ब्रह्मचारी धनञ्जय । ब्रह्मचारिसहस्रस्य वानप्रस्थस्ततोऽधिकः ॥ ५ ॥
वानप्रस्थसहस्रस्य भूमिदानं धनञ्जय । भूमेर्दशगुणं कन्या सर्वाभरणभूषिता ॥ ६ ॥
कन्यादशगुणा विद्या पृथिव्यां च धनञ्जय । विद्याशतगुणं दानं यो ददाति बुभुक्षिते ॥ ७ ॥
अन्नदानात्परं यज्ञं गोमेधं चापि पाण्डव । गोमेधशतगुणं पुण्यं अश्वमेधे कृते सति ॥ ८ ॥
नरमेधेन यज्ञेन अश्वमेधसहस्रकम् । नरमेधशतेनैव केदारे चैव पाण्डव ॥ ९ ॥
एकादश्यामधर्मुक्तः पुण्यसङ्ख्या न विद्यते । ब्रह्मादिः पाण्डवश्रेष्ठ व्रतं चैतत्समाचरेत् ॥ १० ॥

इति लोकग्रन्थोक्तिर्ज्ञेया । श्रीनेमिजिनेश्वरप्रणीतं लोकोत्तरस्वरूपमयं चैकादशीवर्णनं निशम्य श्रीमुकुन्दो जिनं प्राह—"केनासौ पक्षः प्राक् समाराधितः ?" । आप्तो हरिं प्रति सुव्रतश्रेष्ठिनः संबन्धं जगौ, तद्यथा—

धातकीखण्डे विजयपत्तने राज्ञा दत्तसंमान इभ्यपङ्क्तिपुरोगः सूरश्रेष्ठ्यभूत् । तस्य सुशीला सूरमती कान्ता । एकदेभ्यः सुखसुप्तो निशान्ते इत्यचिन्तयत्—"प्राक्पुण्यपचेलिमभरेण सौख्यममनुगतवासरान्

गमयामि, परं प्रेत्यहितावहं किञ्चित्करोमि, तद्विना सर्वं निरर्थकं"। चिन्तयतीति श्रेष्ठीशे मार्तण्डो-दयोऽभवत्। प्रातः श्रीगुरुं वन्दितुं प्रययौ। गुरुभिर्धर्मदेशना प्रारब्धा—

आलस्स १ मोह २ वन्ना ३ थंभा ४ कोहा ५ पमाय ६ किविणत्ता ७।
भय ८ सोगा ९ अन्नाणा १० वक्खेव ११ कुरुहला १२ रमणा १३ ॥ १ ॥

इति त्रयोदश काठिया ( कष्टा ) स्त्याज्याः। ये न त्यजन्ति ते नरकं प्राप्नुवन्ति। यतः—

पणकोडि असय (डि) लक्खा नवनवइसहस्स पंचसया।
चुलसी अहीय नरए अपइट्ठाणम्मि (से) वाही ॥ १ ॥

हे इभ्येश! श्वभ्रादिदुःखत्यागार्थं नित्यं धर्मो विधेयः। अचिन्त्यो महिमा पुण्यस्य। यतः—

भरहे य केइ जीवा मिच्छादिट्ठी य भद्दया भावा। ते मरिऊण नवमे वरिसम्मि हुंति केवलिणो ॥ १ ॥

सुलभबोधिनां न किमपि दुष्करं। इति निशम्य श्रेष्ठी स्माह—"गृहकर्मरतेन मया नित्यं धर्मं कर्तुं नो शक्यते, तस्मादेकवासरं ब्रूत, यस्मिन् दिन आराधिते सांवत्सरिकपुण्यमाप्यते"। ततो गुरुरगृणात्—"मार्गशीर्षस्यैकादशीं सितामष्टप्रहरपौषधोपवासेन सावद्यवाग्रोधेन मौनेन चाराधय, मासेष्वेकादशस्वपि विधिवत्तपसि पूर्णे सति मुदोद्यापनं विधेहि"। तदाकर्ण्यैकादशीव्रतं परिकरयुतेन श्रेष्ठिनाऽङ्गीचक्रे। अथोद्यापनं व्रते पूर्णे विधिना विदधे। ततस्तस्य पञ्चदशेऽह्नि सहसा शूलमुत्पन्नं। तद्रोगेण पञ्चत्वं प्राप्य सुरलोके सुरोऽजनि। तत्रारणे कल्पे एकविंशतिसागरोपमायुष्कं परिपाल्य ततश्च्युत्वा इह भरते सौरिपुरे

समृद्धदत्तश्रेष्ठ्यभवत्, तस्य प्रीतिमती पत्नी, तस्याः कुक्षाववातरत्। ततो गर्भमहिम्ना "व्रतं गृह्णामि, अणुव्रतमहाव्रतधारकानशनादिभिः पूजयामि, सर्वसंसारिजीवान् व्रतसंपृक्तान् विदधामि, गीतनृत्यवादित्रवार्ताविनोदेषु सम्यग्व्रतपालकगुणान् शृणोमि" इत्यादिदोहदेषु संपूर्णेषु समये रूपलावण्यसंयुतं तनयमसूत। एतस्य नालक्षेपार्थं भुवि खातायां निधानं प्रकटीबभूव। महोत्सवेन सुव्रताभिधानं चक्रे। क्रमादभ्यस्ताः सकलाः कलाः। यौवने पित्रैकादशकुमारीभिः सह पाणिपीडनमहो विदधे। अन्यदा पितरि त्रिदिवं गते एकादशस्वर्णकोटिस्वामी स सुव्रतोऽभूत्। एकदा श्रीपूज्यवन्दनार्थं गतः। अत्र श्रीगुरुवर्णनं, तद्यथा—स्मरशर( ५ )मितसमितिभिः समितः, समय(३)मेयगुप्तिभिर्गुप्तः सुमेरुनेत्र(२५)प्रमितभावनाभावितस्वान्तः, पञ्चमहायममहाभारोद्वहने धुरीणः, दिविजमनुजतिर्यग्योनिजातमजजनितभैरवोपसर्गवर्गैरप्यरीणः, द्वाविंशतिपरीषहप्रतिपक्षचमूजेता, तरणितुरगनेत्र(२७)प्रमितगुणगरिष्ठविशिष्टतरमुनिनिकरनेता, पञ्चविधाचारनिरतिचारचरणनिरतः, प्राकृतजनमूर्च्छाविधाननिदानविषयग्रामविरतः, दूरीकृतत्रिभुवननिवासिजनप्रेष्यताविधानप्रसर्पद्दर्पप्रसरकुसुमशरविकारः, सम्यगवगतश्रीमदार्हतमतसम्मतसूक्ष्मतरविचारसकलभव्यसिद्धिकलोकहृदयंगमः, सुसंयतपञ्चप्रमिततरलतरकरणतुरंगमः, निजशुद्धादेशदेशनानिर्नाशितभव्यजन्तुजातजीवितभूतश्रीमत्सम्यग्दर्शननिर्नाशनप्रत्यलमिथ्यादर्शनोग्रगरलः, दुर्जनदुर्वचनरचनाप्रचण्डवात्याविसर्पणेऽप्यतरलः, क्षमामार्दवार्जवमुक्तिप्रभृतिदिग्भेदश्रीमच्छ्रमणधर्मसमाराधनसावधानहृ-

१ धनञ्जयः

दर्पमदनदूरोत्सारितशल्यत्रुतनन्दत्रेदनिदानः, नवविधश्रीमद्ब्रह्मचर्यगुप्तिसम्यक्संरक्षणैकपरायणः, दुष्कर्मदैत्यसमुदायविध्वंसने नारायणः, दूरपरित्यक्तविचिकित्सारत्यरतिभीतिहास्यः, चन्दनचर्चकच्छेदकजनयुग्मसमानमनोविलासः, सर्वथा निर्ममतया निराशीकृतशोकः, निजनिरुपमवचनकलारञ्जितसकललोकः, सकलश्रीमदार्हतागमपारयायी, जिनगणधरसमनुचीर्णसम्यग्मार्गानुयायी, इहलोकपरलोकनिश्रितः निखिलचराचरजन्तुजातविहितमानापमानप्रशंसननिन्दनलाभालाभसुखदुःखप्रमुखेष्वपि समानमानसः, निजानुपमश्रीमदार्हतमतस्थापनकौशलसहस्रदीधितिसमुदयनिवृत्तप्रचारीकृतसमस्तदुर्मतितामसः, आश्रवद्वारनिरोधकः, बहुलभव्यजनसमाजबोधकः, परित्यक्तवसु(८)विधमदः, तिग्मरोचिःप्रमिततपोभेदभैषज्यक्रियाप्रतिक्रियमाणदुर्भेद्यदुष्टकर्मगदः, पञ्चविधस्वाध्यायविधिविधानविधापनसावधानः, सकलजगज्जन्तुजातवितीर्यमाणाभयदानः, पारावार इव गम्भीरः, मन्दरमहीधर इव धीरः, शङ्ख इव निरञ्जनः, अज्ञानतिमिरावृतान्तरनयनजनतावितीर्णतदुद्घाटनप्रत्यलतद्विमलताहेतुपरमज्ञानाञ्जनः, कूर्म इव गुप्तेन्द्रियः, समासादितमोहमहामहीपतिविजयः भारण्डविहङ्गम इवाप्रमत्तः, पुष्करपत्रमिव निरुपलेपचित्तः, सहस्रांशुरिव दीप्ततेजाः, रागद्वेषमहामल्लविदलनविषयप्रयुक्तमहौजाः, सोम इव सौम्यतागुणगरिष्ठः, सकलसाधुजनप्रकृष्टः, पञ्चानन इव दुष्प्रधर्षणीयः, सकलजनाभिगमनीयः, कुञ्जर इव शौण्डीर्यगुणोपेतः, सकलदोषपोषव्यपेतः, वृषभ इव जातस्थामा, बहुवादिविजयप्रवर्धितधामा, पारावारवारिवद्विशुद्धहृदयः, संसारकारागारमोहमहाचरटनिरुद्धतनुभृत्त्राणे विहितदयः, गगनमिव निरालम्बः, महानन्दमहानगर-

मरणप्रवृत्तिविषये विनिर्मुक्तविलम्बः, शून्यनिकेतनमिव निष्प्रतिकर्माङ्गः, परकृतनिलयस्थितिर्यथा भुजङ्गः, परित्यक्तसकलसांसारिकसंबन्धः, पवन इव निःप्रतिबन्धः, जीव इवाप्रतिहतगतिः, श्रीमज्जिनप्रवचनानुसारमतिः, विहङ्गम इव सर्वतो विप्रयुक्तः, किंबहुना ? श्रीमदनूचानसमुचितज्ञानसमायुक्तः श्रीमान् धर्मघोषनामा गुरुः स्वर्गतरुरिव जङ्गमः समवासार्षीत् । तत्रावनिप्रदेशे सुव्रताभिधान इभ्यपतिर्निजसुकृतपुञ्जमिव मूर्तिमन्तं प्रकटीभूतं श्रीगुरुं निरीक्ष्य स्वं धन्यमभिमन्यमानः ससंभ्रमं समुत्थाय सविनयं विधिवदभिवन्दितवान् इति । अथातः सकलभव्यजनमनःप्रमोदमेदुरताविधानसावधानां कायिकवाचिकमानसिककर्मकदम्बकबहुभवोपार्जितशुभेतरकर्मकलापमहामहीरुहसमूलनिर्मूलनप्रथमप्रावृषेण्यमजलजलधरवृष्टिप्रकृष्टवृष्टिप्रापितबहुलसलिलसमूहतारकजनदुराकलनीयशैवलिनीमहाश्रयाहप्रतिमितधारिणीं सकलश्रोतृजनश्रवणपवित्रीकरणमन्त्रमयमहाविद्यामयीं संयोगवियोगादिजिनमतमहाम्भोर्मिमालासमाकुलमहामाहनिकजनदुराकलनीयदुरन्तसंसारपारावारतारणतरीप्रतिरूपां चतुरशीतिलक्षजन्तुयोनिपरिभ्रमणकांदिशीकजनमहानिर्वेदजननवाचं विशेषतः पञ्चपर्वाराधनफलां देशनां निशम्य सुव्रतश्रेष्ठी जातिस्मृतिं लेभे । ततो गुरुं स्माह—"हे पूज्य ! मया प्राग्भवे एकादशीतपश्चक्रे, तत्प्रभावेणारणकल्पं प्राप्यैकादशस्वर्णकोटीनां प्रभुः प्रथितः । अथ किं सुकृतं कुर्वे ? यदनल्पफलं भवेत् ?" । गुरुः प्राह—"येन सौख्यं लब्धं तदेव व्रतं त्वं भज, येन निरामयो देहो जातस्तदौषधं पुनः पुनः सेव्यं । यतः—

विधिना मार्गशीर्षस्यैकादशीधर्ममाचरेत् । यदेकादशभिर्वर्षैरचिरात्स शिवं व्रजेत् ॥ १ ॥"

ततः सत्कार्यः श्रेष्ठी तत्तपः स्वीचकार । अन्यदेद्युः सपरिकरोऽहोरात्रपौषधं चक्रे एकादश्यां, ज्ञातवृत्तान्तास्तस्करा रात्रौ समेयुः, तैर्गृहमध्ये धनं पुञ्जीकृतं, यावद्ग्रन्थिं बद्ध्वा पलायन्ति तावत्ते शासनदेव्या स्तम्भिताः, प्रातर्दुर्गपालेन दृष्ट्वा दृढं बद्ध्वा राज्ञः पुरो निन्यिरे । नृपो हननार्थमादिष्टवान् । प्राप्तः श्रेष्ठी पौषधं पारयित्वा धनं धनं प्राभृतं कृत्वा तान् दस्यूनमोचयत्—"हे नृप ! ममौकसः कर्मकरा इमे न्यस्तं पृथक् पृथक् पतितमजितो धनरत्नादिकमेभिर्गृहमध्यत एकीकृत्य न्यस्तं, पादयोर्लुठतः सद्घट्टनं निषेधितं, अतो मदीयभृत्या अमी न वधार्हाः" । इति श्रुत्वा पौराः श्रेष्ठिनः प्रशंसां चक्रुः । तदनु श्रेष्ठी पारणकं चकार । पुनरेकादश्यां श्रेष्ठी पौषधमगृहीत्, रात्रौ दाववत्पुरे समग्रे वह्निः प्राज्वलत् । सर्वे जना नश्यन्तः कान्दिशीका जगुः—"हे श्रेष्ठिन् ! जैनमते साकाराणि व्रतानि सन्ति" इति प्रोक्तोऽपि व्रतभङ्गभयात् कचिन्नानश्यत् । श्रेष्ठिनो गृहवखारहट्टादीनि न भस्मीबभूवुः । जलधौ दीपवत्तद्गृहाणि वीक्ष्य निखिला नागरास्तद्व्रतं प्रशशंसुः । ततः पूर्णे व्रते एकादशैकादश वस्तूनि संमील्य महदुद्यापनं विधाय सङ्घपूजादिसप्तक्षेत्रेषु द्रव्यं वपन् जनुः कृतार्थमकरोत् ।

तस्य चैकादशीपुण्याद्धामा एकादशाभवन् । दश दश पुत्राः पुत्र्यश्चैकैकाश्च प्रतिस्त्रियम् ॥ १ ॥

एकदा चतुर्ज्ञानधरो विजयशेखरसूरिस्तत्र समागात् तदुक्तवैराग्यवाण्या प्रबुद्धः श्रेष्ठी सत्कार्यः पुत्रेषु गृहभारं न्यस्यातुच्छैरुत्सवैः सर्वविरतिमग्रहीत् । निरतिचारं चारित्रं पालयन् स द्वादशाङ्गीं पपाठ । तथा—

षाण्मासिकं नपश्चैकं चतुर्मास्याश्चतुष्टयम् । सोऽष्टमानां शतं पञ्चतपसां द्वे शतेऽकरोत् ॥ १ ॥

तत्पञ्च एकादशापि मासस्य संलेखनां कृत्वा केवलज्ञानेन मुक्तिमाददिरे । अन्यदैकादश्यां मौनसंश्रिते सुव्रते एकस्य साधोः कर्णे तीव्रा वेदना समभूत् । इतश्च मिथ्यादृग्व्यन्तरसुर एकः सुव्रतमुनिं चालयितुं तत्साधोर्देहेऽवतीर्य रात्रौ वेदनामकरोत् । अथ सुव्रतं प्रति स साधुरवक्—"श्राद्धनिकेतनं गत्वा इदं मदीयाङ्गस्वरूपं कथय, यथा मम चिकित्सां कारयेत्" । सुव्रतो दध्यौ—"अद्योपाश्रयाद्बहिर्गमनं मया निषिद्धं, मौनं च कृतं, तत्कथं गृहस्थसमीपे गच्छामि ?" । इति चिन्तयन्तं सुव्रतानगारं प्रति सकोपाटोपः स वदन् धर्मध्वजेन निर्दयमताडयत् । तदा सुव्रतोऽचिन्तयत्—"नास्य महात्मनो दोषः, किंतु ममैव, यस्मादहं चिकित्सां न कारयामि" इत्यादिलोकोत्तरध्यानारूढं निश्चलं सुरगिरिवदकम्प्यस्वरूपं तं मत्वा स सुरः स्थिरो बभूव । सुव्रतसाधुर्भावनां भावयन् लोकालोकप्रकाशकं केवलज्ञानं प्रपेदे । तदाऽऽगतनिर्जराः पञ्चमज्ञानोत्सवं चक्रुः । चामीकराम्भोजे स्थित्वा दयामयं धर्ममवदत्, बहून् भव्यान् पृथ्व्यां विहरन् प्रबोधयन् प्रान्ते संलेखनां विधाय सिद्धिसुखं समापेति ॥

इति नेमिमुखादेकादशीमाहात्म्यमुज्ज्वलम् । आकर्ण्य पौरसहितो हरिराराधयत् स्वयम् ॥ १ ॥

इत्थमाराधयन्त्येनां यथाशक्ति यथाविधि । ते भुक्त्वा स्वर्गसौख्यानि लभन्ते शिवसंपदम् ॥ २ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ सप्तदशस्तम्भे एकपञ्चाशदधिकद्विशततमं २५१ व्याख्यानम् ॥

१ सन्धिधिन्त्यः ।

## द्विपञ्चाशदधिकद्विशततमं २५२ व्याख्यानम् ॥

अथ सम्यक्त्वे शङ्का न कार्येत्याह—

नास्ति जीवो न स्वर्गादि जूतकार्यमिहेष्यते । इतिप्रभृतिशङ्कातः सम्यक्त्वं खलु पाल्यते ॥ १ ॥

स्पष्टः । अत्रार्थे आषाढसूरेर्ज्ञातं–निर्ग्रन्थगच्छे आषाढाचार्या बभूवुः । ते कालधर्मं कुर्वते स्वशिष्याय निर्याम्येति शिक्षां प्राहुः–"त्वया देवभवे गतेन मे दर्शनं देयं" । इति बहूनामुक्तेऽपि कोऽपि देवगतेर्नागात् । अन्यदाऽत्यन्तवल्लभं स्वशिष्यं निर्याम्योचुः–"हे वत्स ! त्वयाऽवश्यं देवदर्शनं देयं" इति भृशं प्रार्थयत् । तत्प्रपद्य विपद्य स देवीभूतोऽपि सुरकार्ये विलम्बितः स शिष्यो द्रुतं नाययौ । तस्मिन्ननागते गुरुरेवं व्यचिन्तयत्–"मयाऽनेके विनेया निर्यामिताः, मद्वाचं प्रतिपन्ना अपि तेष्वेकोऽपि नागात् । अतः स्वर्गं श्वभ्रं च किमपि नास्ति, अद्य यावन्मुधा क्रियाकष्टं कृतं" इत्यादिमिथ्यात्वं श्रितो गच्छं मुक्त्वा निर्ययौ । अत्रान्तरे स देवोऽवधिना स्वगुरोः स्वरूपं ज्ञात्वा दध्यौ—

तन्मोहप्रेरिता यावन्नामी दुष्कर्म कुर्वते । तावदेतान् विबोध्याहं कुर्वे सन्मार्गमाश्रितान् ॥ १ ॥

ध्यात्वेति स सुरः स्वगुरोर्गमनाध्वनि एकग्रामपार्श्वे दिव्यं नृत्यं विचक्रे । स सूरिस्तन्नाट्यं प्रेक्षमाण ऊर्ध्व एव हि षण्मासीमतिचक्राम । दिव्यानुभावतः क्षुधातृषाश्रमान्नाज्ञासीत् । देवेन तस्मिन्नृत्ये संहृते स पुरोऽचलत्, दध्यौ च–"अहो ! अद्य क्षणमेकं सुखं दृष्टं" । अथ स देवो दध्यौ–"किञ्चिदपि व्रतमस्यास्ति न वा ? इत्यहं परीक्षे" ततो देवेन राजकुमारबालो भूरिभूषणभूषितः कृतः । सूरिस्तं वीक्ष्याह–

"भोः शिशो ! त्वमेकाकी कथं घोरे वने भ्रमसि ? किं तव नाम ?" । स आह—"अहं पृथ्वीकायिकनामा

त्वच्छरणमाश्रितोऽस्मि । चौरश्वापदाद्युपद्रवान्मां रक्ष रक्ष ।

बालं मां दीनतां प्राप्तं पाहि पाहि प्रभो ततः । तैरेव नृपिता नूनं रक्षेयुः शरणागतम् ॥ १ ॥

इत्याद्युक्तोऽपि लुब्धात्मा स सूरिस्तस्य कन्धरां यावन्मोटयितुं लग्नस्तावद्बालः पुनर्जगौ—"भगवन् !

एकं ज्ञातं शृणु, पश्चाद्यथोचितं कुर्याः—क्वापि ग्रामे एकः कुलालो मृदं खनन् खानितः पतन्नवदत्—

यत्प्रसादाद्बलिं भिक्षां ददे ज्ञातींश्च पोषये । साऽप्याक्रामति भूमिर्मां तज्जातं शरणाद्भयम् ॥ १ ॥

हे पूज्य ! अहमपि भीतस्त्वां शरणमाश्रितः, त्वं च मां मुष्णासि, ततः शरणाद्भयमभूत्" । "हे बाल !

त्वं दक्षोऽसि" इत्युक्त्वा तं बालं हत्वाऽलङ्कारान् गृहीत्वा पतद्ग्रहेऽक्षिपत् । ततः पुरो व्रजन् अप्का-

याख्यं द्वितीयं बालं प्राग्वदद्राक्षीत्, तस्याप्यलङ्कारांस्तथैवादातुमुद्यते बालः स्वज्ञातं प्राह—एको नरः

कथासुभाषितज्ञः पुराऽभूत् । सोऽन्यदा प्रोत्तरन् गङ्गां नीरपूरैः प्रवाहितः, तीरस्थलोकैरित्यालापितः—

"हे भद्र ! किञ्चित्सुभाषितं ब्रूहि" । स प्राह—

येन रोहन्ति बीजानि येन जीवन्ति कर्षुकाः । तस्य मध्ये विपद्येऽहं जातं मे शरणाद्भयम् ॥ १ ॥

सूरिराह—"हे शिशो ! त्वं सुष्ठधीतोऽसि" इत्युक्त्वा तस्याभरणानि आददे । ततोऽग्रे व्रजन् तेज-

स्कायिकाख्यमर्भकं वीक्ष्य तद्भूषाग्रहणोद्यतोऽभूत् । सोऽपि शिशुः प्राग्वन्निजाभिधानं प्राकुक्त्वेत्थं

वृत्तान्तमुवाच—क्वाप्याश्रमे सर्वदा वह्निपूजकस्तापसोऽभूत् । अन्यदाऽनलेन तस्योटजे दग्धे स इत्यवक्—

यमहं मधुसर्पिर्भ्यां तर्पयामि दिवानिशम्। दग्धस्तेनैवोदजो मे जातं तच्छरणाद्भयम् ॥ १ ॥

हे सूरे! तद्वत्तव करणं नार्हं। सूरिस्तं हित्वा भूषणानि जग्राह। ततोऽग्रे वायुकायाख्यमर्भकं वीक्ष्य गुरुस्तस्यालङ्कारान् लातुं सोद्यमी जातः। सोऽपि प्राग्वत्स्वाभिधामुक्त्वा ज्ञातं जगौ—एकः कोऽपि नरो युवा पुराऽपि भूरिबलोऽभूत्। तं वातरोगेण कम्पिताङ्गं वीक्ष्य कोऽपीति पृष्टवान्—"पूर्वं धावन् लङ्घनोद्योगी भूत्वाऽधुना यष्टिमालम्ब्य कस्माद्गच्छसि?

सोऽवादीद्यो मरुज्ज्येष्ठाषाढयोः सौख्यदोऽभवत्। स एव बाधतेऽङ्गं मे जातं हि शरणाद्भयम् ॥ १ ॥

इत्युक्त्वा पूर्ववत्स्थितस्य शिशोर्भूषणान्यग्रहीत्। भूयोऽपि पुरतो बालं वनस्पतिकायाख्यं वीक्ष्य भूषणग्रहणोत्सुकं गुरुं प्रति स बालो वृत्तं जगाद—क्वापि वने द्रुमे खगा नीडे वसन्ति। अन्यदा तद्द्रुमूले उद्गता लता, तां विलग्य भुजङ्ग आरुह्य खगबालानभक्षयत्। ततस्ते विहगा इत्थं मिथो मुहुराहुः—

अथ यावत्सुखं वृक्षे स्थितमत्रानुपद्रवे। अस्मादेव लतायुक्तादद्याभूच्छरणाद्भयम् ॥ १ ॥

सूरिः कथां श्रुत्वाऽऽह—"हे भुजग! त्वं सुबुद्धिरसि" इत्युदीर्य कृपां हित्वा भूषणान्याददे। ततोऽग्रे प्रस्थितः, बालं वीक्ष्य पप्रच्छ—"किं तवाभिधानं?" स आह—"त्रसकायिकं" इति श्रुत्वाऽलङ्कारानादातुमुत्सुकः सोऽभूत्। तदा स प्राह—"मदाख्यानं श्रुत्वा पश्चाद्यथेच्छं विधेयं। तथाहि—

क्वापि पुरे शत्रुनिर्वेष्टिते सति स्वस्वधनानि लात्वा लोका बहिर्गतास्तत्र पुरान्तः प्रविविशुः । तदा कोऽपील्लापत—

"लीनाः पौराः कर्षयन्ति युष्मान्निघ्नन्ति च द्विषः । तत्क्वापि यान्तु मातङ्गा जातं शरणतो भयम् ॥ १ ॥"

एवं मोक्षणये जाते तेन प्रोक्तेऽपि अमुञ्चति गुरौ द्वितीयां कथामब्रवीत्—क्वापि पुरे नृपो निजैश्चरैः सदा चौर्यमचीकरत् । तस्य राज्ञः पुरोधास्तु नवं जनमचोरयत् । ततः खिन्ना लोका मिथो दध्युः—

"यत्र राजा स्वयं चौरो चौरकश्च पुरोहितः । यान्तु पौराः पुरात्तस्माज्जातं हि शरणाद्भयम् ॥ २ ॥"

इति श्रुत्वाऽपि स्वदुष्टत्वममुञ्चन्तं गुरुं तृतीयं ज्ञातमूचे—क्वापि पुरे विप्रोऽतिकामुकः सुरूपां स्वसुतामवेक्ष्य स्मरमुद्गच्छाया न सिषेवे । तं क्षीणतनुं दृष्ट्वा पत्न्या निर्बन्धेन पृष्टो जगाद सत्यं । पत्नी पतिप्राणत्राणार्थं स्वपुत्रीमिति प्राह—"अस्मत्कुलशीलमिदं प्राग्यक्षस्तुक्ता सुता पश्चाद्विवाह्यते, अतः कृष्णचतुर्दशीनिशायां यक्षालये त्वं व्रजेः । तत्र दीपोद्योतं मा कार्षीः, यक्षः सरोषमपयास्यति" । साऽपि मातृवचः स्वीचक्रे परं दीपं शरावस्थगितं लात्वा गता । तन्मात्रा प्रेषितो विप्रोऽपि तां निःशङ्कमुपभुज्य सुरतश्रान्तः स्वपीत् । अथ कौतुकात् तद्दीपेन पश्यन्ती तातं दृष्ट्वा दध्यौ—"अहो मात्राऽपि माया कृता, अद्यप्रभृति अयमेव पतिः, मम नर्तक्या नृत्ये प्रारब्धे किं घुंघटकरणं ?" । ततो निःशङ्कं रतश्रान्तौ तौ सुप्तौ, प्रगेऽपि न प्रबुद्धौ । ततो मात्रेत्य प्रोक्तं—"हले ! अद्यापि नो जागर्षि" । साऽवदत्—"हे मातः ! त्वदुदितं कृतं, यक्षेण ममायमेव पतिर्दत्तः, त्वमन्यं गवेषय" श्रुत्वा माता प्राह—

विषमूर्छे न चिरं यस्या मर्दिते साऽपि नन्दिनी । मत्कान्तमहरत्तन्मे जातं शरणतो भयम् ॥ १ ॥

इति श्रुत्वापि भूषणग्रहणोत्सुकं गुरुं चतुर्थकथामाख्याति स्म—क्वापि ग्रामे एको विप्रो धर्मधिया मूढः सरोवरमचीखनत् । तस्य पाल्यां छागयज्ञं मुहुश्चकार । स भूदेवोऽन्यदा मृत्वा छाग उदपद्यत । अन्येद्युः स्वपुत्रैरेव स छागो यज्ञे हन्तुं नीयमानः स्वोपज्ञं तत्तटाकादि दृष्ट्वा स्वजातिं स्मरन् बुबुशब्दं मुहुर्व्यधात् । इतश्चैको ज्ञानी मुनिस्तत्पूर्वभवं ज्ञात्वाऽऽह—

खानितं हि त्वयैवेदं सरो वृक्षाश्च रोपिताः । प्रवर्तिता मखाश्चापि किं बुबु कुरुषे पशो ॥ १ ॥

ततोऽन्यैः पुत्रादिभिस्तद्वृत्तान्तं पृष्टो मुनिः सर्वमुवाच । तदङ्गजाः प्रोचुः—"प्रागनेन निधिस्थानं कृतं, तच्चेद्दर्शयति तदा सत्यं मन्यामहे" । छागेन सहसा गत्वा तद्दर्शितं । ततो निःसंदेहाः सर्वे यज्ञनियमं चक्रुः । छागोऽपि विहितानशनो देवभूयं गतः ।

प्रेत्य मे शरणं भावीत्याशया स द्विजो यथा । तटाकादि व्यधात्तच्च तस्याशरणतामगात् ॥ १ ॥

एवं मयाऽपि भीतेन भवन्तः शरणीकृताः । चेन्मुष्णन्ति तदा मेऽपि त्राणमत्राणतां गतम् ॥ २ ॥

इति श्रुत्वाऽपि लुब्धः स तस्याभरणानि ललौ । एवं षण्णां कुमाराणामाभरणानि पतद्ग्रहे चिक्षेप । ततोऽग्रे गच्छन्नेकां साध्वीं गुर्विणीं भूषिताङ्गीमञ्जिताक्षीं दृष्ट्वाऽऽह—"हे व्रतिनि ! शासनोड्डाहकृत् ! दुष्टसाध्वि ! त्वं कुत आगता ?" ।

नाऽऽढ रे सर्षपमात्राणि परच्छिद्राणि पश्यसि । आत्मनो बिल्वमात्राणि पश्यन्नपि न पश्यसि ॥ १ ॥

त्वं शुद्धोऽसि नदेहि ममान्यर्णां, किमुत्कर्णः प्रणश्यसि ? तव पात्रं पश्यामि । इत्याकर्ण्य तूर्णमग्रेऽपसरन् सैन्यं दृष्ट्वा त्रयप्रान्त्य सैन्याध्यानं विहाय नश्यन्नपि नृपस्यैव पुरो दैवयोगादगात् । नृपोऽपि हस्तिस्कन्धादवतीर्य चानमत् । आह च-"अस्मन्मद्भाग्यं यन्मे यूयमत्र वीक्षिताः, तन्ममानुग्रहं कृत्वा पानीयमोदकादिकं गृह्यताम्" । सूरिर्दध्यौ-"पात्रे निष्कासिते मच्चौरी प्रादुर्भाविनी" इति निश्चिन्त्याह-"अद्य ममोपवासोऽस्ति" । नृपः प्राह—"मम ज्ञावलग्नो न कार्यः" । ततो जनुन्ना तस्य पात्रं प्रसन्याक्षिप्य मोदकान् कुसुमाग्ने, तावत्तानलङ्कारान् वीक्ष्य कुपितः प्राह—"अरे ! साधुवेषविडम्बक ! पापिष्ठ ! मम नन्दनान् व्यापाद्य त्वं कथं जीवन् यास्यसि ?" । सूरिरपि न्यङ्मुखो दध्यौ—"मत्पापमनेन ज्ञातं, मां कुमारेण मारयिष्यति, मयाऽकार्यं कृतं, योगाच्च भोगाच्च द्विधाऽपि भ्रष्टः, अधुना का गतिः ?" । इति चिन्तापरं सूरिं वीक्ष्य स सुरो मायां संहृत्याविर्भूय, तं प्रत्यूचे—"पूज्य ! अहं स युष्मच्छिष्योऽस्मि, तव वाग्बलं ऽढागतः, देवोत्पन्नदेवकायाकुलत्वात्कालक्षेपो बभूव "संकान्तदिव्यप्रेमा०" "चत्तारि पंच जोयणसया०" इत्याद्यागमवाक्यानि जानद्भिरपि किमीदृशं कर्मारब्धं—

युष्माभिरपि तद्दिव्यनाटकाक्षिप्तमानसैः । ऊर्ध्वस्थैरेव षण्मासी निन्ये चान्तर्मुहूर्तवत् ॥ १ ॥"

गीर्वाणवाणीं श्रुत्वा गतसंशयः स्वकुराचारं निनिन्द-"हे देव ! त्वया त्वावदधुना मोक्षमार्गे प्रापितः, यतः—

धर्मोद्भ्रष्टस्य मे भूयो धर्मदानविधायिनः । तवानृणोऽहं नैव स्यां ब्रवीमि किमतः परम् ॥ १ ॥"
सुरः स्वापराधं क्षमयित्वा सुरलोकमगात् । सूरिरप्यालोचितप्रतिक्रान्तः तपोऽत्युग्रं चकार ॥
आषाढसूरिरिति दर्शनसंशयं प्राक्, चित्ते बभार तदमुं ( सौ ) न तथा विधेयः ।
भावः स एव वहते स यथा च पश्चात्सर्वैस्तथा व्रतिवरैः सततं स मान्यः ॥ १ ॥
॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ सप्तदश-
स्तम्भे द्विपञ्चाशदधिकद्विशततमं २५२ व्याख्यानम् ॥

## त्रिपञ्चाशदधिकद्विशततमं २५३ व्याख्यानम् ॥

अथ मिथ्यात्वभेदानाह—

एकधा द्विविधा नूनं चतुर्धा त्रिविधा मतम् । दशधा पञ्चधा चैव मिथ्यात्वं बहुधा स्मृतम् ॥ १ ॥

एकप्रकारेण मिथ्यात्वं श्रीमन्मुनीन्द्रप्रवचनेऽविश्वासरूपं जीवादिपदार्थेष्वश्रद्धानं च १ । द्वाभ्यां प्रकाराभ्यामिति द्विधा मिथ्यात्वं व्यक्ताव्यक्तरूपं, तत्र व्यक्तं स्पष्टं चैतन्यानां संज्ञिपञ्चेन्द्रियादिजीवानां प्रमाणवाक्ययुक्तिभिरेकान्तपक्षस्यैव पुष्टिविधायकादीनां व्यक्तं मिथ्यात्वं स्यात् । अव्यक्तं तु यदनादिकालं यावन्मोहनीयप्रकृतिरूपं मिथ्यात्वं सद्दर्शनरूपात्मगुणच्छादकं जीवेन सह सदाऽविनाभावेन भवति, तदपरं निगोदादिजीवानां ज्ञेयमिति । अथ प्रकारान्तरेण द्विधा, तत्र बाह्यवृत्त्या मिथ्यात्वाचारं विदधदप्यन्तर्वृत्त्या निर्मलत्वं कुमारपालोपरोधेन सोमेश्वरयात्रां वितन्वानश्रीहेमचन्द्रगुरोरिव

गैरिकभक्तिकारककार्तिकश्रेष्ठिन इव वा। भावमिथ्यात्वं तु प्रत्यहं त्रिकालज्ञप्रणीतपदार्थेष्वनादरः। निश्चयव्यवहारमिथ्यात्वयोरपि अयमेवार्थः स्वधिया वाच्यः। अथ चतुर्भिः प्रकारैरिति चतुर्धा लौकिकदेवगतं १, लौकिकगुरुगतं २, लोकोत्तरदेवगतं ३, लोकोत्तरगुरुगतं ४। तत्र हरिहरब्रह्मलम्बोदरगोत्रजक्षेत्रपालादीनां पूजनं प्रथमं मिथ्यात्वं १। भागवतसंन्यासियोगिजङ्गमब्राह्मणादिलौकिकगुरूणां पूजनं माननं द्वितीयं तदिति २। लोकोत्तरदेवेषु यात्रादिमाननं हे अमुकप्रभो! यदि ममैवं कार्यं भविष्यति तदाऽहं श्रीफलं स्नात्रं दीपकं नित्यावलगनं अष्टभेदादिपूजाकरणं च दास्य इत्यादि संसारार्थं माननं। स्तवनं चेदं—हे प्रभो! त्वं सत्योऽसि, मदीयं विवाहादि दुर्लभं कार्यं त्वयैव निष्पादितं। अधुना मत्पुत्रस्नुषायुगलं कुशलं कुरु इत्यादिविविधप्रकारैर्जना अविकारिणोऽविनाशिनो दूषणं ददति। हा हा धिग्मौढ्यं मिथ्यात्वव्यासात्मनिकेतनानां, उक्तं च पूर्वपूज्यैः—

लोगुत्तरदेवम्मि वि लोइयदेवाण जाणि लिंगाणि। इच्छापरिग्गहाइणि तेसिमारोवणं मिच्छा॥ १॥

इति तृतीयं ३। लोकोत्तरगुरुगतं पार्श्वस्थादीनां गुरुत्वबुद्ध्या वन्दनादिविधानं। अथवा लोकोत्तरदेवगतमिदं ज्ञेयं—परतीर्थिकसंगृहीतजिनबिम्बवन्दनादिकं त्याज्यं, तथा जिनमन्दिरेऽपि अबलानां श्राविकाणां रात्रौ प्रवेशः श्रमणानां च वासः—अवस्थानं बलिदानं स्नानं च न विधेयं, अथवा तम्बोलादिदानभक्षणजलक्रीडनान्दोलननृत्यप्रेक्षणादीनि लौकिकदेवगृहेष्विव यत्रार्हच्चैत्ये क्रियन्ते तज्जिनचैत्यं वर्ज्यं। तथा लोकोत्तरगुरुगतं चेदं प्रोक्तं पूर्वसूरिणा—

जे लोगुत्तमलिंगा लिंगअदेहाऽवि पुप्फतंबोलं । आहाकम्मं सयं जलं फलं चेव सच्चित्तं ॥ १ ॥
भुंजंति थीपसंगं ववहारं गंथसंगहं भूसं । एगागित्तभमणं सच्छंदविहिअं वयणं ॥ २ ॥
चेइयमढाइवासं वसहीसु निच्चमेव संठाणं । गेअं निअवरनाणऽच्चावणमवि कणयकुसुमेहिं ॥ ३ ॥
तिविहं तिविहेणेअं मिच्छत्तं वज्जिअं जाहिं दूरं । निच्छयओ ते सड्ढा अन्ने उण नामओ चेव ॥ ४ ॥

अथ त्रिभिः प्रकारैर्मिथ्यात्वं कायवाङ्मनोभेदैर्ज्ञेयं । उक्तं च पूज्यैः—

एअं अणंतरुत्तं मिच्छं मणसा न चिंतइ करेमि । सयमेव सो करेज्ज अन्नेण कए व सुट्ठु कयं ॥ १ ॥
एवं वाया न भणइ करेमि अन्नं च न भणइ करेह । अन्नकयं न पसंसइ न कुणइ सयमेव काएणं २
करसन्नभमुहखेवाइहिं न य कारवेइ अन्नेणं । अन्नयकयं न पसंसई अन्नेण कए व सुट्ठुकयं ॥ ३ ॥

तथा दशभिः प्रकारैरिति दशधा मिथ्यात्वं । यतः स्थानाङ्गे—दसविहे मिच्छत्ते पन्नत्ते, तं जहा—अधम्मे धम्मसन्ना १, धम्मे अधम्मसन्ना २, उम्मग्गे मग्गसन्ना ३, मग्गे उम्मग्गसन्ना ४, अजीवे जीवसन्ना ५, जीवे अजीवसन्ना ६, असाहुसु साहुसन्ना ७, साहुसु असाहुसन्ना ८, अमुत्ते मुत्तसन्ना ९, मुत्ते अमुत्तसन्ना १० अत्राधर्मे श्रुतलक्षणविहीनत्वादनागमेऽपौरुषेयादौ धर्मसंज्ञाऽऽगमबुद्धिर्मिथ्यात्वं विपर्यस्तत्वादिति १ । धर्मे कर्मच्छेदादिशुद्धसम्यग्व्रते आप्तवचनेऽधर्मसंज्ञा—सर्व एव पुरुषा रागादिमन्तोऽसर्वज्ञाश्च, पुरुषत्वात्, अहमिव, इत्यादिप्रमाणतो नाप्ताः । एवं कुविकल्पवशादनागमबुद्धिरिति २ ।

तथोन्मार्गो निर्वृतिपुरीं प्रति अपन्था वस्तुतत्त्वापेक्षया विपरीतश्रद्धानज्ञानानुष्ठानस्वरूपस्तत्र मार्गसंज्ञा ३। तथा मार्गे ( वस्तुतत्त्वश्रद्धानरूपे ) अमार्गसंज्ञा ४। तथाऽजीवेष्वाकाशपरमाण्वादिषु जीवसंज्ञा "पुरुष एवेदं" इत्याद्यभ्युपगमात्। तथा—

क्षितिजलपवनहुताशनयजमानाकाशचन्द्रसूर्याख्याः।
इति मूर्तयो महेश्वरसंबन्धिन्यो भवन्त्यष्टौ ॥ १ ॥

इति ५। तथा जीवेषु पृथिव्यादिष्वजीवसंज्ञा, यथा—न भवन्ति पृथिव्यादयो जीवा, उच्छ्वासादीनां प्राणिधर्माणामनुपलम्भात्, घटवत्, इति ६। तथाऽसाधुषु षड्जीवनिकायवधप्रवृत्तेषु साधुसंज्ञा ७। तथा साधुषु महाव्रतिषु असाधुसंज्ञा, यथा—नास्त्येषां गतिः, अपुत्रत्वात् स्नानादिविरहितत्वात् इत्यादि विकल्पात्मिकेति ८। तथाऽमुक्तेषु सकर्मसु लोकव्यापारप्रवृत्तेषु मुक्तसंज्ञा, यतः—

अणिमाद्यष्टविधप्राप्तैश्वर्याः कृतिनः सदा। मोदन्ते निर्वृतात्मानस्तीर्णाः परमदुस्तरम् ॥ १ ॥

इत्यादि ९। तथा मुक्तेषु सकलकर्मकृतविकाररहितेष्वनन्तज्ञानदर्शनसुखवीर्ययुक्तेषु अमुक्तसंज्ञा १०। अधुना पञ्चधा मिथ्यात्वं—तत्राद्यमाभिग्रहिकं-कुदृष्टिवासितानामस्मन्मतमेव प्रमाणमिति १। अनाभिग्रहिकं-सर्वे देवा गुरवश्च नमस्याः, सर्वोऽपि धर्मः कार्यः इत्यनभिग्रहवतां ज्ञेयं २। आभिनिवेशिकं तु संप्राप्तश्रीमदार्हतमतानां केनापि यथास्थिततत्त्वे प्ररूपिते सति मत्सरादिना तदन्यथा वाच्यमानस्यानसेयं। अथवाऽनाभोगेनोत्सूत्रे प्ररूपिते सति पश्चाज्ज्ञातेऽपि वस्तुतत्त्वे स्वभणितमेवाभिनिवेशेन समर्थ-

यतो विज्ञेयं । अथवाऽजानन् भावार्थमुत्सूत्रं प्ररूपयति, निवारितोऽपि न तिष्ठति तस्याभिनिवेशरूपं ३। सांशयिकं सूत्रेऽर्थे तद्भजये शङ्कितः प्रकाशते, न चान्यं पृच्छति तत् ४। अनाभोगिकं त्वेकेन्द्रियाणामज्ञानरूपं, तत्त्वातत्त्वविचाराभावादिति ५। तया बहुभिः प्रकारैर्बहुधा मिथ्यात्वं स्मृतं—निगदितं। तथाहि—विधिकौमुद्यां त्रिसप्ततिभेदाः सन्ति, क्वचिदेकविंशतिप्रकारा वर्तन्ते, तत्स्वस्वस्थानाज्ज्ञेयमित्यर्थः। अथ मिथ्यात्वस्थितिमाह—

अभव्याश्रितमिथ्यात्वेऽनाद्यनन्ता स्थितिर्भवेत्। सा भव्याश्रितमिथ्यात्वेऽनादिसान्ता पुनर्मता ॥ १॥

स्पष्टः। उपलक्षणार्थमिह मिथ्यात्वकालचिन्तायां चतुर्भङ्गी, तद्यथा—अनाद्यनन्तं १, अनादिसान्तं २, साद्यनन्तं ३, सादिसान्तं ४ च। तत्र मिथ्यात्वं विपरीतरुचिरूपं अभव्यानामनाद्यनन्तं विज्ञेयं, अनादिकालात्तेषु तत्सद्भावादागामिकाले कदापि न तदभावाच्च १। भव्यानां पुनर्मिथ्यात्वमनादिसपर्यवसितं, इदमुक्तं भवति—योऽनादिमिथ्यादृष्टिः सन् भव्यजीवः सम्यक्त्वं लप्स्यते तस्य तदन्तो जात इत्थं तस्य मिथ्यात्वमनादिसान्तं २। यस्त्वनादिमिथ्यादृष्टिः स सम्यक्त्वं लब्ध्वा केनापि कारणेन पुनर्मिथ्यात्वं याति तस्य तत्सादि, सम्यक्त्वलाभादनन्तरं तत्प्राप्तेः सादित्वात्, मिथ्यात्वे च जघन्यतोऽन्तर्मुहूर्त्तमुत्कृष्टतस्त्वाशातनादिपापबहुलतयाऽपार्धपुद्गलपरावर्तं यावत्स्थित्वा यदा पुनरपि सम्यक्त्वं लभते तदा तत्सान्तं ४। साद्यनन्तमिति तृतीयभङ्गस्तु शून्य एवेति ३। अत्र शिष्यो भव्याभव्यस्वरूपं पप्रच्छ, तदा गुरुराह—मुक्तिपर्यायेण भविष्यतीति भव्यः सिद्धिगमनयोग्यो न पुनरवश्यं सिद्धि-

गामी, एवं भव्यानामपि केषाञ्चित् सिद्धिगमनासंभवात् । उक्तं च—"भव्वा वि न सिज्झिस्संति केइ" इत्यादि । भव्यविपरीता अभव्याः, तथा च ते कदाचिदपि संसारस्य पारं न प्राप्ताः, न प्राप्नुवन्ति, न प्राप्स्यन्ति इति । इह भव्याभव्यत्वलक्षणमेवमाचक्षते वृद्धाः—संसारविपक्षभूतं मोक्षं मन्यते, तत्प्राप्त्य-भिलाषं वहति "किमहं भव्योऽभव्यो वा ? यदि भव्यस्तदा शोभनं, अथाभव्यस्तदा धिग्मां" इत्यादि-चिन्तां कदापि करोति स इत्यादिचिह्नेन ज्ञायते भव्य इति । यस्य तु जातुचिदपि नेयं चिन्ता समुत्पन्ना समुत्पद्यते समुत्पत्स्यते वा, असावभव्य इति ज्ञायते । उक्तं चाचाराङ्गवृत्तौ—"अभव्यस्य हि भव्याभव्यशङ्काया अभावात्" इति । अत्रार्थे महाऽभव्यपालकपापिनः संबन्धः संक्षेपतः । तथाहि—

आवन्तीपुरीशपुत्रः स्कन्दकः श्रीमुनिसुव्रताभ्यर्णे प्राप्तश्राद्धधर्मः । अन्यदा कुम्भकारपुरतः समागतेन पालकपुरोहितेन सह नृपसभायां धर्मवादं चकार । स्कन्दकेन स जितः । ततो वैराग्येण स्कन्दको जिनाभ्यर्णे दीक्षां जग्राह । एकदा जिनं प्राह—"यदि प्रभोरादेशः स्यात्तदाऽहं स्व(भगिनी)देशं व्रजामि।" ततः प्रभुः प्राह—"महानुपसर्गो भावी, त्वां विना सर्वे आराधका भाविनः" । स आह—

"आराधनासाधनं हि नोपसर्गस्तपस्विनाम् । दुःखायते महानन्दमहानन्दाभिलाषिणाम् ॥ १ ॥"

ततः स पञ्चशतमुनिभिः सह विहरन् कुम्भकारपुरोद्याने समागात् । तं श्रुत्वा पालकः पूर्ववैर-गत्यर्थं वने वालुकासु छन्नं शस्त्राणि संगोप्य नृपं स्माह—"त्वद्राज्यं ग्रहीतुमसी स्पृहयन्ति विग्रमानं त्वां हत्वा" । ततो नृपप्रत्ययार्थं तानि शस्त्राणि प्रदर्श्य तेषां हिंसार्थं नृपादेशं प्राप्य तान् संयतान्

स मर्त्यपीलनयन्त्रान्तिकेऽनयत् । तत्र घाण्यां ( यन्त्रे ) तेन न्यूनपञ्चशतमितेषु हतेषु सूरिस्तं प्राह— "त्वमेनं बालसाधुं विमुच्य पूर्वं मां पीलय" । स गुरौ भूरिदुःखविधित्सया प्राक् तं बालमपीडयत् । सर्वेऽपि सूरिशिष्यनिर्यामिताः पञ्चशती साधवो मुक्तिं प्रापुः । तदा सूरिस्तेन सह जनपददहननिदानं चकार । ततो विपद्य वह्निकुमारो भूत्वा स्ववैरग्रहणार्थं तत्रैत्य पालकयुतं तद्देशं भस्मीचकार । अद्यापि दण्डकारण्यमिति बुधैः प्रोच्यते । अहंपूर्विकास्ते मुनयः कालाभिमुखं न दीनतां ययुः । अनेकलब्धियुक्ता अपि क्षमामन्तर्दधुः, अहो तेषां वीतरागत्वमिति ॥

मिथ्यात्वमुत्कृष्टमनाद्यनन्तजं, स पालकः श्वभ्रगतिं दधन् दधौ ।
मिथ्यात्वमद्यं न पिबन्ति ये जना—स्ते प्राप्नुवन्ति प्रमदां सुचेतनाम् ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ सप्तदशस्तम्भे त्रिपञ्चाशदधिकद्विशततमं २५३ व्याख्यानम् ॥

---

## चतुष्पञ्चाशदधिकद्विशततमं २५४ व्याख्यानम् ॥

अथ मिथ्यात्वं दुस्त्यजमित्याह—

अनन्तज्ञानसंपूर्णदर्शनं चरणान्वितम् । गुरुं प्राप्य न मिथ्यात्वं त्यजन्ति मूढबुद्धयः ॥ १ ॥

स्पष्टः । आचार्यस्तु मंखलीपुत्रज्ञातेन ज्ञेयः । तथाहि—श्रावस्त्यां श्रीवीरप्रभुन्योऽमर्षपूरितो वादक-
रणार्थं मंखलीपुत्रं समागच्छन्तं दृष्ट्वा गौतमादिश्रमणेभ्यः प्रभुणाऽऽदिष्टं—"अत्र मंखलीसुतः समेति.
युष्माभिस्तद्दृष्टिपुरो न स्थेयं" ततः सर्वेऽपि सुनक्षत्रसर्वानुभूतिसाधुभ्यां विनाऽन्ये दूरं तस्थुः । अतश्च
स एत्य जिनं स्माह—"अहं सर्वज्ञोऽस्मि । अस्मदीयश्रुते पञ्चलक्षाः षष्टिसहस्राः षट्शतानि त्र्यश्च
भेदाः कर्मणां सन्ति, तेषां क्षये सिध्यति । तथा हे काश्यप ! तव शिष्यो गोशालोऽभूत्स मृतः । अहं
तु तद्बुद्धिमान् सप्तदेहेषु परावर्तनां करोमि–राजगृहे उदायिशरीरं त्यक्त्वा एणेयकदेहे द्वाविंशति-
वर्षाणि यावत् स्थितः । तत्तनुं मुक्त्वा दण्डपुरे मल्लरामदेहे एकविंशतिवर्षाणि, तद्विहाय चम्पापुर्यां
मण्डितदेहे विंशतिवर्षाणि, तद्विग्रहं विमुच्य वाणारस्यां रोहस्य देहे एकोनविंशतिवर्षाणि, तत्प-
रित्यज्यालंभिकायां भारद्वाजदेहेऽष्टादशवर्षाणि, तद्विहाय वैशालायामर्जुनदेहे सप्तदशवर्षाणि, तद्देहं
त्यक्त्वा श्रावस्त्यां मंखलीपुत्रदेहं परीषहसहनक्षमं ज्ञात्वाऽत्र षोडशवर्षाणि यावत् स्थितिं करिष्यामि ।
हे काश्यप ! त्रयस्त्रिंशदधिकशतवर्षैः कृत्वा सप्तदेहपरावर्तना कार्या. एतदस्मच्छास्त्रेऽभिहितं" । प्रभुः
प्राह—"किं मुधाऽऽत्मानं छादयसि एकेनोर्णालोमेन कर्पासपुञ्जकेन तृणेन वा चोर इव ?" । इति श्रुत्वा
जातमन्युः स वीतरागमसभ्यवचोभिराशातनां चकार । तदा प्रभुधर्मरक्तः सर्वानुभूतिसाधुस्तमाह—
"किं मृषा वदसि ? तेजोलेश्यादिविद्यादायकगुरोराशातनां करोषि ?" । श्रुत्वेति क्रुद्धस्तं मुनिं तपस्ते-
जसा भस्मसाद्विधाय पुनः स्वामिनमनिन्दयत् । ततो जिनान्तेवासिसुनक्षत्रमुनिस्तमिति स्माह—"किं

त्रिभुवनैकगुरोरवज्ञां करोषि ? अनया चेष्टया श्वभ्रपतनं तव नास्ति"। इति वाक्येन रुष्टः स तं मुनिं तेजोलेश्ययाऽदीदहत्। पुनर्जगदीश्वरमयोग्यवाक्यैरनिन्दयत्। तदा प्रभुः प्राह—"किं कुबुद्ध्या मिथ्यात्वेन च दुर्लभं नरत्वं पातयसि हीनगतौ ?"। ततः स क्रुद्धः ससाष्टपदान्यपसृत्य तेजोलेश्यां मुमोच जिनोपरि। सा जिनं प्रदक्षिणीकृत्य व्याघुट्य गोशालतनुं प्रविवेश। तदा स बाह्यप्रातिहार्ये कालिमानं वीक्ष्य स्माह—"मत्तपस्तेजसा षण्मासमध्ये कालं प्राप्स्यसि"। प्रभुः स्माह—"अहं षोडश वर्षान् केवलिपर्यायमनुभविष्ये, परं त्वं ससाहे पित्तज्वरपरिगतश्छद्मस्थः सन् कालं प्राप्स्यसि"। ततः प्रभुः सर्वान् साधूनामन्त्र्याख्यत्—"यूयं धर्मचोदनाभिरस्य शिक्षां दत्त"। ततस्ते धर्मयुक्तिभिस्तमशिक्षयन्। सोऽपि प्रत्युत रुष्टो मुनीनां बाधाकरमुपायमचिन्तयत्, परं हतशक्तिकत्वान्निष्फलायासो जातः। ततः स "हा हा! अस्य महापुरुषस्य वाक्यं निष्फलं न स्यात्" इति विचिन्त्य दीर्घं निःश्वस्य "हा हा! किं जातं ?" इत्युच्चरन् पादौ भूमावास्फाल्य हालाहला कुम्भकारापणे समागात्। शीतार्थमाम्रफलहस्तोऽभीक्ष्णं मद्यपानेन नृत्यति स्म। तदा जिनेशः सर्वसाधून् स्माह—"अनेन मद्वधार्थं तेजोलेश्या मुक्ता सा षोडशजनपदान् भस्मसात्करोति एतादृशी प्रहिता, परं सैतस्यैव देहे प्रविष्टा। अधुना स तद्वेदनया शीतोपचारान् करोति"। अथ स गोशाल आजीविकोपासकानां स्वभक्तानां चरमोपदेशं ददौ। ततः स आसन्नं स्वकालमवबुध्य प्राङ्महापुरुषोक्तचिह्नैः स्वशिष्यानेवं प्राह—"यूयं कालप्राप्तं मां विज्ञाय सुगन्धोदकेन संस्नाप्य गोशीर्षचन्दनेन गात्रं विलेप्य पुरुषसहस्रवाह्यशिबिकायामारोप्य श्रावस्त्यां त्रिपथे

चतुष्पथे च महता शब्देनोद्घोषणामिमां कुर्याध्वं—"अयं मंखलीसुतोऽजिनो हि जिनप्रलापी नरमनी-षिहत्याज्ञानकारकः श्रमणघातकोऽनेकेषां मिथ्यात्वप्रवर्धकः स्वतेजोलेश्ययाऽऽक्रान्तो महामातृनोक्रम-सप्तरात्रमध्ये छद्मस्थः सन् कालं गामी, तस्मादयं शिष्या मां कालगतं ज्ञात्वा वल्कलदवरिकया वामपादे बद्ध्वा त्रिभुवने निष्ठीवनं कृत्वा श्रावस्तीचतुष्पथेषु सर्वत्राकर्षविकर्षणं विधाय महत्संस्कारं कुर्याध्वं"। उत्पन्नानन्यावां किञ्चिच्छुद्दर्शनः परमात्मवचने जातप्रत्ययश्च वीतरागशरणं सर्वस्वशिष्यसमक्षं विधाय कालमगमत्। ततस्तच्छिष्यैः स्वगृहस्य पूजासत्कारछन्निवर्तनेन द्वाराण्यपावृत्य तत्कृतशपथपरिपालनार्थं स्वाश्रम एव श्रावस्तीमालिख्य पूर्वोक्तयुक्त्या सर्वं कृतं, ततो नीहरणं कृतं। अत्र प्रभुर्विहरन् क्रमेण मेढकग्रामे समवासरत्। तदा पित्तज्वरार्दितं शरीरं वीक्ष्य चातुर्वर्णजना इमां वार्तां कुर्वन्ति स्म यत्—"गोशालकस्य तपस्तेजसा दग्धशरीरः षण्मासाभ्यन्तरे कालं करिष्यति" इति। इतश्च भगवच्छिष्यः सिंह-नामाऽनगारो निरन्तरषष्ठतपोऽग्न आतापनावमान एवममन्यत—"मम धर्माचार्यस्य भगवतः पित्तज्वरः समजनि। हा! वदिष्यन्त्यन्यतीर्थिका यथा छद्मस्थ एव महावीरो गोशालकतेजोलेश्ययाऽपहतः काल-गतः" इति प्रकृतिभद्रकत्वादेवं भूतभावनाजनितमहादुःखवेदितशरीरो मालुकाकच्छाभिधानं विजनं वनमनुप्रविश्य कुहुकुहु इत्येवं महाध्वनिना प्रारोदीत्। भगवांश्च स्थविरैस्तमाकार्योक्तवान्—"भोः सिंह! त्वया यद्भयं किमपि न तद्भावि, यतो देशोनानि षोडश वर्षाणि केवलिपर्यायं पूरयिष्यामि। ततो गच्छ त्वं नगरमध्ये, तत्र रेवतीत्यभिधानया गृहपतिपत्न्या मदर्थं द्वे कूष्माण्डफलशरीरे उपस्कृते, न त

तान्यां प्रयोजनं, तत्राऽन्यन्निर्दोषमस्ति तद्गृहे, परं पर्युषितं मार्जाराभिधानस्य वायोर्निवृत्तिकारकं कुकुट-
मांसकं बीजपूरकटाहमित्यर्थः तदानय, तेन प्रयोजनं"। इत्येवमुक्तोऽसौ तथैव कृतवान्। रेवती
श्राविका तं सिंहानगारं मुक्तविकारमागच्छन्तं वीक्ष्य हृष्टा तुष्टाऽऽसनादभ्युत्थाय सप्ताष्टानि पदानि संमुख-
मागत्य त्रिः प्रदक्षिणां विधायावादीत्—"हे स्वामिन्! संदिशतु, किमागमनप्रयोजनं?"। मुनिना वीर-
वाक्यानुसारेणौषधयोग्यं याचितं, अनर्हं निषिद्धं। साऽपि स्वात्मानं कृतार्थं मन्यमाना यथायाचितं
तत्पात्रे प्रक्षिप्तवती। तेनाप्यानीय तद्भगवतो हस्ते निहितं। भगवताऽपि वीतरागतयैवोदरकोष्ठे निक्षिप्तं।
ततस्तत्क्षणमेव क्षीणरोगो जातः। आनन्दिनो यतिवर्गः, मुदितो निखिलो देवादिलोकः। तदा सा
रेवती श्राविका त्रिकालज्ञं परमात्मानं स्तुवन्ती तीर्थंकरपदप्राप्तियोग्यं मानसं दधौ। अथ श्रीगौतमः
श्रीमहावीरं प्रणम्यैवं पप्रच्छ—"स्वामिन्! युष्मदीयान्तेवासी सर्वानुभूतिसाधुर्मंखलीसुततपस्तेजसा दग्धः
कां गतिं गतवान्?"। भगवानुवाच—"स साधुः सहस्रारे कल्पे देवत्वेनोत्पन्नोऽष्टादशोदध्यायुःपूर्णान्
च्युत्वा महाविदेहे नरत्वं प्राप्य तत्र सेत्स्यति"। पुनर्गणभृत्पप्रच्छ—"भगवन्! सुनक्षत्रमुनिर्युष्मद्विनेयः
कां गतिं ययौ?"। प्रभुः प्राह—"स मुनिरालोच्य प्रतिक्रम्याच्युतकल्पे महायुर्देवत्वेनोत्पन्नः। ततश्च्यु-
त्वा महाविदेहे सर्वदुःखानामन्तं करिष्यति"। पुनः स्वामिनं पप्रच्छ गणेशः—"मंखलीपुत्रस्तु कां गति-
माश्रितः?"। प्रभुरुवाच—"सोऽन्त्यसमये किञ्चित्प्राप्तश्रद्धो द्वाविंशत्युदध्यायुषा द्वादशकल्पं प्राप्त-
वान्"। अथ ग्रन्थकारः—

किं करोति गुरुः प्राज्ञो मिथ्यात्वमूढचेतसाम् । शिष्याणां पापरक्तानां मंखलीपुत्रसदृशान् ॥ १ ॥

आजन्म मिथ्यात्वरतोऽपि पश्चात्, प्राप्तो जिनेन्द्रस्य वचस्सु तथ्यताम् ।
नाहं जिनो ज्ञातसुतो जिनेश्वरः, प्राहेति शिष्यान् जिनवीर एव सः ॥ २ ॥
त्वद्दीक्षणं मेऽस्तु निजेच्छया वदन्, शिष्यीबभूवेति जिनैः स्वमङ्गिकः ।
मत्वोक्तिबोधं यदि नागमत्तदा, मर्मोक्तिभिः प्रान्तक्षणे ददौ सुधीः ॥ ३ ॥

तस्मै क्रूराय मन्युत्वं स्वामिन्निर्न कदा स्मृतम् । प्रत्युत शुद्धधीर्न्यस्ता अहो त्वद्वीतरागता ॥ ४ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादवृत्तौ सप्तदशस्तम्भे
चतुष्पञ्चाशदधिकद्विशततमं २५४ व्याख्यानम् ॥



## पञ्चपञ्चाशदधिकद्विशततमं २५५ व्याख्यानम् ॥

अथ प्रभोराशातनाफलमाह—

प्रभोराशातनां तन्वन्मंखलीपुत्रः स्वल्पधीः । निजात्मानं भवौघेषु न्यधादहो कुनकेना ॥ १ ॥

स्पष्टः। श्लोकोक्तज्ञातं चेदं—श्रीमदार्यगणनाथः श्रीमत्परमात्मानं त्रिभुवनैकशरणं चान्तिमजिनचन्द्रमिति पप्रच्छ—"स्वामिन्! मंखलीसुतचरित्रमग्रे यज्ञानि तन्निगदतु"। भगवानुवाच—अत्र भरते शतद्वारपुरे

सुमती राजा, सुजद्रा जार्या, तयोः पुत्रो महापद्मनामा घादशकल्पतश्च्युतो मंखलीसुतजीवो जविष्यति, तस्य द्वितीयं नाम देवसेन इति, तृतीयं नाम विमलवाहन इति चतुर्दन्तश्वेतहस्तिप्राप्त्यनन्तरं जावि। ततः स नृपो गाढमिथ्यात्वयुक्तोऽनेकसाधूनां कदर्थनां नानाविधां विधास्यति। तदा सचिवादिप्रकृतिवर्गैः स नृपः सविनयं वदिष्यते—"तव प्रजानाथस्य नेदं करणमुचितं"। तदा तत्क्रियातो निवृत्तोऽप्येकदोद्याने शोजां विलोकयन् एकत्र स्थले तीर्थाधिपशिष्यस्य शिष्यं सुमङ्गलानगारं त्रिज्ञानोपेतं निरन्तरषष्ठतपोविजृम्भितमातापनापरं स विमलवाहनो रथचर्यार्थं निर्गतो वीक्ष्य क्रोधं प्राप्स्यति। ततो नृपो मुनेरुपरि रथं वाहयिष्यति, ततः स नूपः सिंहावलोकनं विधाय मुनिमवलोकयिष्यति तथैव ध्यानतत्परं, तं वीक्ष्य पुनर्वेगेनाश्वरथं मुनेरुपरि खेटयिष्यति। पुनः क्षमाजृदुत्थाय शनैः शनैस्तथैव ध्यानमग्न इति चिन्तयिता—"अहो! अयं जीवो महानिर्घृणः कथमस्ति?"। ततोऽवधिज्ञानेन गोशालस्य जीवं ज्ञास्यति, तदा नृपं कथयिष्यति। "जो महापद्म! इतस्तृतीयजवे त्वं मंखलीसुत आसीः। तदा त्वया तेजोलब्धिना श्रीवीरपरमात्मनः शिष्यौ सर्वानुजूतिसुनक्षत्रनामानौ द्वौ मुनी दग्धौ, तौ तु क्षमारक्षणार्थं क्षमौ, तयोरग्रे इन्द्रादीनां सामर्थ्यं कुन्थुकसदृशं तर्हि त्वं कियन्मात्रः? परं तौ धन्यौ याभ्यां उपसर्गः सोढः, न किञ्चित्कोधाभ्यासं नीते चक्षुःकोणके। तथा समस्तसंसारवर्तिजीवेभ्योऽनन्तगुणवता-

१ मुनिः।

क्षिनः श्रीवीरपरमात्मा त्वन्मुक्ततेजोलेश्यया न स्वल्पमपि क्षोभमगमत्, प्रत्युत तैः प्रत्योपसत्त्वां प्रतिदत्ताः, अपात्रदानात्त्वं प्राप्तवान्, अतोऽहं सुमङ्गलः पूर्वसाधुभिः सदृशः क्षमावान्नास्मि. अहं सरथं सहयं सारथियुक्तं त्वां तपस्तेजसा भस्मसात्करिष्यामि"। इति श्रुत्वा विमलवाहनेनात्यन्तसंजातक्रोधेन तृतीयवारं मुनेरुपरि रथः खेटितः, मुनिर्भूमौ पतितः। तदोत्पन्नक्रोधेन मुनिना तेजःसमुद्घातं कृत्वा सप्ताष्टपदान्यपसृत्य सरथः सहयः ससारथिर्विमलवाहनो भस्मीकरिष्यते। ततो मुनिर्विचित्रषष्ठाष्टमतपःकर्मभिर्बहुवर्षाणि यावत् श्रामण्यपर्यायं प्रपाल्य माससंलेखनयाऽऽलोच्य प्रतिक्रम्य सर्वार्थसिद्धविमानं यास्यति। अथ स नृपो मृत्वा सप्तमपृथ्व्यां ज्येष्ठायुषा भावी। तत उद्धृत्य मत्स्यत्वमनुभूय द्वितीयवारं सप्तमनरकं प्राप्स्यति। तत उद्धृत्य मत्स्यत्वे बहुकदर्थनां प्राप्य षष्ठ्यां पृथिव्यामुत्कृष्टायुष्को नारकी भावी. ततः स्त्रीत्वं, पुनस्तमायां नारकत्वं, पुनः स्त्रीत्वं। तत्रानेककदर्थनां प्राप्य धूमप्रभायां गमिता। तत उरःपरिसर्पत्वेन भावी। तत्र शस्त्रेण वधं प्राप्य पञ्चमपृथिव्यां पुनरुरःपरिसर्पत्वं। ततश्चतुर्थ्यां पङ्कप्रभायां। ततो निःसृत्य सिंहत्वं, पुनश्चतुर्थ्यां। भूयः सिंहत्वं। ततो वालुकायां पृथिव्यां। तत उद्धृत्य पक्षित्वं। पुनर्वालुकाप्रभायां। ततो निःसृत्य पक्षित्वं। ततः शर्कराप्रभायां। तत उद्धृत्य सरीसृपत्वं। पुनर्द्वितीयपृथिव्यां। भूयः सरीसृपत्वं। ततो रत्नप्रभायामुत्पद्य निःसृत्य चासंज्ञित्वं प्राप्य प्रथमनरके गमिष्यति। एवं च यथोक्तक्रमेण चासंज्ञिप्रभृतयो रत्नप्रभादिषु उत्पत्स्यते इत्यसौ तथैवोपपादितः। आह च—

असन्नी १ सरीसिव २ पक्खी ३ सीह ४ उरगि ५ त्थी ६ जंति जा छट्ठीं ।
कमसो उक्कोसेणं सत्तमिपुढवीं मणुअमच्छा ७ ॥ १ ॥

ततश्चर्मपक्षिषु चर्मचटीवागुलादिषु लोमपक्षिषु राजहंसादिषु चेत्यादिपक्षित्वं प्राप्य भुजपरिसर्पत्वेनानेकसहस्रकृत्व उत्पतिता । तत उरःपरिसर्पत्वेन।जगराशालिकादिषु अनेकशतसहस्रकृत्व उत्पतिता । अथाशालिकाजीवस्तु ग्रामनगरचक्रिसैन्यं विनाशयति, कदाचिदुत्पद्यतेऽश्वादिलालादिकमध्ये भूमावकुलासन्नोपजागादारभ्योत्कृष्टतो द्वादशयोजनप्रमाणः संमूर्छिममिथ्यात्वी जायते स यदा पार्श्वं परावर्तयति तत्र गर्ता पतति, तत्र सैन्यादिविनाशः स्यात्, स पर्याप्तः अन्तर्मुहूर्तायुषा विनश्यति । तथाशालिकाजीवस्य द्वीन्द्रियत्वमपीच्छन्ति केचित् । अत्र चतुर्थोपाङ्गानुसारेण पञ्चेन्द्रियः प्रोक्तः इति । तदनु स एकक्षुरद्विखुरगंडिपदहस्तिसनखिषु अनेकशतसहस्रकृत्वोऽवतरिता । ततो जलचरेषु । ततश्चतुरिन्द्रियजवेषु त्रीन्द्रियेषु च । ततो वनस्पतिकायेषु वायुतेजस्कायिकपृथ्वीकायादिषु सर्वत्र प्रत्येकमनेकशतसहस्रकृत्व उत्पतिता । ततो राजगृहपुरे जघन्यमध्यमोत्कृष्टवेश्याभवाँस्त्रीन् प्राप्स्यति । ततो द्विजबालिका भविता । पितृभ्यां महामहेन विवाहः कारितः । क्रमेण श्वशुरगृहे संजातगर्भवती पितुर्गृहे गमनायाशुभशकुनेन कृतप्रयाणाऽन्तरा मार्गे रात्रौ दावाग्निज्वालाभिः पीडिताऽनेकविलापपराऽनन्यगतिका भस्मराशिं प्राप्स्यति । पूर्वमनेन जीवेन संयमधारिणां कोष्ठका ज्वालिता अभूवन्, तत्कर्म उदयागतं । आत्मा

यानि कर्माणि विदधाति तानि जीवस्तु विस्मृतिपदं नयति, परं कर्माणि तु समयसमयोपेतानि जीवं न विस्मरन्ति, एवमनेकमध्ये संस्थितं तं गृह्णन्ति । तदनुसारेणाग्निकुमारदेवत्वेनोत्पतिता । ततो मनुष्यत्वं लब्ध्वा साधुसंगत्या सम्यक्त्वं संयमं च लप्स्यते । क्रमेण कालं कृत्वा दक्षिणपार्श्वेऽसुरकुमारदेवत्वं ग्रहीष्यति विराधितश्रामण्यत्वात्, अन्यथा साधूनां वैमानिकेष्वेवोत्पत्तिः स्यात् । ततः स निःसृत्य मनुजत्वं लब्ध्वा दक्षिणनागकुमारत्वं सुवर्णकुमारदेवत्वं दक्षिणस्तनितकुमारे । ततो मानुष्यं, तत्र विराधितसंयमेन ज्योतिर्देवत्वं । ततो निःसृत्य मनुजभवे संयमं प्रपाल्याद्यकल्पेऽङ्गना, आराधितचरणत्वात् । आराधना चेत्थं—चरणप्रतिपत्तिसमयादारभ्य मरणान्तं यावन्निरतिचारतया तस्य पालना । ततो नरत्वं प्राप्य तृतीयदेवलोकं । उक्तं च पञ्चमाङ्गे—"एवं सणंकुमारे तहा बंभलोए महासुक्के आणते आरणे से णं ततो अविराहियसामण्णे कालमासे कालं किच्चा सव्वट्ठसिद्धे महाविमाणे देवत्ताए उववज्जिहिति से णं तओ हिंतो अणंतरं चयं चइत्ता" महाविदेहे समृद्धिपूर्णकुले उत्पद्य नरत्वेन गुप्तगुरुसंयोगेन प्राप्तदर्शनः सर्वोत्कृष्टसंयमतपोभिः केवलज्ञानमुपार्जयिष्यति । तदा श्रीश्रमणसङ्घमाकार्य स्वचरितं गोशालादिकं प्रकाशयिष्यति—"भो आर्याः ! अहमस्मिन्नाचार्योपाध्यायाद्याशातनाविधानकोऽनन्तसंसारं परिभ्रमितः । तथा युष्माभिर्न विधेयं, मया त्वज्ञतया महामोह्यं विहितं, हा हा त्रिभुवननारणसमर्थनिजोक्तिसमस्तत्रिभुवनपदार्थसार्थलायनन्तानन्तगुणसमन्विताः श्रीवीरतीर्थनाथगुरवो निन्दिताः,

परं मया मनसि किञ्चिदपि अ(न)शुभं ध्यातं, तेन जगद्गुरुणाऽनेकेषां द्विधा दारिद्र्याणि निहतानि, अहं-तु निर्भाग्यशेखरः किञ्चिदपि ग्रहणे न क्षमोऽभूवं, तथाप्यनेन क्षमासमुद्रेणावसानेऽपि शुभाध्यवसायाव-काशो मयि निहितः । तेन प्रभावेणात्र संयमं केवलं चालभे" । इत्यादि देशनायां स्वचरित्रं प्रोच्याने-कान् जीवान् स्वात्मधर्मरसिकान् विधास्यति । ततः क्रमेणानशनं कृत्वा महानन्दपदमनन्तसुखास्पदं प्राप्स्यतीति ॥

हेयस्वरूपं विनयैर्विवर्ज्य, गोशालवृत्तान्तममुं निशम्य ।
आशातना स्वल्पतमा गुरूणां, कार्या न देहैर्न मनोवचोभिः ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ सप्तदश-स्तम्भे पञ्चपञ्चाशदधिकद्विशततमं २५५ व्याख्यानम् ॥

## ॥ समाप्तोऽयं सप्तदशः स्तम्भः ॥



## ॥ अष्टादशः स्तम्भः ॥

### ॥ षट्पञ्चाशदधिकद्विशततमं २५६ व्याख्यानम् ॥

अथाष्टौ ज्ञानाचारास्तेष्वाद्यमाह—

पठनीयं श्रुतं काले व्याख्यानं पावनं तथा । आचारः श्रुतधर्मस्य चाद्यो यत्कथ्यते बुधैः ॥ १ ॥

स्पष्टः । नवरं श्रुतमेकादशाङ्गउत्तराध्ययनादि कालिकं श्रुतं दिवारात्र्योः प्रथमचतुर्थपौरुष्योरेव । उत्कालिकं श्रुतं दशवैकालिकादि दृष्टिवादश्च सर्वासु पौरुषीषु काले च । सूत्रपौरुष्यां सूत्रं पठनीयं गुणनीयं वा, अर्थपौरुष्यां त्वर्थः उत्कालिकश्रुतादि वा । यदिह दिननिशाद्यन्तपौरुषीद्वय एवास्वाध्यायान्तरे पठ्यते तत्कालेन निर्वृत्तं कालिकं १ । कालवेलावर्जं यत्पठ्यते तदुत्कालिकं २ । उभयोरपि श्रुतयोरस्वाध्यायकालो लघुघटीद्वयप्रमाणः, प्रत्यहोरात्रं च चतस्रः कालवेलाः परिहार्याः, तद्यथा—अस्तमिते सूर्ये १, अर्धरात्रे २, प्रभाते ३, चतुर्थी च दिवसमध्यभागे ४ । एतासु चतसृष्वपि निरन्तरं स्वाध्यायो न क्रियते । शेषक्रियाणां प्रतिलेखनादीनां तु न प्रतिषेधः । लोकेऽपि कालवेलायां सन्ध्यावन्दनादि नियतं, यतो द्विजानां प्रत्यहं तिसृभिः सन्ध्याभिश्चतुर्विंशत्यधिकशतत्रयमिताया गायत्रीमन्त्रः प्रत्यहं पूर्णो कार्यः । दुष्टवेलायां सर्वत्र सूत्रादिपठनं सर्वथा निषिद्धं, उक्तं चान्यैः—

चत्वारि खलु कर्माणि सन्ध्याकाले विवर्जयेत् । आहारं मैथुनं निद्रां स्वाध्यायं च विशेषतः ॥ १ ॥
आहाराज्जायते व्याधिः क्रूरगर्भश्च मैथुनात् । निद्रातो धननाशश्च स्वाध्याये मरणं भवेत् ॥ २ ॥

तथा लोकेऽपि गर्हा जायते—"अहो ! अमी साधवः स्वाध्यायकालं न जानन्ति । तथा सन्ध्यासु पठनादिव्यग्रत्वे मुमुक्षोरवश्यकार्ये आवश्यकादौ शुद्धश्राद्धस्य च त्रिकालदेववन्दनपूजादौ अनुपयोगित्वं स्यात्, यथोक्तकालक्रियाभ्रष्टत्वं च स्यात् । तथा निरन्तरस्वाध्यायखिन्नानां तदा विश्रामः स्यात् । विशेषकारणैस्तु कालव्यत्ययेऽपि न दोषः । अत्राह शिष्यः—ननु यथा शुभध्यानं सर्वकालमपि मोक्षहेतुत्वेनोक्तं तथा किं न श्रुतज्ञानमपि ?, तस्यापि मोक्षहेतुत्वात् ? मोक्षहेतोश्च कः कालः ? कश्चाकालः ? । गुरुराह—सत्यं, परं शुभध्यानं सर्वधर्मक्रियानुगं मानसिकं च, न हि तेन काचिद्धर्मक्रिया बाध्यते, किंतु सर्वाऽपि पोष्यते प्रत्युत तेन । श्रुतज्ञानं तु पठनगुणनादिसाध्यं द्विसन्ध्यावश्यकादिवर्जितकाल एवोचितं, तस्यैव च सर्वकालं पाठाद्यभ्यासेऽन्योऽन्यपुण्यक्रियाबाध एव स्यात्, न च तथा युक्तं । तथा मोक्षहेतुत्वे कालविभागस्यायुक्तत्वमिति भवद्वचनं व्यर्थं, यत आहारविहारादीनां भिक्षोः शिवहेतुत्वेऽपि कालविभागस्योक्तत्वात् । यदागमः—"तइआए पोरसीए भत्तपाणं गवेसए" । तथा—

अकाले चरसि भिक्खु काले न पडिलेहसि । अप्पाणं च किलामेसि सन्निवेसं च गरिहसि ॥ १ ॥

ततः श्रुतपाठाद्युक्तकाल एव कार्यं । दर्पादिना व्यत्ययकरणे सागराचार्यवन्महती लज्जा प्राप्यते । तथाहि—उज्जयिन्यां श्रीकालिकाचार्याः सदोद्यतविहारिणोऽभवन् । तेषां पार्श्वस्थाः शिष्यास्तु सर्वे

पार्श्वस्थतां दधुः । साध्वाचारेऽप्यनुपयोगाः । तान् सूरयो नित्यं शिक्षयामासुः, परं ते तु शुनो लाङ्गूलवक्रतां न तत्यजुः । ततस्ते खिन्ना दध्युः—"एतेषां सारणादिभिर्मे स्वाध्यायोऽवसीदति, कश्चिदप्येषां मध्यस्थैर्गुणो न जायते" । अत्र वृद्धवाक्यानुसारेण श्रुतप्रबन्धो लिख्यते—एकदा श्रीसीमन्धरजिना इन्द्रेण पृष्टाः—"स्वामिन् ! भरतक्षेत्रेऽधुना कोऽपि तादृशो विद्वान् वर्तते ? यः पृष्टो युष्माभिः प्रोक्तं निगोदस्वरूपं वर्णयति ?" । प्रभुः प्राह—"हे इन्द्र ! आर्यकालिकसूरयो अधुना मदुक्तानुसारेण श्रुतबलेन तथैव कथयन्ति" । तत इन्द्रो जराजर्जरिताङ्गं विधाय शनैःशनैः पुरो व्रजन् यष्टिकाधारं कृत्वा गुरुपार्श्वं समेयाय. अयस्कारभस्त्रेव श्वासोच्छ्वासान् वहन् गुरून्नत्वा पप्रच्छ—"स्वामिन् ! अहं वृद्धो जराग्रस्तो जातः, इदानीं कियत्परिमाणं ममायुः शेषं विद्यते ? मत्कररेखां शास्त्रानुसारेणावलोक्य कथयितुं प्रसीद । पुत्रकलत्रादिभिर्दूरीकृतोऽहमेकाकी कष्टेन दिनानतिवाहयामि । यूयं षड्जीवनिकायरक्षापरा मय्यनुग्रहं कुरुत" । इति दीनवाक्यानि श्रुत्वा गुरवः करावलोकनं कुर्वन्तः किञ्चित्तस्य [illegible]दिभिस्तथा किञ्चिदत्र श्रुतोपयोगेन चायं कल्पाधिपं विज्ञाय मौनं दधुः । स प्राह—"स्वामिन् ! अहं जरापीडितोऽस्मि, बहुवेलां स्थातुं न शक्तः, अतः शीघ्रं वाचं प्रयच्छ, अथोत्तरकालं कियन्मितं जीवितं मेऽस्ति ? पञ्च वर्षाणि यावत् ? किं वा न्यूनमधिकं वा ?" । गुरुराह—"अधिकतरं" । स आह—"किं दश वर्षाणि यावत् ?" । गुरुः—"एतेभ्योऽपि महदधिकतरं" । स आह—"किं [illegible] विंशतिवर्षाणि ? किं वा त्रिंशद्वर्षाणि ? उत चत्वारिंशद्वर्षाणि ? स्वामिन् ! ब्रूहि सत्यं" । गुरुः प्राह—

किं पुनः पुनः पृच्छ्यते ? युष्मदीयमायुरङ्कगणनादतिरिक्तमपरिमितमस्ति । मुनिसुव्रतस्वामिशासने त्वये-न्द्रत्वं लब्धं, वर्तमानचतुर्विंशतिकान्तिमचतुर्जिनानां पञ्चकल्याणकोत्सवस्त्वया विहितोऽस्ति, आगामिचतुर्विंशतिकाजिनानां कतिपयानां वन्दनार्चनां करिष्यसि, अतः किञ्चिन्न्यूनद्विसागरोपममितमायुर्विद्यते" । इति श्रुत्वा हृष्टो निगोदादिस्वरूपमापृच्छ्य गतसंदेहः श्रीसीमन्धरप्रणीतप्रशंसां तस्मै निवेद्य प्राह–"स्वामिन् ! मत्सदृशं कार्यं समादिश" । गुरुराह–"धर्मरतानां मङ्गानां निर्विघ्नतां विधेहि" । ततः स स्वधिया दिव्यं मनोहरमुपाश्रयद्वारमन्यत्र दिशि संस्थाप्य द्रुतं स्वर्ययौ । इतश्च गुरुशिष्या भिक्षार्थं पुरमध्ये गता आजग्वस्ते समेयुः, गुरुं प्राहुश्च–"स्वामिन् ! किं द्वारमन्यत्र परावर्तितं ? यूयमपि विद्याश्चर्यत्वरीक्षणेषु सस्पृहास्तर्हि अस्मादृशां को दोषः ?" । गुरुः प्राह सर्वं यथास्थितं वृत्तान्तमिन्द्रागमनादिकं । ततस्ते प्रोचुः–"अस्माकमपीन्द्रदर्शनं दर्शय" । गुरुः स्माह–"न देवेन्द्रो मद्वचनानुगः, किंतु स्वेच्छया समागतो गतश्च, अत्रार्थे कदाग्रहो नोचितः" । ततस्ते विनेयाश्च्युतविनया आहारादिकं न तन्वन्ति । ततो गुरव उद्विग्ना निशावसाने तान् सुप्तान्मुक्त्वा शय्यातरश्राद्धाय परमार्थं निवेद्य नगर्या निर्ययुः । विहरन्तः स्वयं स्वर्णभूमौ ययुः । तत्र स्वकीयशिष्यशिष्यस्य धीमतः सागरसूरेः पार्श्वे एर्यापथिकीं प्रतिक्रम्य पृथ्वीं प्रमृज्य स्थिताः । सागरोऽदृष्टपूर्वास्तान्नोपालक्षयत्, नाभ्युत्तस्थौ, न चानंसीत् तान्, इति चापृच्छत्–"हे वृद्धमुने ! कस्मात् स्थानादत्र त्वं समागमः ?" । "अवन्त्याः" इति गाम्भीर्याम्भोधयोऽन्यधुः, न चाकुप्यन् । ततः सूरीन् ज्ञानपूर्वकसमस्तक्रियातत्परान् वीक्ष्य स दध्यौ–"नून-

नवं कोऽपि वृद्धमुनिरस्ति बुद्धिमान्" इति। अथ स शिष्याणां वाचनां प्रयच्छन् प्रमादपोतं मुनिं स्माह—"हे वृद्ध ! मया व्याख्यायमानं त्वं श्रुतस्कन्धममुं शृणु"। सूरिस्तु मौनं दधौ। अथ स प्रज्ञाकौशलदर्शनार्थं वृद्धमुं सधीनिव्रात्यमनुयोगं ततान, व्याख्यारम्भाद्योऽ(द्यः)कालवेलामस्वाध्यायकालमपि नाज्ञासीत। अहो ! अज्ञानं महारिपुर्यते। इतश्च ते शिष्याः प्रातरुत्थिता निजगुरुमपश्यन्तो भृशमाकुला जज्ञिरे, संभ्रान्तस्वान्तास्ते शय्यातरश्राद्धं वसतिस्वामिनमिति पप्रच्छुः—"अस्मान् विमुच्य गुरवः क्व गताः"? इति। ततः सोऽपि सकोपं स्माह—"श्रीमत्सूरिभिरनुशिष्टा अपि यूयं सदाचारे न प्रावर्तध्वं तदा युष्मादृशैः प्रमादमग्नैः शिष्यैर्गुरवः कार्यमनिक्षिजंयेत् ?"। ततस्ते लज्जिता ऊचुः—"हामसान् प्रसद्य तद्दि तैः पावितां दिशं, तानानाय वयमात्मानं सनाथं कुर्महे, अस्मान्नियादृशं नके तादृशं फलमासादि" इति निर्बन्धपरैस्तैः पृष्टः शय्यातरोऽपि तान् जगौ गुरोर्विहारदिशां। ततस्ते सर्वेऽप्यचलन्। क्रमेण स्वगुरून् गवेषयन्तः सागरान्तिकमाजग्मुः। ते सागरसूरिं पप्रच्छुः—"आर्यकालकाः पूज्याः क्व सन्ति ?"। स आह—"ननु मत्पितामहा अत्र तु नायाताः, किन्तु क्षयिन्यां नो वेद्मि कश्चनैको यतिर्वृद्ध उपागतोऽस्ति, यूयं पश्यत, अत्र स्थले वर्तते"। ततस्ते शिष्या गुरून् दृष्ट्वा दीनवदनाः स्वापराधं क्षमयामासुस्तेभ्यो नृपः। ततः सागरसूरिर्ह्रिया स्वगुरुणो दध्यौ—"अहो ! अस्याग्रे मया पाण्डित्यं कृतं तदार्ड, सूर्यकान्त्यग्रे खद्योतज्योत्स्नासदृशं मया चेष्टितं, आत्मे वन्दनमालिकावन्धनं कृतमित्यादि ज्ञेयं"। ततः सोऽभ्युत्थाय विनयेन क्षामणं कृत्वा तत्पादयोर्न्यस्तमस्तक इत्याह—

युष्माकं विश्वपूज्यानां यदज्ञानवशान्मया । आशातना कृता तस्या मिथ्यादुष्कृतमस्तु मे ॥ १ ॥

तत आचार्यास्तस्य प्रतिबोधाय नदीवालुकाभृतं पल्लकमानाययन् चालणिकां च । ततो गुरवस्ता वालुकाश्चालणिकायां संस्थाप्य हस्तक्रियया सूक्ष्मसिकताकणानधोऽपातयन्, चालणिकामध्ये सदराः कर्कराः शेषास्तान् दूरं संस्थाप्य पुनः सिकताः क्वापि स्थानेऽखिलाः क्षिप्त्वा पुनस्तान् रेणून् उद्धृत्य द्वितीयस्थले न्यस्तवन्तः, ततोऽपि तृतीये च, एवं स्थाने स्थाने क्षिप्त्वा समुद्धृताः सिकताः स्तोकतरा जज्ञिरे । एवं रेणुज्ञातं प्रदर्श्य तं जगुः—"वत्स ! नद्यां यथा स्वतो भूयस्यो वालुकाः सन्ति, एवं जिनेन्द्रेषु संपूर्णं ज्ञानमस्ति । पल्लकेन सरितः स्तोकवालुका यथोपात्तास्तथा गणधरैः स्तोकं जिनेन्द्रादाददे श्रुतं । स्थाने स्थाने निक्षिप्योत्क्षिप्ताः क्षित्यादिसंगतेः क्षीयमाणा यथा स्तोकाः पल्लकवालुका अभवन् तथा श्रुतं गणधरपरंपरयाऽऽगतमनुक्रमात्कालादिदोषतोऽल्पाल्पतरबुद्धिषु शिष्येषु विस्मृत्यादेः क्षीयमाणमल्पमेवाधुना वर्तते । चालणिकाज्ञातयोजना तु इत्थं कार्या—सूक्ष्मज्ञानं सर्वं विनष्टं, अधुना बादरज्ञानं, ततो हे वत्स ! धीमदो न कार्यः । तथा हे वत्स ! श्रुतं त्वया सम्यग्रीत्या पठितं, परं ज्ञानस्याचारस्त्वया सम्यग् न निर्णीतः, यस्मादकाले स्वाध्यायं तनोषि । उक्तं च निशीथचूर्णौ—"संझागत्ति अणुदए सूरिए मज्झण्हिं अत्थमणे अड्ढरत्ते, एयासु चउसु सज्झायं न करिंति" । इत्यादि शिक्षां श्रीगुरुमुखाच्छ्रुत्वा मिथ्यादुष्कृतं दत्त्वा श्रीगुरून्ननाम । विस्तारेण वैयावृत्त्यं विदधे ॥

१ वृद्धन्तः ।

विद्वत्सभायां श्रमणान्वितायां, ह्रियं च गर्हां बहुधा लभेत सः ।
यः कालमुल्लङ्घ्य पठेच्छ्रुतादीन्, श्रीसागराचार्य इवात्मदर्पात् ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ अष्टादश-
स्तम्भे षट्पञ्चाशदधिकद्विशततमं २५६ व्याख्यानम् ॥



## सप्तपञ्चाशदधिकद्विशततमं २५७ व्याख्यानम् ॥

अथास्वाध्यायकाले स्वाध्यायं न कुर्यादित्याह—

अस्वाध्यायक्षणेष्वज्ञाः स्वाध्यायं कुर्वते सदा । यतः क्रिया फलत्येव यथोक्तसमयकृता ॥ १ ॥

स्पष्टः । नवरं अस्वाध्यायक्षणास्त्वनेकविधाः सन्ति, तत्स्वरूपमावश्यकनिर्युक्तिवृत्तौ प्रतिक्रमणाध्ययनतश्च प्रवचनसारोद्धारेऽष्टषष्ट्यधिकद्विशततमद्वारतो ज्ञेयं, अत्रापि किञ्चिल्लिख्यते—यदा सूक्ष्मरजो ज्योत्स्ना यावत्कालं पतति तावदस्वाध्यायकालः, तथा धूंवरिपतनसमयेऽपि अस्वाध्यायकालः, नवरं धूंवरिपातक्षणे मुनिर्निश्चेष्टाङ्गोपाङ्गोऽपवरके तिष्ठति । तथा गन्धर्वनगरोल्कादिग्दाहविद्युत्पतने गायनाने अस्वाध्यायो ज्ञेयः, तन्निवृत्त्युत्तरमेकप्रहरं यावदस्वाध्यायः । अकाले विद्युज्झात्कारेऽकालगर्जने प्रहरद्वयं यावदस्वाध्यायः । आषाढचतुर्मासीप्रतिक्रमणानन्तरं प्रतिपदं यावत्, एवं कार्तिकचतुर्मासीप्रतिक्-

मणानन्तरं प्रतिपदं यावत्, तथाऽऽश्विनशुक्लपञ्चमीदिने मध्याह्नत आरभ्य कृष्णप्रतिपदं यावदस्वाध्यायः, एवं चैत्रशुक्लपञ्चमीमध्याह्नतः प्रारभ्य प्रतिपदं यावदस्वाध्यायः, द्वितीयायां समुचितः। तथा नृपसेनापत्यादीनां परस्परसङ्ग्रामेऽस्वाध्यायः । तथा रजःपर्वणि यावद्रजो नोपशाम्यति तावदस्वाध्यायः। तथा नृपे कालगते यावदन्यो राजा नाभिषिक्तो भवति तावदस्वाध्यायः। तथोपाश्रयतः सप्तगृहमध्ये कोऽपि प्रसिद्धनरो मृतस्तदाऽहोरात्रमस्वाध्यायः। तथा कस्मिंश्चिदनाथे हस्तशताभ्यन्तरे कालगते तत्कलेवर उत्पाटिते शुध्यति स्वाध्यायः। महिलारुदितशब्दोऽपि यावच्छ्रूयते तावन्न पठ्यते। तथा तिर्यक्पञ्चेन्द्रियाणां जलजादीनां न विकलेन्द्रियाणां रुधिरे मांसे हड्डे (अस्थनि) च पतिते क्षेत्रतः षष्टिहस्ताभ्यन्तरेऽण्डकपाते यदि तदण्डकमभिन्नमद्याप्यस्ति तदा तस्मिन्नुज्झिते स्वाध्यायः कल्प्यते, यदि तत् स्फुटितं तदा तिस्रः पौरुषीर्यावदस्वाध्यायः, अथ तदण्डकं भिन्नं कललबिन्दुर्वा भूमिलग्नस्तदा तत् षष्टिहस्तेभ्यः परतो बहिर्नीत्वा तत्स्थाने धौते कल्प्यते, यावन्मात्रे मक्षिकापादं स्पृशति तावन्मात्रेऽपि अण्डकबिन्दौ रुधिरादिबिन्दौ वा भूमौ पतितेऽस्वाध्यायः। तथा गवादीनां जरायुर्यावल्लम्बते तावदस्वाध्यायः, जरायौ पतितेऽपि तदनन्तरं तिस्रः पौरुषीर्यावदस्वाध्यायः, मार्जारादिभिर्मूषकादिव्यापादनेऽहोरात्रं सूत्रं नन्द्यादिकं नाध्येतव्यम्। एवं नरसंबन्ध्यपि। नवरं क्षेत्रतः शतहस्तमध्ये मनुष्यावयवेषु सत्सु चर्मरक्तमांसास्थिषु अस्वाध्यायः, परं यद्युपाश्रयवसतेरन्तराले मार्गः परिवहति तदा शुध्यति। स्त्रीणां ऋतौ दिनत्रयं यावदस्वाध्यायः, प्रदररोगोदयेऽधिकोऽपि च। तथा यदि प्रसूताया दारको जातस्तदा

सप्त दिनान्यस्वाध्यायः, अथ दारिका जाता तर्हि रक्तोत्कटेति तस्यां जातायामष्टौ दिनान्यस्वाध्यायः, नवमे दिने कल्प्यते। तथा हस्तशताभ्यन्तरे दारकादीनां दन्तः पतितो यत्र तत्रान्वेष्य यदि न दृष्टस्तदा "दंतउद्दवणियं करेमि काउस्सग्गं" एकनमस्कारकायोत्सर्गं विधाय तदनु स्वाध्यायः शुध्यति। दन्तं विना शेषेऽङ्गोपाङ्गादिसंबन्धिन्यस्थनि हस्तशताभ्यन्तरे पतिते द्वादश वर्षाणि न कल्प्यते स्वाध्यायो वाचनादिरूपः, अनुप्रेक्षा तु न कदाचनापि प्रतिषिध्यते इति। तथाऽऽर्द्रानक्षत्रात्प्रारभ्य स्वातिनक्षत्रं यावद्विद्युद्गर्जनयोरस्वाध्यायो न स्यात्। भूमिकम्पेऽष्टौ यामान् यावदस्वाध्यायः। अग्निपलिवणं यावदस्वाध्यायः। चन्द्रग्रहणे द्वादश यामान् यावदस्वाध्यायः उत्कृष्टः। सूरग्रहण उत्कृष्टः षोडश प्रहरान् यावदस्वाध्यायकालः। पाक्षिकरात्रावपि स्वाध्यायो न शुध्यति इत्यादि संप्रदायानुसारेणास्वाध्यायस्वरूपमवगम्य पठनीयं। अकाले वाचनादिभिः (कृतैः) अज्ञत्वं प्राप्नोति। अत्रार्थे ज्ञातं चेदं, तथाहि—एकः साधुः प्रादोषिककालग्रहणानन्तरं कालिकश्रुतमतीतामपि तद्वेलामजानानः परावर्तयते। ततः सम्यग्दृष्टिदेवतया चिन्तितं—"बोधयाम्यमुं, मा भून्मिथ्यादृष्टिदेवताच्छलमस्य"। ततो मथितकारिकारूपेण मथितभृतमेव घटं मस्तके निधाय तस्यैव साधोरन्तिके गतागतानि कुर्वन्ती "मथितं लभ्यते मथितं लभ्यते" इति महता शब्देन पुनः पुनर्घोषयन्ती परिभ्रमति। ततोऽत्युद्वेजितेन साधुना प्रोक्तं—"अहो! भवत्यास्तक्रविक्रयवेला!"। ततो मथितकारिकयाऽप्यवाचि—"अहो! तवापि स्वाध्यायवेला!" ततो विस्मितः

१ यदि उधृतं नस्यादितिज्ञायते। २ मथितं तक्रम्।

साधुरुपयुज्य मिथ्यादुष्कृतं ददाति । ततोऽ"कालस्वाध्यायविधानेन मिथ्यादृष्टिदेवताविहितछलानि भवन्त्यतः पुनरप्येवं मा कार्षीस्त्वं" इत्यादि साधुर्देवतयाऽनुशासितः । इति श्रुत्वा काल एव स्वाध्यायो विधेयः । यतः क्रिया यथोक्तसमये विहिता अवश्यं फलन्ति । तत्र क्रिया द्विविधाः—प्रशस्ता अप्रशस्ताश्च । तत्र प्रशस्ताः सिद्धान्तमार्गोदिताः सर्वाः क्रियाः, अप्रशस्ताः कृषिकर्मचर्याभाषणादिकाः सर्वाः काल एवावन्ध्यत्वमश्नुवते । अत एव नीतिशास्त्रेऽकालचर्या वर्या नोक्ता, तथाहि—

अकालचर्या विषमा च गोष्ठी, कुमित्रसेवा न कदापि कार्या ।
पश्याण्डजं पद्मवने प्रसुप्तं, धनुर्विमुक्तेन शरेण ताडितम् ॥ १ ॥

क्वापि वने सरसि मन्दरक्ताख्यो हंसो वसति । अथैकदा तत्रोलूक आयातः । भाषितो हंसेन—"कस्त्वं ? कुतोऽत्र वने ?" । स प्राह—"त्वद्गुणश्रवणादहं मैत्रीकरणार्थमागतः" । ततो मैत्री परस्परमजनि । सार्धं क्रीडतः । परं हंसेनेति न ध्यातं चेतसि यन्नीचपरिचयः श्रेयोऽर्थिना त्याज्यः, यतः—

हुं तुंहि वारु साधुजन, दुज्जणसंग निवार । हरे घरी जल झल्लरी, मल्ले परे प्रहार ॥ १ ॥
अपिच—नीच सरिस जउ कीजे संग, चढे कलंक होइ जसभंग ।
हाथिं अंगार ग्रहे जो कोइ, के दाझे के कालो होइ ॥ २ ॥

अथान्यदा हंसमापृच्छ्य स्वस्थानमुलूकः प्राप्तः हंसाग्रे च प्रोक्तं—"एकदा त्वयाऽप्यागन्तव्यं मत्स्थाने" इति प्रोच्य गतः । हंसोऽप्यवसरे तत्र जगाम । न दृष्ट उलूकः, विलोकितश्च बहुस्थानेषु, दृष्टश्च क्वापि

कोटरे प्रविष्टः, प्रोक्तं हंसेन—"भो भद्र ! बहिरेह्येहि, अहं हंसो मिलनायागतोऽस्मि"। उलूकः प्राह—"नो दिवा निःसर्तुं शक्नोमि, त्वं तिष्ठ, रात्रौ गोष्ठी करिष्यते"। ततो रात्रौ मिलितौ, कुशलवार्ताः प्रवृत्ताः, हंसस्तत्रैव सुप्तः। रात्रौ तत्र वने सार्थ एकः स्थित आसीत्, पश्चाद्रात्रौ तस्य चलनावसरे उलूकेनोच्चैः शब्दः कृतः, स्वयं नदीविवरे प्रविष्टः, हंसस्तत्रैव सुप्तो मुक्तः। ततस्तत्स्वरश्रवणक्रुद्धेन सार्थेशेन दुःशकुननिवृत्त्यर्थं शब्दवेधिना बाणेन हंसो निपातितः। अत उक्तं—अकालचर्या० इत्यादि। उक्तं च मार्गानुसारिग्रन्थे—

धर्मार्थस्वात्मनां श्रेयोऽभिवाञ्छन् स्थैर्यभृत्सदा। अदेशाकालयोश्चर्यां विचारज्ञो विवर्जयेत् ॥ १ ॥

अन्यच्च भाषणमपि समयोचितमनेकजनमनस्सु सौख्यकरं स्यात्, अत्रार्थे ज्ञातं चेदं—श्रीचांपानेरदुर्गे वेगड़ो वृद्धः साहिश्रीमहंमदराजः, तस्य लघुकनामा विप्रो भृशं मान्यो भारतीलब्धवर आसीत्। एकदा काजिमुल्लाऽऽखुनवारसहस्रीसुत्रादिभिरिति साहिर्विज्ञप्तः—"हे दीनदुनिपातसाह ! आत्मनां कुराणे हिंदूनां प्रभाते दर्शने दोजकनिबन्धनं चत्वारिंशद्रोजाहारणं च, तेनास्य लघुकस्योषसि दर्शनं न कार्यं। ततः साहिना तेषां तोषाय सर्वथा तदागमनं निषिद्धं। एकदा साहिना काजिमुल्लाशेखरसुवादीनां पुरः प्रश्नचतुष्टयं पृष्टं—"किं सर्वबीजं ? कः सर्वरसः ? कः कृतज्ञः ? कः कृतघ्नश्च ? इति चत्वारि वस्तूनि कानि ?" इति कथिते ते विचार्योत्तरं ददुः, परं नृपेण नाङ्गीकृतं। ततः साहिना लघुकमाहूय तेषां पश्य-

तामेव तथैव पृष्टं सोऽपि शीघ्रं प्राह—"स्वामिन् ! सर्वेषां वीजं जलं, सर्वरसं लवणं, कृतज्ञः श्वा, कृतघ्नश्च जामाता । यतः—

द्रुतमानय पानीयं पानीयं पङ्कजानने । पानीयेन विना सर्वं सद्यः शुष्यति दग्धवत् ॥ १ ॥
प्राथम्यमुदधिष्वासीत्सत्यं ते लवणोदधे । यद्रसेन विना सर्वरसो न स्वादमर्हति ॥ २ ॥
अशनमात्रकृतज्ञतया गुरो–र्न पिशुनोऽपि शुनो लभते तुलाम् ।
अपि वहूपकृते सखिता खले, न खलु खेलति खे लतिका यथा ॥ ३ ॥
क्षणं रुष्टः क्षणं तुष्टो नानापूजां च वाञ्छति । कन्याराशिस्थितो नित्यं जामाता दशमो ग्रहः ॥ ४ ॥"

इति सम्यक्प्रश्नार्थं प्राप्य तेषां पुरः साहिः पुनः पुनः श्लाघां चकार । पुनरप्येकदा तैः साहिनृपपुर इति पिशुनत्वं लघुकसंवन्धि कृतं—"स्वामिन् ! अजस्रं कापुरुषहिंडुलघुकेन सार्धं मन्त्रकरणं न योग्यं, युष्मदीयराज्ये वहव एतादृशा वाक्पटवः सन्ति । ततः साहिना तेषामिति प्रश्नचतुष्टयं पृष्टं—"विश्वे महान् पुत्रः कस्य संवन्धी ज्ञेयः १ ? विश्वे महादन्ताः कस्य २ ? विश्वे महदुदरं कस्य ३ ? विश्वे महादक्षः को वा ४ ?" । इति श्रुत्वा ते विचार्य प्रोचुः—"स्वामिन् ! जगत्सु पातसाहिपुत्र एव महत्तरः १, महान्तो दशना उदरं च हस्तिसंवन्धि ज्ञेयं २–३, विश्वे दक्षस्तु भवत्सदृशः कोऽपि नास्ति ४" इति श्रुत्वा नृपस्ताँ-स्तिरस्कृत्य लघुकमाहूय तत्सर्वं पृष्टवान् । स शीघ्रं प्राह—"स्वामिन् ! विश्वे गोपुत्रसमो महावृद्धः कोऽपि नास्ति, यतो यः पृथ्वीं जीवयति १ । तथा महादन्तश्च लाङ्गलस्य ज्ञेयः, येन भूमौ बीजान्युत्पद्यन्ते २ ।

तथा महदुदरं पृथ्वीसंबन्धि ज्ञेयं, या सर्वं वस्तु रक्षति सर्वस्पर्शं सहते च ३। महादक्षश्च समयज्ञः, यः कालोचितं सुभाषितं वक्ति ४"। इति श्रुत्वा नृपस्तुष्टस्तं प्रीतिपात्रं चकार। एष वृत्तान्तोऽपि किञ्चिदुपयोगित्वाल्लिखितः। इति श्रुत्वा ज्ञानाचारपालकस्य साधोर्जिनाज्ञानुसारेण सर्वाऽपि क्रिया काल एव निष्पादनीया इति स्थितम्॥

श्रीजिनाज्ञानुसारेण अस्वाध्यायस्य वर्णनम्। श्रुत्वा स्वाध्यायकाले हि श्रुतानुयोगमाचरेत्॥ १॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ अष्टादशस्तम्भे सप्तपञ्चाशदधिकद्विशततमं २५७ व्याख्यानम्॥

---

## अष्टपञ्चाशदधिकद्विशततमं २५८ व्याख्यानम्॥

अथ द्वितीयो विनयाचारो लिख्यते—

श्रुतस्याशातना त्याज्या तद्विनयः श्रुतात्मकः। शुश्रूषादिक्रियाकाले तं कुर्याज्ज्ञानिनामपि॥ १॥

स्पष्टः। नवरं श्रुतं द्रव्यभावभेदभिन्नं। तत्र द्रव्यश्रुतं पुस्तकाक्षरादिकं, तस्याशातना पदसंघट्टनं निष्ठ्यूतबिन्दुनाऽक्षरप्रमार्जनादिका ज्ञेया। भावश्रुतस्याशातना सा यत्परमात्मप्रोक्तपदार्थे स्वात्मनि प्रवृत्तस्य ज्ञेया, यतः प्रतिक्रमणावश्यके त्रयस्त्रिंशदाशातनावर्णनावसरे इत्थं निवेदितमस्ति, तथाहि—

"सुअस्स आसायणाए, सुअदेवयाणं आसायणाए"। आशातना तु श्रुतदेवतानां न विद्यते, अकिञ्चित्करी वा इति न वक्तव्यं, न ह्यनधिष्ठितो मौनीन्द्रः खल्वागमः, अतोऽसावस्ति। न चाकिञ्चित्करी, तामालम्ब्य प्रशस्तमनसः कर्मक्षयदर्शनात्। अथवा श्रुतोक्तवचनस्योल्लङ्घनं तच्छ्रुताशातना, श्रुते श्रीजिनैरित्यभिहितं यन्मन्त्रादिविद्या महति शासनकार्ये सति प्रयुज्या, नान्यथा, यः प्रमादादिना आश्चर्यबुद्ध्या च स्थूलभद्रमुनीन्द्रवत् लब्धिविद्यां प्रयुञ्ज्यात् स श्रुताशातनां तनोति, स च महतीं हानिं लभते। तथाहि—पाटलिपुरे श्रीश्रमणसङ्घः एकीभूयेति दध्यौ—अधुना कराले महति दुष्काले प्रसृते धीमतामपि साधूनामनभ्यसनतोऽगुण्यमानं श्रुतं विस्मृतं, ततः सम्प्रति श्रुतोद्धारः क्रियते। ततश्चैकादशाङ्गानि श्रीसङ्घो यस्याङ्गाध्ययनोद्देशाद्यासीत्तदमेलयत्। तदा दृष्टिवादनिमित्तं किञ्चिच्चिन्तयन् तस्थौ। ततो नेपालदेशस्थं श्रुतकेवलिनं भद्रबाहुं ज्ञात्वा सङ्घस्तमाह्वातुं मुनिद्वयं प्रैषीत्। तौ मुनी गत्वा नत्वा चेत्यूचाते सूरिं—"स्वामिन्! वः सङ्घस्तत्रागमनहेतवे समादिशति"। सूरिः प्राह—"महाप्राणायामं ध्यानमारब्धमस्ति, तद् द्वादशभिर्वर्षैः साध्यं, ततोऽहं नागमिष्यामि, महाप्राणायामे निष्पन्ने कास्मिंश्चित्कार्य आगते सर्वपूर्वाणि सूत्रार्थाभ्यां सह मुहूर्त्तमध्ये गुण्यन्ते"। ततस्तौ मुनी गत्वा तद्वचः सङ्घस्याशंसेतां। अथ सङ्घोऽप्यपरमुनिद्वयं समाहूयेत्यादिदेश—"युवां तत्र गत्वा स सूरिरिति वाच्यः—यः श्रीसङ्घस्य शासनं न करोति तस्य को दण्डो भवेत्? इति नः शंस, यदि स सूरिरिति वक्ति स सङ्घबाह्यः कार्यः, तर्हि हे आचार्य! त्वं तद्दण्डयोग्योऽसीत्युच्चकैर्वाच्यः। ताभ्यां गत्वा तथैवोक्तं, सूरिः

स्माह—"मैवं भगवान् सङ्घः करोतु, किंतु मयि प्रसादं कुर्वाणः श्रीसङ्घ इह प्रहिणोतु मेधाविनः शिष्यान्, तेभ्यः सप्त वाचना दास्यामि, तत्रैकां वाचनां भिक्षाचर्यात आगतो दास्ये, तथा तिसृषु कालवेलासु तिस्रः, पुनरपरास्तिस्रः सायाह्नप्रतिक्रमणे जाते, एवं सङ्घकार्यं सेत्स्यति"। ताभ्यामेत्य तथाऽऽख्याते श्रीसङ्घोऽपि प्रसादभाक् स्थूलभद्रादिसाधुपञ्चशतीं प्राहिणोत्। तान् सूरिर्वाचयामास। स्थूलभद्रं विनाऽन्ये स्वल्पवाचनाभिर्ग्रहणाक्षमा निजं स्थानमुद्भज्येयुः। श्रीभद्रबाहुपादान्ते स्थूलभद्रो महामतिरष्टपूर्वाणि अष्टभिर्वर्षैरपाठीत्। एकदा तमल्पवाचनाभिरुद्विग्नं वीक्ष्य सूरिरूचे—"वत्स! मम ध्यानं पूर्णप्रायमिदं, तदन्ते तुभ्यं त्वदिच्छया प्रदास्यामि वाचनाः"। ततः स्थूलभद्रः प्रोचे—"स्वामिन्! मम कियत्सङ्ख्यं शेषमध्ययनं वर्तते?"। गुरुर्बिन्दूदध्युपमानत आख्यत्। ततः क्रमेण महाध्याने पूर्णे स्थूलभद्रो द्विवस्तूनानि दश पूर्वाणि यावत्समापयत्। अत्रान्तरे यक्षादयो व्रतिन्यः स्थूलभद्रवन्दनार्थं समाययुः। प्राक् सूरिं नत्वा ता ऊचुः—"प्रभो! स्थूलभद्रः क्वास्ति?"। सूरिः स्माह—"लघुदेवकुलेऽस्ति"। ततस्ताः समायान्तीर्विलोक्य स आश्चर्यदर्शनकृते सिंहरूपं विनिर्ममे। तास्तत्र पञ्चाननं वीक्ष्य भीताः सूरिमेत्य व्यजिज्ञपन्। सूरिरुपयोगात्तत्स्वरूपमवगम्येत्यादिदेश—"गच्छत तत्र यूयं, वन्दध्वं, तत्र वो ज्येष्ठार्य एवास्ति, न तु केशरी"। पुनस्तत्र ता आययुः, स्वरूपस्थं स्थूलभद्रं ववन्दिरे, श्रीयकस्वर्गगमनस्वरूपमभिधाय संशयं निवार्य तास्तस्यानुजाता निजाश्रयं ययुः। स्थूलभद्रोऽपि वाचनार्थं गुरुमगात्। तदा सूरिर्वाचनां न ददौ "त्वं तस्या अयोग्योऽसी"त्यादिशत्। स

दीक्षादिनात्प्रभृति अपराधाँश्चिन्तयित्वा स्माह—"पूज्य ! न कोऽप्यपराधो मया कृतः, परं पूज्याः समादिशन्तु तत्प्रमाणं" । गुरुः प्राह—"कृत्वा न मन्यसे किं शान्तं पापं ?" । ततः स श्रुताद्याशातनां स्मृत्वा गुरुपादयोः पपात, "भूयोऽदो नो करिष्यामि, क्षम्यतां" । सूरिः प्राह—"त्वं योग्यो नासि" । ततः स्थूलभद्रः सर्वसङ्घेन गुरुममानयत्, यतो महतां कुपितानां महान्तः प्रसादनेऽलं । सूरिः सङ्घं प्राह—"यथाऽसावधुना विचक्रे, तथाऽन्येऽपि करिष्यन्ति, अतः परं मन्दसत्त्वा भाविनः" । ततः स सङ्घेनाग्रहादुक्त उपयोगतो विवेद—"न मत्तः शेषपूर्वाणामभावो भावी, अतोऽस्य श्रुतं प्रदेयं" । ततः स भगवान् "अन्यस्य शेषपूर्वाणि न प्रदेयानि" इत्यभिग्राह्य स्थूलभद्रमवाचयत्, तेन सर्वपूर्वधरो जातः ।

वीरमोक्षाद्वर्षशते सप्तत्यग्रे गते सति । भद्रबाहुरपि स्वामी ययौ स्वर्गं समाधिना ॥ १ ॥

इति दृष्टान्तोपनयं हृदि निर्धार्य श्रुताशातना हेयेत्यादिश्रुतविनयः । तथा शुश्रूषादिक्रियाकाले ज्ञानिनामपि विनयः कार्यः । उक्तं च सूत्रे—

न पक्खओ न पुरओ नेव किच्चाण पिट्ठओ । न जुंजे ऊरुणा ऊरुं सयणे नो पडिस्सुणे ॥ १ ॥

व्याख्या—न पक्षतो दक्षिणादिपार्श्वमाश्रित्योपविशेदिति सर्वत्र गम्यं, गुरुसमासनरूपोऽविनयः

१ श्रोतुमिच्छा शुश्रूषा ।

स्यात् । न पुरतोऽग्रतः, तत्र हि वन्दारुलोकस्य गुरुमुखादर्शनादिनाऽप्रीतिः स्यात् । तथा नैव कृत्यानां कृतिकर्मार्हाणां गुरूणां पृष्ठतः, तत्र द्वयोरपि मुखाप्रेक्षणेन न तादृशो रसः स्यात् । तथा न युञ्ज्यात् ऊरुणाऽऽत्मीयेन ऊरुं गुरुसंबन्धिनं । तथा शयने शय्यायां शयित उपविष्टो वा न प्रतिशृणुयात्, गुरुवाक्यश्रवणानन्तरं सद्यो गुरुपार्श्वमेत्य पादपतनपूर्वमनुगृहीतोऽहमिति मन्यमानो भगवन्निच्छाम्यनुशिष्टिमिति वदेदिति । तथा शिष्यो विनयगुणेन गुरुं प्रसन्नं करोति, यतः—

अणासवा थूलवया कुसीला, मिउंऽपि चंडं पकरंति सीसा ।
चित्ताणुआ लहुदक्खोववेआ, पसायए ते हु दुरासयंऽपि ॥ १ ॥

व्याख्या—अनाश्रवा—गुरुवचनेऽस्थिताः । स्थूलवचसः—अविचारितभाषिणः, कुशीला मृदुमपि—अकोपनमपि गुरुं चण्डं प्रकुर्वन्ति । ये पुनश्चित्तानुगा लघु—शीघ्रं दाक्ष्योपपेतास्ते शिष्याः प्रसादमेयुर्दुराशयमपि—अतिकोपनमपि गुरुमिति । अत्रार्थे चण्डरुद्राचार्यशिष्यज्ञातं, तथाहि—

अवन्त्युद्याने चण्डरुद्राचार्यः सगच्छः समवासरत् । स ऊनाधिकक्रियादोषान् स्वगच्छीयतपस्विनां दर्शं दर्शं अकुपत् । प्रकृत्याऽप्यतिरोषणश्च स इति दध्यौ—"एषां भूयसां वारणं मयैकेनातिदुष्करं, परं रोषातिरेकान्मम स्वहितं न जायते" । ततः स ध्यानार्थमेकान्ते तस्थौ, इतश्चोज्जयिनीवासीभ्यसुतो हस्तबद्धमदनफलो नवोढो मित्रयुक् तत्रागात् । तस्य मित्रैः प्रोक्तं—"भोः साधवः ! एषोऽस्मत्सखा संसाराद्विरक्तो भवदन्तिके दीक्षां ग्रहीतुमिच्छति, अतो भवद्भिरस्य दीक्षा देया" । ततस्ते साधवस्तं गन्धमा-

ह्यवस्त्रवरिष्ठनेपथ्यप्रथितोत्सवं विलोक्य तान् हास्यकारकान् विज्ञाय गुरोरन्तिके प्रेषयामासुः। तत्रापि तथैव प्रोक्तं। ततो गुरुः सरोषस्तान् बभाषे—“भो भावुकाः! भस्म समानयत”। तैः प्रहासिभिर्भस्मापि समानिन्ये। ततो गुरुः स्वयं तस्य शिरोलोचं चकार। ततः सोऽल्पकर्मत्वान्मनस्येवं दध्यौ—“अहो मया स्वयमेव दीक्षा गृहीता, अत्र गुरोः को दोषः? इदमिन्द्रादीनामपि दुर्लभं चरणमनायासेन लब्धं सूरिणा दत्तं तत्त्यजनं नोचितं। यतः—

प्रमादसङ्गतेनापि या वाक् प्रोक्ता मनस्विना। सा कथं दृषदुत्कीर्णाक्षरालीवान्यथा भवेत्॥ १॥

ततः स मित्राणि स्माह—“यूयं गृहे यात, अथ मम गृहेण कार्यं नास्ति”। तैर्भोगार्थं बहूक्तोऽपि स्वयं गृहीतं नामुञ्चत्। ते विलक्षाः स्वगृहं ययुः। स तु नवदीक्षितः परिणामेन तु बहुकालदीक्षितसदृशः सूरिं स्माह—“भगवन्! मम स्वजनाः श्रामण्यं मोचयिष्यन्ति, तदन्यत्र कुत्रचिद्यामः”। गुरुराह—“भो महात्मन्! निशायां नाहं पश्यामि, अतस्त्वं प्रथमं मार्गमालोकय”। सोऽपि मार्गमन्वेष्य त्वरितं प्रत्यावृत्तो व्यजिज्ञपत्—“पादाववधार्येतां”। तेनेत्युक्ते स गुरुः सत्वरं निशि चचाल। तमसाछन्ने मार्गे निम्नोन्नते पदे पदे स्खलन् भूमौ पतन् गुरुः शिष्यं प्रति रोषणो भृशं चुक्रोश—“रे पापिष्ठ! त्वया कीदृक् पन्थाः शोधितः?” इत्युक्त्वा दण्डघातेन मारितोऽपि सुशिष्यश्चिन्तयति—“हा हा! स्वगच्छमध्ये सुखं तिष्ठन्तोऽमी सूरयो मयाऽधन्येन दुःखपात्रं विहिताः। गुरोः केऽपि शिष्या आजन्म

सौख्यदाः स्युः, अहं त्वाद्य एव दिने गुरोराशातनाकरो जातः। गुरोः स्थाण्वादिना भूयोऽपि भूयसी पीडा मा भूत्"। इति ध्यायन् शनैः शनैर्मार्गं दर्शयन् प्रयत्नेन चचाल। "अहो! अस्य गुरोर्महानुपकारः, येन मां प्रति अनादिकालेनाप्यसंप्राप्तरत्नत्रयमार्गः प्रदर्शितः, बहुकालीनभ्रष्टोऽहं परमात्मधर्मपथरहस्ये सन्निहितः। अहो! अनया रीत्याऽतीतकालेऽनादिके केनापि न तारितोऽहं, यया तारुनयाऽनेकभवोपार्जितकर्माणि हीयन्ते। अहो! ज्ञानिगुरुं विना क उपकुरुते?"। इत्यादिशुभध्यानारूढक्षपकश्रेण्या कर्मांशान् छित्वा मोहमहाचमूं जित्वा एकेन गुरुविनयेन केवलज्ञानमाप। यस्मिन् कृतोद्यमस्तमस्त्वचिरेण जगाम। तेन ज्ञानेन मार्गं सम्यग् विलोकयन् विषमं मार्गं त्यक्त्वा समेनैव पथाऽनयत्, तं गुरुं धर्मप्रीत्या प्रीणयामास। अथ प्रभाते सूरिणा शिष्यो रुधिरालिप्तमस्तको ददृशे "अहो! नवीनशिष्यस्याप्यमुष्यानवीना क्षान्तिर्लोकोत्तरा त्रिभिरपि योगैः, चिरप्रव्रजितस्यापि धिङ्मे प्रबलकोपतां" इति सूरिश्चिन्तयन् शिष्यं प्राह—"हे शिष्य! एकं महदाश्चर्यं दृष्टं यत्पूर्वं मार्गे पदे पदे पुनः पुनः स्खलन्मया दृष्टः, तदनु प्राकुट्येऽपि तमसि ऋजु गत्या मां स्वल्पामपि बाधामजनयन् सहस्रकिरणप्रदर्शितमार्गवत्त्वं यथोचितं चचाल, तत्किं कारणं?"। शिष्यः प्राह—"देवगुरुविनयाच्छ्रुतं लभ्यते, श्रुताच्च ज्ञानं, ज्ञानाच्च किं किं न लभ्यते? सर्वमपि लभ्यते" इत्यादि सापेक्षवचनजल्पनेनानन्ताव्याबाधज्ञानप्राप्तं तं मत्वा सूरिः पुनः पुनः स्वात्मानं निन्दन् तत्पादयोः पपात॥

भावनाभिरिति भावितचित्तः, सोऽपि केवलमवाप मुनीन्द्रः ।
एवमुत्कटरुषे गुरवे स्यु-र्मोद्गदाः सविनयाः सुविनेयाः ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ अष्टादश-
स्तम्भेऽष्टपञ्चाशदधिकद्विशततमं २५८ व्याख्यानम् ॥

## एकोनषष्ट्यधिकद्विशततमं २५९ व्याख्यानम् ॥

अथ तृतीयं ज्ञानाचारमाह—

विद्या फलप्रदाऽवश्यं जायते बहुमानतः । तदाचारस्तृतीयोऽतो विनयतोऽधिको मतः ॥ १ ॥

स्पष्टः । नवरं विनयस्तु वन्दननमनादिभिर्बाह्यप्रकारोऽपि स्यात् । बहुमानश्चाभ्यन्तरप्रीतिबन्धः, तस्मिन् सति हि गुर्वादीनामेकान्तेन छन्दानुवृत्तिगुणग्रहणदोषाच्छादनाभ्युदयचिन्तनाद्येव कुर्यात्, श्रुतार्थिना गुर्वादिषु बहुमानः कार्यः, तं विना बहुनापि विनयेन गृहीता विद्या फलप्रदा न स्यात्, यत उक्तं च गौतमपृच्छायां—

विज्जा विन्नाणं वा मिच्छा विणएण गिण्हिउं जो उ ।
अवमन्नइ आयरियं सा विज्जा निप्फला तस्स ॥ १ ॥

अत्र विनयबहुमानयोश्चतुर्भङ्गी यथा—कस्यचिद्विनयो न तु बहुमानः श्रीनेमिजिनं प्रति वासुदेव-

पुत्रस्य पालकस्येव १, कस्यचिद्बहुमानो न तु विनयः शाम्बस्येव, अथवा वक्ष्यमाणनैमित्तिकद्वयज्ञातस्येव २, कस्यचिद्द्वावपि वक्ष्यमाणज्ञातस्य कुमारपालस्येव ३, कस्यचिन्नैकोऽपि कपिलाकालसौकरिकादेरिव ४। अत्र नैमित्तिकद्वयनिदर्शनं यथा—

क्वचित्पुर एकस्य सिद्धपुत्रस्य द्वौ शिष्यौ निमित्तशास्त्रमधीतवन्तौ, परमेको बहुमानपूर्वकं गुरोर्विनयपरायणो यत्किमपि गुरुरुपदिशति तत्सर्वं तथेति प्रतिपद्यते। द्वितीयस्तु तद्गुणविकलः। अन्यदा तौ तृणकाष्ठार्थं जग्मतुः। पथि च कानिचिन्महान्ति पदानि तावपश्यतां। तदैकेनोक्तं—"अग्रे हस्ती याति"। अन्येनोक्तं—"इयं हस्तिनी, न तु हस्ती, साऽपि वामेनाक्ष्णा काणा, तां चाधिरूढाऽस्ति काचिद्राज्ञी, सा सभर्तृका गुर्विणी च प्रजने काल्या अद्य श्वो वा प्रसविष्यते पुत्रं च"। अपरेणोक्तं—"किमेवमदृष्टमसंबद्धं जल्पसे?"। तेनोक्तं—"ज्ञानं प्रत्ययसारमित्यग्रे सर्वं ज्ञास्यते"। ततस्तौ यावत् कियतीं भुवं गतौ तावत्सर्वं तथैव दृष्टं। अत्रान्तरे काचिद्दासचेटी महत्तरं प्रत्याह—"वर्धाप्यसे राज्ञः पुत्रलाभेन"। ततस्तेन शिक्षितोऽपरः परिभावितचेटीवचनं। तेनोक्तं—"नान्यथा तव ज्ञानं"। ततस्तौ नद्यास्तीरे गतौ, दृष्टौ च कयाचिद्वृद्धया जलमाहर्तुं तत्रागतया स्त्रिया, चेष्टाभिर्निमित्तज्ञौ ज्ञात्वा तौ पृष्टौ—"कदा मम पुत्रो देशान्तरात्समेष्यति?"। एवं पृच्छन्त्या एव तस्याः शीर्षाद् घटः पतितो भग्नश्च। ततो झटित्येवाविमृश्यकारिणा प्रोचे—"गतस्ते पुत्रो विपत्तिं"। विमृश्यकारी प्राह—"वयस्य! मैवं वादीः, पुत्रोऽस्या गृहे समागतो विद्यते, याहि मातर्वृद्धे! स्वपुत्रमवलोकय"। साऽपि तूर्णं गृहे

गत्वा पुत्रं वीक्ष्य प्रसन्ना, पुत्रमापृच्छ्य वस्त्रयुगलं रूपकांश्च कतिपयानादाय यथार्थज्ञापिणं समर्पयामास। ततोऽपरः सखेदमिति दध्यौ—"नूनमहं गुरुणा सम्यग्न पाठितः, कथमन्यथाऽहं न जानाम्येष च जानातीति गुरुयोजनादोषः"। ततस्तौ गुरुपार्श्वं गतौ। सुज्ञश्च गुरुदर्शनमात्र एव शिरो नमयित्वा हस्तौ संयोज्य सबहुमानमानन्दाश्रुप्लावितलोचनो गुरोः पादयोरन्तरा शिरः प्रक्षिप्य प्रणिपपात, द्वितीयश्च शैलस्तम्भ इव मनागप्यनमितगात्रोऽवतिष्ठते। ततो गुरुस्तं प्रत्याह—"रे किमिति पादयोर्न पतसि?"। स प्राह—"भवादृशा अपि स्वशिष्ययोर्यद्येवमन्तरं कुर्वन्ति तदा कस्याग्रे एतदुपालम्भप्रदानमपि? यद्यमृतांशोरप्यङ्गारवृष्टिः?"। गुरुणोक्तं—"कस्मादेवं ब्रूषे? न हि मया त्वं विद्याम्नायकथनादौ क्वापि वञ्चितोऽसि"। "तर्हि कथमनेन मार्गे हस्तिन्यादिस्वरूपं सम्यग्ज्ञातं, न तु मया?"। ततो गुरुणाऽपरः पृष्टः—"कथय वत्स! कथं त्वयेदं ज्ञातं?"। स आह—"युष्मत्प्रसादाद्विमर्शः कर्तुमारब्धः, यथैतानि हस्तिरूपस्य पदानि सुप्रतीतान्येव। विशेषचिन्तायां तु किं हस्तिन उत हस्तिन्याः? तत्र कायिकीं वीक्ष्य निश्चितं हस्तिनीति, दक्षिणे च पार्श्वे वृतिसमारूढो वल्लीवितान आलूनविशीर्णो हस्तिनीकृतो दृष्टो, न वामपार्श्वे, ततो निश्चितं नूनं वामेन चक्षुषा काणेति, न चान्य एवंविधपरिकरोपेतो हस्तिनीमधिरूढो गन्तुमर्हति ततो राजकीयं किमपि मानुषं यातीति, तच्च मानुषं क्वचित्प्रदेशे हस्तिन्या उत्तीर्य शरीरचिन्तां कृतवत्, तत्कायिकीं दृष्ट्वा राज्ञीति निश्चितं, वृक्षावलग्नरक्तवस्त्रदशाञ्चलदर्शनात्सभर्तृका, भूमौ हस्तं विन्यस्योत्थानाकारदर्शनाद्गुर्वी, दक्षिणचरणनिस्सहमोचननिवेशदर्शनात्

प्रजने काष्टयेति पुत्रवती चेति। वृद्धस्त्रियाः प्रश्नानन्तरं घटनिपाते चैवं विमर्शः कृतः—यथैष घटो यत्र उत्पन्नस्तत्रैव मिलितस्तथा पुत्रोऽपि"। तदप्रतिमप्रतिज्ञाप्रमुदितेन गुरुणा न्यगद्यत द्वितीयः—"वत्स! विविधविनयकरणेऽपि तव मयि तादृग्बहुमानो न, एतस्य तु सम्यग्बहुमानो, वैनयिकी बुद्धिश्च सम्यग्बहुमानगर्भविनयादेव स्फुरति, ततो ममात्र न कश्चिद्दोषः। इति विनयबहुत्वेऽपि बहुमानाबहुमानदृष्टान्तः।

तथा द्वाभ्यां समन्वितकुमारपालस्य ज्ञातं चेदं, तथाहि—श्रीपत्तने जिनागमसमाराधनतत्परेण कुमारपालेनैकविंशतिज्ञानकोशाः कारिताः, त्रिषष्टिशलाकापुरुषचरित्राणि श्रोतुमिच्छता च श्रीगुरूनभ्यर्थ्य नवीनं शलाकापुरुषचरित्रं षट्त्रिंशत्सहस्रश्लोकमितं कारयित्वा सुवर्णरूप्याद्यक्षरैर्लेखयित्वा स्वावासे नीत्वा रात्रिजागरणं कृत्वा प्रातः पट्टगजेन्द्राधिरूढधृतानेकातपत्रकनकदण्डद्वासप्ततिचामरोपवीजनादिमहोत्सवपरंपरापूर्वकं शालायां नीत्वा द्वासप्ततिसामन्तादियुतेन श्रीगुरुभिर्व्याख्यायमानं सौवर्णरत्नपट्टकूलादिपूजादिविधिना श्रुतं। एवमेकादशाङ्गद्वादशोपाङ्गादिसिद्धान्तप्रतिरेका सौवर्णाद्यक्षरैर्लेखिता, वाच्यमाना च गुरुभिः श्रुता शुद्धबुद्धिना। योगशास्त्रवीतरागस्तवद्वात्रिंशत्प्रकाशाः सौवर्णाक्षरा हस्तपुस्तिकायां लेखिताः। प्रत्यहं मौनेनैकशो गुण्यते सा पुस्तिका देवतार्चावसरे पूज्यते स्म च। "गुरुकर्तृका ग्रन्था मया नियमेन लेख्याः" इत्यभिग्रहं जग्राह। सप्तशती लेखकानां निरन्तरं लिखति। एकदा प्रातर्गुरून् प्रत्येकं सर्वसाधूंश्च वन्दित्वा लेखकशालाविलोकनाय गतः। लेखकाः कागदपत्राणि लिखन्तो दृष्टाः। ततो गुरुणां पृष्टं। गुरुभिरूचे—"श्रीचौलुक्यदेव! सम्प्रति श्रीतालपत्राणां त्रुटिरस्ति ज्ञानको-

शेऽतः कागदपत्रेषु ग्रन्थलेखनं"। इति श्रुत्वा लज्जितो भूपतिः "अहो! गुरूणां नवग्रन्थकरणशक्तिरस्खलिता, मम तु तल्लेखनेऽपि न सामर्थ्यं, तत्किं मम श्राद्धत्वं ?" इति ध्यात्वाऽभ्युत्थाय "क्षपणप्रत्याख्यानं कारयत" इत्याह। "अद्य किमर्थमुपवासः ?" इति गुरुभिः पृष्टे "इतः परं तदा भोक्तव्यं यदा श्रीतालपत्राणि पूरितानि भवन्ति लेखकानां" इत्याह श्रीनृपः। ततो "दूरे श्रीतालाः कथं शीघ्रमायान्ति ?" इति गुरुसामन्तादिभिः सबहुमानं वार्यमाणोऽपि स्वयं कृत उपवासः।

अहो जिनागमे भक्तिरहो गुरुषु गौरवम्। श्रीकुमारमहीभर्तुरहो निःसीमसाहसम्॥ १॥

इत्यादि श्रीसङ्घेन स्तूयमानः स्वावासोपवनमागत्य खरतालान् चन्दनकर्पूरादिभिरभ्यर्च्य मन्त्रसिद्ध इवैवमाह—

स्वात्मनीव मते जैने यदि मे सादरं मनः। यूयं व्रजत सर्वेऽपि श्रीतालद्रुमतां तदा॥ १॥
कथयित्वेति गाङ्गेयमयं ग्रैवेयकं नृपः। कस्याप्येकस्य तालस्य स्कन्धदेशे न्यवीविशत्॥ २॥

तस्थौ च सौधमागत्य धर्मध्यानपरो नृपः। श्रीतालद्रुमतां तांश्च निन्ये शासनदेवता॥ ३॥

प्रातरारामिका राज्ञे निवेदितवन्तः। राजाऽपि तान् पारितोषिकदानेन समानन्द्य पत्राणि समानाय्य गुर्वग्रे मुक्त्वा वन्दिताः श्रीहेमगुरुपादाः।

किमेतदिति पृष्टः सन् गुरवे राड् व्यजिज्ञपत्। तं वृत्तान्तं चमत्कारकारणं सर्वपर्षदः॥ १॥
हेमाचार्यस्तदाकर्ण्य कर्णयोरमृतोपमम्। नृपेण पारिषद्यैश्च सहारामं तमागमत्॥ २॥

एतददृष्टश्रुतपूर्विणो ब्राह्मणा देवबोध्यादयोऽन्येऽपि लोकाश्च खरतारुषु श्रीतारुतां दृष्ट्वा विस्मयाश्चर्यमया बभूवांसः । तदा च हेमाचार्यो जैनमतमुपश्लोकयितुमिदमाह—

अस्त्येवातिशयो महान् भुवनविद्धर्मस्य धर्मान्तरा-
द्यद्भक्त्यात्र युगेऽपि तारुतरवः श्रीतारुतामागताः ।
श्रीखण्डस्य न सौरभं यदि भवेदन्यद्भुतः पुष्कलं,
तद्योगेन तदा कथं सुरभितां दुर्गन्धयः प्राप्नुयुः ॥ १ ॥

इति श्रीजैनधर्मं स्तुत्वा नृपं प्राह—"हे नृप ! अस्मिन् युगे यदि त्वत्सदृशा न भवन्ति तर्हि श्रीमदाप्तागमश्रुतग्रन्थविस्तारः कथं प्रवर्तते ? त्रिधा शुद्धं श्रुतभक्तिबहुमानं सद्योऽद्यैव फलप्राप्तिरूपत्वं तव जातं"। इति गुरूक्तं वर्णनं न्यग्मुखीभूय श्रुत्वाऽनेकप्रकारैर्ज्ञानज्ञानिनां बहुमानमन्तर्भक्त्या विधाय परमार्हत एकोपवासावर्जितशासनदेवताकृतमहिमाऽभ्युदयविशेषप्रथितप्रतापप्रभाववैभवः स्वसौधमागत्य समहोत्सवं पारणं कृतवान् ।

ततस्तद्भवैर्नैकैर्विशालैः कोमलैर्दलैः । लिलिखुर्लेखकाग्रण्यो ग्रन्थान् प्रभुकृतान् सुखम् ॥ १ ॥
एवं ज्ञानिषु ज्ञानेषु बहुमानं दधन्मुदा । महाश्रावकतां लोकोत्तरामाप नृपोत्तमः ॥ २ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तावष्टादशस्तम्भ एकोनषष्ट्यधिकद्विशततमं २५९ व्याख्यानम् ॥

## षष्ट्यधिकद्विशततमं २६० व्याख्यानं ॥

अथोपधानवहनाख्यं तुर्याचारमाह—

उपधानतपस्तप्त्वा आवश्यकं पठेद्गृही । योगैश्चाप्तागमान् साधुरित्याचारश्चतुर्थकः ॥ १ ॥

स्पष्टः । नवरं श्रुतार्थिनामुपधानतपो विधाय पठनं, उप समीपेऽधीयते येन तपसा तदुपधानमिति व्युत्पत्तेः, तच्च साधूनामावश्यकादिश्रुताराधनार्थमागाढानागाढयोगरूपं सिद्धान्ताविरोधि स्वस्वसामाचार्यनुसारेण ज्ञेयं, श्राद्धानां तु श्रीमहानिशीथाद्यागमोक्तं पञ्चपरमेष्ठिनमस्कारादिसूत्राराधनार्थमुपधानषट्कं प्रतीतमेव । साधूनां योगोद्वहनं विना यथा सिद्धान्तवाचनादि न शुध्यति तथोपधानतपो विना श्राद्धानामपि नमस्कारादिसूत्रपठनगुणनादि न शुध्यति । यदुक्तं श्रीमहानिशीथे अकालाविनयाबहुमानानुपधानाद्यष्टविधज्ञानकुशीलानां मध्येऽनुपधानकुशीलस्य महादोषत्वं । अथोपधानवहनं योगविधिं च ये न मन्यन्ते तान् प्रति सूत्रवाक्यानि दर्शयन्ति पूर्वपूज्याः उत्तराध्ययने एकादशेऽध्ययने—

वसे गुरुकुले निच्चं, जोगवं उवहाणवं । पियं करे पियं वाई, से सिक्खं लद्धुमरिहति ॥ १ ॥

तथा समवायाङ्गे द्वात्रिंशद्योगसंग्रहमध्ये चतुर्थसङ्ग्रहे "अणस्सिउवहाणे अ" । अत्र केचिद्वदिष्यन्ति यद्योगा मनोवाक्कायसंबन्धिनस्तेऽत्र ज्ञेयाः । अत्रोत्तरं—यदि योगशब्दस्य मूलार्थापनं क्रियते तर्हि वहनशब्दस्य कोऽर्थः भविष्यति ? द्वयोः शब्दयोः समानाधिकरणार्थकरणमेवार्हं । तथा स्थानाङ्गे तृतीयस्थाने—"तिहिं ठाणेहिं संपन्नेऽणगारे अणाइअं अणवदग्गं दीहमद्धं चाउरंतसंसारकंतारं

वीईवएज्जा, तं जहा—अणिदाणयाए दिठिसंपन्नयाए जोगवाहिआए" इति । तथा १० स्थाने—"दसहिं ठाणेहिं जीवा आगमेसिन्नद्दगत्ताए कम्मं पकरेंति, तं जहा—अणिदाणयाए दिठीसंपन्नयाए जोगवाहियत्ताए खंतिखमणयाए" इत्यादि ज्ञेयं । यद्वा सर्वयोगवहनविधिरहस्यबीजभूतानुयोगद्वारे—"नाणं पंचविहं पन्नत्तं, तं जहा—आभिणिवोहियनाणं जाव केवलनाणं, तत्थ चत्तारि नाणाइं ठप्पाइं ठवणिज्जाइं, णो उद्दिस्संति णो समुद्दिस्संति णो अणुण्णविज्जंति, सुअनाणस्स उद्देसो १ समुद्देसो २ अणुन्ना ३ अणुओगो ४ पवत्तई" इत्यादि । तथा योगविधिश्च भगवत्यङ्गप्रान्तेऽस्ति । तथा नन्दीसूत्रे श्रुतानामुद्देशसमुद्देशनकालाः प्रोक्ताः सन्ति, यथाऽऽचाराङ्गे—"से णं अंगठ्याए पढमे अंगे दो सुअखंधा पणवीसं अज्झयणा पणसीइ उद्देसणकाला" इत्यादि, अत्र कालशब्देन कालग्रहणविधिर्वक्तव्यः, यस्मादुत्तराध्ययने २६ चत्वारि कालग्रहणानि सन्ति, तानि योगविधावेवार्हाणि । अथ श्राद्धानामुपधानविधिं निषिध्य साधूनां योगविधिं च परित्यज्य श्रुतभणनं सदोपदिशन्ति सर्वेषां, तन्न योग्यं तीर्थकराशातनाजागमानत्वात् । तथा श्राद्धानां सूत्रमाचाराङ्गादि तत्पठनं सूत्रे निषिद्धं । तथाहि सप्तमाङ्गे—कामदेवश्राद्धः समवसरणे समागतस्तदा श्रीवीरस्तं रात्र्युद्भवमुपसर्गस्वरूपं सभासमक्षं स्माह, "तएणं समणे भगवं महावीरे वहवे समणे निग्गंथे अ निग्गंथीओ अ आमंतेत्ता एवं वयासी—जइ ताव अज्जो समणोवासगा गिहिणो गिहमज्झे वसंता दिव्वमाणुसतिरिक्खजोणिए उवसग्गे सम्मं सहंति० सक्का पुणाइं अज्जो समणेहिं णिग्गंथेहिं दुवालसंगगणिपिडगं अहिज्जमाणेहिं दिव्वमाणुसतिरिक्खजोणिए उवसग्गे सम्मं

सहित्तए०"। अत्र सूत्रालापके साधव एव द्वादशाङ्गीधराः प्रोक्ताः, न तु श्राद्धाः इति। तथा पञ्चमाङ्गे—"तत्थ णं तुंगियानयरीए वहवे समणोवासगा परिवसंति अड्ढा जाव अपरिभूआ अभिगयजीवा० णिग्गंथे पावयणे णिस्संकिया० लद्धठा गहिअठा० अवंगुदुवारा चिअत्तंतेऽजर परघरपवेसा०" इत्यादि श्राद्धवर्णनं उपासकोपपातिस्थानाङ्गप्रमुखतो ज्ञेयं, परं सर्वत्र लद्धठा इति प्रोक्ताः, न चैकस्मिन्नपि सूत्रे लद्धसुत्ता इति उदिताः, परं सर्वत्र निर्ग्रन्थप्रवचनं सम्यगुक्तं, न तु श्राद्धसत्कं। अपि च श्राद्धाः सूत्रपठनमनोरथमपि न कुर्वन्ति, यतः स्थानाङ्गे—"तिहिं ठाणेहिं समणेहिं समणे निग्गंथे महाणिज्जरे महापज्जवसाणे भवइ—कया णं अहं अप्पं वा बहुं वा सुअं अहिज्जिस्सामि? कया णं अहं एकल्लविहारं पडिमं उवसंपज्जित्ताणं विहरिस्सामि? कया णं अहं अपच्छिममारणंतिअसंलेहणा०?। तिहिं ठाणेहिं समणोवासए महाणिज्जरे महापज्जवसाणे भवइ, तं जहा—कया णं अहं अप्पं वा बहुं वा परिग्गहं परिचइस्सामि? कया णं अहं मुंडे भवित्ता आगाराओ अणगारिअं पव्वइस्सामि? कया णं अहं अपच्छिममारणंतिअं संलेहणाझूसिए भत्तपाणपडिआइक्खए पाओवगमं कालमणवकंखमाणे विहरिस्सामि? एवं समणसा सवयसा सकायसा पडिजागरमाणे समणोवासए महाणिज्जरे महापज्जवसाणे भवइ" इति। अथवा सुगडांगश्रुते नवमाध्ययने—

गिहे दीवमपासंता पुरीसादाणिया नरा। ते वीरा बंधणुम्मुक्का नावकंखंति जीविअं॥ १ ॥

गृहस्थावासे दीपो भावश्रुतज्ञानं तं प्रति अपश्यन्तो वीरपुरुषा असंयमजीवितं न स्पृहयन्ति, अतः

श्रुतार्थिनः संयमं स्वीकुर्वन्तीति। अथवा योगवाहिसाधुं विना ये श्रुतं पठन्ति तेषां तीर्थकरादत्तं लगति। यतः प्रश्नव्याकरणे उक्तं—"तं सच्चं भगवं तित्थगरसुभासिअं दसविहं चउदसपुव्वीहिं पाहुड-त्थवेइअं महरिसीण य समयप्पदिन्नं देविंदनरिंदे भासीयत्थं"। अत्र पाठे प्रकटमरिहन्तेन साधुभ्यो दत्तं श्रुतं सर्वदेवतामनुष्याणां अर्थतः समर्पितं चेति। तथा श्रुतपठनं यो वाञ्छति स प्राग्व्याकरणो-क्तभेदानां ज्ञानं करोति। यतः प्रश्नव्याकरणे उक्तं—"अह केरिसं पुण सच्चं तु भासियव्वं जं तं दव्वेहिं पज्जवेहिं०" इत्यादिपाठमध्ये इत्थं प्रोक्तं—नाम १ आख्यात २ उपसर्ग ३ निपात ४ तद्धित ५ समास ६ सन्धि ७ पद ८ हेतु ९ यौगिक १० उणादि ११ क्रियाविधान १२ धातु १३ स्वर १४ विभक्ति १५ वर्ण १६ एतन्मितान् भेदान् यो जानाति स एव सत्यवाक्कथको नान्यः इति। यद्वा विगय ( विकृति ) प्रतिबद्धाः श्रुतपठनेऽयोग्याः। यतः स्थानाङ्गे—"तओ अ वायणिज्जा पन्नत्ता, तं जहा—अविणीए विगइपडिबद्धे अविओसियपाहुडे तओ कप्पंति वायइत्तए विणीए अविगयपडिबद्धे विओसियपाहुडे" इति। अथवाऽष्टाविंशत्यस्वाध्यायकालमध्ये साधुसाध्वीनां श्रुतपठनं निषिद्धं, तत्र न आज्ञाग्रहणं। यतः स्थानाङ्गे यथा "नो कप्पइ निग्गंथाण वा निग्गंथीण वा चउहिं महापडिवेहिं सज्झायं करित्तए, तं जहा—आसाढपडिवए इंदमहापडिवए कत्तियपडिवए सुगिम्हपडिवए। नो कप्पइ णिग्गंथाण वा निग्गंथीण वा चउहिं संझाहिं सज्झायं करित्तए तं जहा—पढमाए पच्छिमाए मज्झण्हे अड्ढरत्ते" १० स्थानके दसविहे अंतलिक्खिए असज्झाइए प० दसविहे उरालिए असज्झाइए" इत्यादि सर्वं ज्ञात्वा श्रुतं साधूनामेवास्वा-

ध्यायमध्ये न पठनीयमिति । अपि च निशीथसूत्रे श्रावकान् प्रति वाचनादायकसाधुभ्यः प्राय-
श्चित्तं प्रोक्तमस्ति, यतः—"जे भिक्खू अण्णउत्थिअं वा गारत्थिअं वा वाएइ वायंतं वा साइज्जइ
तस्स णं चाउम्मासियं पायच्छित्तं हवइ त्ति" । अत्राह परः—ननु योगविधिना श्रुतपठनं तर्हि
महाकालोल्लङ्घनं स्यात्, धन्यानगारस्तु अल्पकालेनैवैकादशाङ्गाध्ययनं चकार, योगवहनेनैव श्रुत-
पाठः कार्य इति पाठस्तु कल्पनाकृतः समापतति । अत्र प्रतिविधानं—हे सिद्धान्तपरमार्थाज्ञ !
श्रीजिनैः सिद्धान्ते पञ्च व्यवहाराः प्रोक्ताः सन्ति, यदा यो व्यवहारः प्रवर्तते तदा तेन प्रवर्ति-
तव्यं, अन्यथाऽऽज्ञाभङ्गः स्यात्, तस्माद्धन्यप्रमुखा आगमव्यवहारिणः, तेषां तुलनाऽधुना न
कार्या । अधुना जितव्यवहार एव मुख्योऽस्ति, अधुना श्रुतकेवल्यादीनामभावादिति । अपि च
श्रीनेमिजिनेन गजसुकुमालं प्रति दीक्षाद्यदिन एवैकाकिविहारप्रतिमाकरणाज्ञा लाभं वीक्ष्य दत्ता,
अत्रानुक्रमाधिकक्रियाभिर्गुणप्रवर्धनं विचार्य तैर्युक्तिः क्रियते तन्न योग्यं । अथान्यथा वा परः प्राह—
सूत्रे श्रावकाः "सुअपरिग्गहिया" इत्थं प्रोक्ताः सन्ति, अतः श्रुतपठनं योग्यं । गुरुराह—अत्र सूत्रमा-
वश्यकषट्करूपं ज्ञेयं, तदप्युपधानविधिपूर्वकं पठति, यस्मान्नन्दीसूत्रे "सुअपरिग्गहिया" इत्युक्त्वाऽनन्तरं
"तवोवहाणाइं" एतत्पदं निगदितं, अतस्तत्पूर्वकं । पुनः परः प्राह—तर्हि आवश्यकसूत्रपठनं कथं न
निषिध्यते ? " । गुरुराह—अत्रार्थेऽनुयोगद्वारवचनं चेदं, यतः—

समणेण सावएण वाऽवस्स कायवं हवइ जम्हा । अंतो अहोनिसिस्स य तम्हा आवस्सयं नाम ॥ १ ॥

इतिवचनादावश्यकश्रुतमवश्यं विधिना वाच्यं पठनीयं च, कारणे तु षड्जीवनिकायाध्ययनपठनेऽपि न दोषः इति चूर्णिवाक्यं । अथवा—"जे णं केई न इच्छिज्जा एअं निअंतणं अविणउवहाणेणं चेव पंचमंगलाइसुअनाणमहिजेइ वा अज्झावयमाणस्स वा अणुन्नं पावई से णं न भविज्जा पि अधम्मे जाव गुरु से णं आसाइज्जा अइआणागयवट्टमाणे तित्थयरे आसाइज्जा सुअनाणं आसाइज्जा जाव अणंतसंसारसागरमाहिंडमाणस्स जाव सुचिरं निअंतणा" इत्यादिमहानिशीथालापकतः सर्वत्रोपधानस्वरूपं ज्ञेयं । सम्प्रति तु द्रव्यक्षेत्रकालाद्यपेक्षया लाभालाभं विभाव्याचरणयोपधानतपो विनाऽपि सूत्रपाठादि कार्यमाणं ( क्रियमाणं ) दृश्यते । आचरणा च जिनाज्ञासमानैव, यतो भाष्ये—

असढाइन्नणवज्जं गीअत्थ अवारिअंति मज्झत्था । आयरणाऽवि हु आण त्ति वयणउ सुवहु मन्नंति ॥१॥

परं येन पञ्चमङ्गलाद्यधीतानि तेनावश्यमुपधानानि यथाशक्ति तपसा वहनीयानि, गुर्वभावे दक्षश्राद्धेन स्थापनागुरुसमीपे सर्वोपधानविधिः कार्यः, परमालस्यादिकं न कार्यं इति हीरप्रश्ने, बहुगृहकृत्यादिवैयग्र्येण प्रमादादिना च य उपधानं नोद्वहन्ते तेषां नमस्कारगुणनदेववन्दनेर्यापथिकीप्रतिक्रमणादि जन्ममध्ये कदापि न शुध्यतीति भवान्तरे तेषां तल्लाभोऽपि दुःसंभव इति ॥

श्राद्धैः षडुपधानानि क्रियाविशुद्धिकामुकैः । आराध्यानि यतः सौख्यं सर्वत्र प्राप्नुवन्त्यथ ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तावष्टादशस्तम्भे षष्ट्युत्तरद्विशततमं २६० व्याख्यानम् ॥

## एकषष्ट्यधिकद्विशततमं २६१ व्याख्यानम् ॥

अथ योगबहुमानमाह—

योगक्रियां विना साधुः सूत्रं पठेन्न पाठयेत् ।
दुष्कर्माणि विलीयन्ते श्रुत ( वाग् ) देवी वरदा सदा ॥ १ ॥

अत्रार्थे संबन्धश्चायं—पाटलिपुरे द्वौ बान्धवौ व्यवहारिणावभूतां । अन्यदा गुरुसमीपे धर्मोपदेशं शुश्रुवतुः, यथा—"धम्मो मंगलमुक्किठं अहिंसा संजमो तवो । देवा वि तं नमंसंति जस्स धम्मे सया मणो ॥ १ ॥" इत्यादिदेशनां श्रुत्वा चारित्रमङ्गीचक्रतुः । तत्रैको भ्राता क्षयोपशमवशाद्बहुश्रुतो जातः, गुरुभिर्योग्यो विज्ञाय सूरिपदे स्थापितः । स पञ्चशतीयतिपतिः सर्वेषां वाचनां ददाति । संशये सति पुनः पुनस्ते प्रश्नं कुर्वन्ति, रात्रावपि प्रमिलावकाशं न लभते, ततो ज्ञानावरणीयकर्मोदयादेवं चिन्तयति—"धिग्मां शास्त्रपारगं, यतोऽहं क्षणमपि रतिं न प्राप्नोमि, धन्यो मे भ्राता निश्चिन्तस्तिष्ठति, यतः—"मूर्खत्वं हि सखे ममापि रुचितं तस्मिन् यदष्टौ गुणा, निश्चिन्तो १ बहुभोजनो २ ऽत्रपमना ३ नक्तंदिवा शायकः ४ । कार्याकार्यविचारणान्धबधिरो ५ मानापमाने समः ६, प्रायेणामयवर्जितो ७ दृढवपु ८ मूर्खः सुखं जीवति ॥ १ ॥" इत्यादि, "अतोऽहं क्लेशं जहामि" इति भावयन्नास्ते । अन्यदा मुनयो विहारभूमिमाहारग्रहणादिकार्येषु गताः, ततः सूरिश्चिन्तयति—"अहो ! बहुनिर्वा-

सरैर्मयाऽवकाशो लब्धः, इतो निर्गत्य स्वेप्सितं साधयामि" इति विचिन्त्य सूरिर्वसतितो वहिर्गतः, एकाकी नगरान्निर्गच्छन् कौमुदीमहोत्सवे एकं स्तम्भं ददर्श, कथंभूतं ? जनैर्गीयमानं नानाविधभूषणैर्भूपितं । महोत्सवे समाप्ते पुनस्तं स्तम्भं विगतशोभं काकादिभिर्निषेवितं ददर्श । ततः सूरिरचिन्तयत्—"असौ स्तम्भो यदा जनैः पूजितः परिवृतश्चासीत्तदाऽत्यन्तं शोभागृहमासीत्, इदानीं तु कामपि शोभां न लभते । ननु परिच्छदसमन्वितस्यैव शोभा भवेत्, नान्यथा, तर्हि धिग्मां, परिकरतो जिनधर्मतश्च परिभ्रष्टः स्वैरं विहर्तुमिच्छामि" । इत्यादि विचिन्त्य पुनः स्ववसतौ समागतः स्वमनसैवालोचनां जग्राह, परं दुश्चिन्तितेन ज्ञानावरणीयकर्म वद्धं, तदवस्थितमेव बभूव । पुनर्निर्मलं चारित्रं प्रपाल्य स्वायुःपर्यन्तेऽनशनेन मृत्वा स्वर्गे गतः । ततश्चाभीरसुतो जातः, क्रमाद्यौवने पित्रा कन्यां परिणायितः, क्रमात्तस्याः सुता जाता, साऽत्यन्तरूपलावण्या बभूव । अन्यदाऽनेक आभीरा घृतभाजनैः शकटानि भृत्वा विक्रेतुं ग्रामान्तरं प्रतस्थिरे, तदा सोऽप्याभीरः शकटं भृत्वा स्वपुत्रिकां खेटकत्वेन संस्थाप्य तैः सार्धं चलितः । इतश्चान्ये शाकटिकाः कन्यां वीक्ष्य व्यामोहिता व्यग्रमानसा उन्मार्गे शकटानि वाहयामासुः, ततो भग्नान्यनांसि । तत्स्वरूपं ज्ञात्वा तज्जनकश्चिन्तयामास—"धिक् संसारस्वरूपं, जीवा असारे मलमूत्रपुरीपपात्रे स्त्रीशरीरे स्वहितसाधननिरपेक्षाः कामिनो मुह्यन्ति" इत्यशुच्यादिभावनयोत्पन्नवैराग्यो जातः । ततो घृतादि विक्रीय निजग्रामे समागत्य स्वां दुहितरमुद्वाह्य सद्गुरुपादमूले दीक्षामुपाददे । क्रमेणावश्यकादियोगोद्वहनं विधायोत्तराध्ययनयोगं वहता तेनाध्ययनत्रयं पठितं पूर्वोपार्जितकर्मोदये-

नायासेनापि असङ्ख्येयाध्ययनस्याक्षरमात्रमपि नायाति । ततो गुरून् पप्रच्छ—"एतन्नायाति" । गुरुणा- भाडणि—"हे मुने ! त्वमाचाम्लं तपः कुर्वन् मा रुष मा तुष इति रागद्वेषनिग्रहगर्भं पदं समुद्घोषय"। तेनोक्तं—"अन्यपाठैः सृतं"। तं बाढं घोषयति तदपि मुखे नायाति, अस्पष्टवर्णोच्चारणेन लोका हसन्ति स्म, स क्षमां बिभर्ति, प्रत्युत स्वकर्मैव निन्दति—"अरे जीव ! मा रुष मा तुषेति" सर्वसिद्धा- न्तसारं तदेव पठतो लोकैर्मासतुसनाम दत्तं । आत्मनिन्दां विदधानस्याचाम्लं कुर्वतो द्वादश वर्षाणि व्यतीतानि, ततस्तत्पदं घोषयन् शुक्लध्यानेन क्षपकश्रेण्यारूढः सकललोकालोकप्रकाशकमचलं केवलज्ञा- नमवाप । ततो देवैः केवलमहिमा चक्रे । ततो मह्यां विहृत्य भूरिशो भव्यान् प्रतिबोध्य मासतुसकेवली अनन्तचतुष्कमयं शाश्वतं स्थानमवाप ॥

इत्थं मासतुसः साधुर्भावनाक्षिप्तपातकः । केवलज्ञानमासाद्य प्रपेदे शाश्वतं पदम् ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तावष्टाद- शस्तम्भे एकषष्ट्यधिकद्विशततमं २६१ व्याख्यानम् ॥

## द्विषष्ट्यधिकद्विशततमं २६२ व्याख्यानम् ॥

अथ योगोद्वहनस्थिरीकरणार्थं दृष्टान्तमाह—

नलिनीगुल्मत एत्याचार्यजीवः सुरोत्तमः । योगवाहिस्वशिष्याणां क्रियास्वविघ्नमातनोत् ॥ १ ॥

स्पष्टः । नवरं स्थानाङ्गसूत्रे—समणस्स भगवओ महावीरस्स तित्थंसि सत्त पवयणनिन्हगा पन्नत्ता, तं

जहा—बहुरया १ जीवपएसिआ २ अवत्ता ३ सामुच्छेइआ ४ दोकिरिया ५ तेरासिआ ६ अबद्धिया ७। एएसि णं सत्तन्ह पवयणनिन्हगाणं सत्त धम्मायरिया होत्था, तं जहा—जमाली १ तीसगुत्ते २ आसाढे ३ आसमित्ते ४ गंगए ५ छलूए ६ गोट्ठामाहिल्ले ७ इत्यादिना अमी सप्त निह्नवाः सूत्रे सूचामात्रेण सूचिताः। तन्मध्ये तृतीयनिह्नवस्तु योगक्रियावहनानन्तरं मिथ्यात्वोदयेनोत्पन्नः, इत्थमनेकस्थानेषु साधुप्रधानं तपो वर्णितं दृश्यते, अहो! तदपलपनं यः करोति तस्य धार्ष्ट्यमनाकलनीयं, यत्प्रत्यक्षं सूत्रविरुद्धं भाषते, तदा त्ववक्तव्यवादिचरित्रं व्यर्थतां प्राप्नोति सूत्रे सूचितमपि, तच्चेदं श्लोकोक्तज्ञातं संप्रदायागतं—श्वेताम्बिकानाम्न्यां पुर्यां पोलाससंज्ञके वने सगच्छा आर्याषाढसूरयः समवासार्षुः। तेषामागमपाठिनो बहवः शिष्या आगाढयोगवहनं प्रतिपन्नाः क्रियारताश्च बभूवुः। तथाविधकर्मोदयात्सूरयस्तत्रैव दिने हृदयशूलेन कालं कृत्वा सौधर्मदेवलोके नलिनीगुल्मविमाने देवत्वेनोत्पन्नाः। न च विज्ञाताः केनापि गच्छमध्ये। ततोऽवधिज्ञानोपयोगात्तान् संयतानागाढयोगं प्रपन्नान् विज्ञाय साध्वनुकम्पया समागत्य तदेव शरीरमधिष्ठायोत्थाप्य प्रोक्तास्तेन साधवः—"वैरात्रिककालं गृह्णीत"। उत्तराध्ययने २६ उक्तं कालग्रहणं योगविधियोग्यानुष्ठानं—

पोरसीए चउब्भाए वंदित्ताण तओ गुरुं। पडिक्कमित्ता कालस्स कालं तु पडिलेहए॥ १॥

अत्र प्राभातिककालग्रहणं स्थापितं।

तम्मेव य नक्खत्ते गयणं चउब्भागसावसेसम्मि। वेरत्तिअं पि कालं पडिलेहित्ता मुणी कुज्जा॥ २॥

अत्र वैरात्रिककालग्रहणं निगदितं । इत्यादिसूत्रानुसारेण तद्देववचसा साधुभिः कृतं, तथैव श्रुतस्योद्देशसमुद्देशानुज्ञास्तदग्रतः कृताः । एवं दिव्यप्रभावतस्तेन देवेन तेषां साधूनां कालभङ्गादिविघ्नं रक्षता शीघ्रमेव निस्तारिता योगाः । ततस्तेन तच्छरीरं मुक्त्वा दिवं गच्छता प्रोक्ताः साधवः यथा—"क्षमणीयं भदन्तैः यदसंयतेन सता मयाऽऽत्मनो वन्दनादि कारिताश्चारित्रिणो यूयं, अहं ह्यमुकदिने कालं कृत्वा दिवं गतः, युष्मदनुकम्पयात्रागतः, निस्तारिताश्च भवतां योगाः" इत्याद्युक्त्वा क्षमयित्वा स्वस्थानं गतः । ततस्ते साधवस्तद्वपुः परिष्ठाप्य चिन्तयन्ति—"अहो ! अविरतो बहुकालं वन्दितः, तदित्थमन्यत्रापि शङ्कां को जानाति ? कोऽपि संयतः कोऽप्यसंयतो देवः इति, ततोऽवन्दनमेव श्रेयः, अन्यथा ह्यसंयतवन्दनं मृषावादश्च स्यात्" । इत्थं तथाविधगुरुकर्मोदयात्ते मिथ्यापरिणतमतयः साधवोऽव्यक्तवादं प्रतिपन्नाः परस्परं न वन्दन्ते । ततः स्थविरैस्तेऽभिहिताः—"यदि परस्मिन् सर्वत्र भवतां संदेहस्तर्हि येनोक्तं देवोऽहमिति तत्रापि भवतां कथं न संदेहः ? किं स देवो वाऽदेवो वेति । अथ तेन स्वयमेव कथितमहं देव ( इति ) तथा देवरूपं प्रत्यक्षत एव दृष्टं, न तत्र संदेहः, हन्त यद्येवं तर्हि य एवं कथयन्ति वयं साधवः ( इति ) तथा साधुरूपं प्रत्यक्षत एव दृश्यते, तेषु कः साधुत्वसंदेहः ? येन परस्परं यूयं न वन्दध्वे ? । न च साधुवाक्याद्देववचनं सत्यमिति शक्यते वक्तुं, देववाक्यं क्रीडाद्यर्थमन्यथाऽपि संभाव्यते, न तु साधुवचनं, तद्विरतत्वात्तेषामिति । किंच यदि प्रत्यक्षेष्वपि यतिषु भवतां शङ्का तर्हि परोक्षेषु जीवादिषु सुतरामसौ प्राप्नोति, तथा च यतिरूपे प्राणिनि साधुत्वं भवेन्न वेति संदिग्धमेव, प्रति-

मायां तु जिनत्वं नास्ति निश्चयतः, ततः किमिति सा वन्द्या? साधुरूपे च किमिति वन्दनप्रतिषेधः ? "। तदा स वादी स्माह—असंयतदेवाधिष्ठितयतिरूपे वन्द्यमाने तद्गतासंयमरूपपापानुमतिः स्यात्, न त्वसौ प्रतिमायां। अत्रोच्यते—ननु देवताधिष्ठितप्रतिमायामप्यनुमतिलक्षणो दोषो भवेदेवेति। परः स्माह—नायं प्रतिमायां दोषः विशुद्धाध्यवसायस्य जिनबुद्ध्या नमस्यतः। यद्येवं ततो यतिबुद्ध्या यतिरूपं विशुद्धाध्यवसायस्य नमस्यतः को दोषः? येन भवन्तः परस्परं न वन्दन्ते?। अत्राह परः—यद्येवं लिङ्गमात्रधारिणं पार्श्वस्थादिकमपि यतिबुद्ध्या विशुद्धाध्यवसायस्य नमस्यतो न दोषः। तदयुक्तं, पार्श्वस्थादीनां सम्यग्निर्ग्रन्थरूपस्याभावात्, तदभावश्च आहारेण विहारेणेत्यादिनिर्ग्रन्थलिङ्गस्यानुपलम्भात्। ततः प्रत्यक्षं दोषवतः पार्श्वस्थादीन् वन्दमानस्य सावद्यानुज्ञालक्षणो दोष एव, उक्तं च—

जह वेलंवगलिंगं जाणंतस्स नमउ हवइ दोसो। निद्धंधसंऽपि नाऊण वंदमाणे धुवं दोसो ॥ १ ॥

इति। अथ प्रतिमामपि न वन्दध्वे यूयं हन्त यद्येवं शङ्काचारिणो भवन्तस्तर्हि मा देवकृता भवेयुरित्याहारोपधिशय्यादयोऽपि न ग्राह्या इति। किंचेत्थमतिशङ्कालुतायां समस्तव्यवहारोच्छेदप्रसङ्गः, यतो निश्चयकारिज्ञानं विना को जानाति? किमिदं भक्तं कृमयो वा? चीवरादौ माणिक्यं वा सर्पो वा? इत्यादौ सर्वत्र भ्रान्त्यनिवृत्तेः सर्वमभोग्यत्वं प्राप्तमिति। यथा वाऽऽर्याषाढदेवो यतिरूपधरोऽत्र दृष्टस्तथाऽन्ये कियन्तः सुरा भवद्भिर्दृष्टपूर्वाः? यदेतावन्मात्रेणापि सर्वत्र भवतामप्रत्ययः? न हि कदाचित्कथञ्चित्क्वचिदाश्चर्यकल्पे कस्मिंश्चित्तथाविधे दृष्टे सर्वत्र तथाभावाशङ्का युज्यते। तस्माद्व्यवहारनयमा-

श्रित्य युक्तं भवतामन्योऽन्यवन्दनादिकं । यतश्छद्मस्थानां सर्वा प्रवृत्तिर्व्यवहारतः स्यात्, तदुच्छेदे तीर्थस्याप्युच्छेदः प्रसज्यते । सर्वज्ञा अपि व्यवहारमार्गं नोच्छेदयन्ति । यदुक्तं महाभाष्ये श्रीजिनभद्रगणिपादैः—

संववहारोऽवि बली जमसुद्धं पि गहियं सुयविहीए । कोवेइ न सव्वन्नू वदइ य कयाइ छउमत्थं ॥ १ ॥

न कोपयति नाप्रमाणीकरोति सर्वज्ञः, न परिहरति भुङ्क्त इत्यर्थः । इत्यादियुक्तिभिः प्रज्ञापिता अपि ते आग्रहं न तत्यजुः । ततः कायोत्सर्गपूर्वं स्थविरैस्ते बहिष्कृताः । पर्यटन्तोऽन्यदा राजगृहाभिधं पुरं जग्मुः । तत्र च मौर्यवंशसंभूतो बलभद्रो नाम राजा । स च श्राद्धः । ततस्तेन ते विज्ञाता यथाऽव्यक्तवादिनो निह्नवा इह समायाता गुणशैलचैत्ये तिष्ठन्ति । स श्राद्धस्तान् प्रतिबोधयितुं निजैर्भटैर्बद्ध्वाऽऽनाययत् । ततो भूमान् सेवकानित्यादिशत्—"कटमर्दैन सर्वानप्यमून्मर्दयत" इति कृत्रिमां रुषं दर्शयन् स्माह । कटाधःस्था जना द्विपैर्मर्द्यन्त इति द्विपान् कटाँश्च राजपुरुषा आनिन्यिरे । तान् वीक्ष्य मुनयो भीता इति भूपतिमूचिरे—"हे महीपते ! श्राद्धोऽपि त्वं कथमस्मान् साधून् हंसि ?" । नृपेणोक्तं— "यूयं तस्करा हेरिका वा को वो वेत्ति ?" इति नृपेण प्रोक्ते ते प्रोचिरे—"राजन् ! नूनं वयं साधवो नान्ये" । भूपोऽवादीत्—"भवन्मते सर्वमपि वस्त्वव्यक्तं, तस्मात्को युष्मान् सत्यान् साधून् वेत्ति ? कथं च युष्माभिः कथ्यते युष्मन्मतेऽहमपि श्राद्धोऽन्यो वाऽस्मि ? तत्कथं यूयं मां श्रावकं ब्रूथ ? स्वमतहानिप्रसङ्गात् अव्यक्तवादेन परस्परमवन्दमानानां युष्माकं । अथ चेत्प्रतिपद्यते व्यवहारनयस्तदा

निर्ग्रन्थश्रमणान् युष्मानहमुत्तमान् श्रद्दधामि" । ततस्ते लज्जिता बाढं संबुद्धा नृभुजो गिरा "श्रीमज्जिनोक्तज्ञानक्रियासमन्विता वयं परस्परं यथाज्येष्ठं वन्दमानाः श्रमणाः स्मः" एवं पुनः पुनरूचुः, "हे साधुराज ! त्वया वयं चिरं भ्रान्ताः सन्मार्गं प्रापिताः" । ततो विनयावनम्रो नृपोऽवादीत्—"युष्मान् प्रतिबोधयितुं मयाऽयुक्तं विदधे, तत्सर्वं क्षन्तव्यं" ।

इत्युदीर्य बहुमानपूर्वकं, तेन भूपतिवरेण वन्दिताः ।
साधवः पुनरवाप्तबोधयः, पूर्ववज्जगति ते विजह्रिरे ॥ १ ॥
चतुर्दशोत्तरे वीरमोक्षाद्वर्षशतद्वये ।
जातस्यास्य तृतीयस्य निह्नवस्योदिता कथा ॥ १ ॥
सिद्धान्तयोगोद्वहनक्रियायां, विघ्नं च मा भूदिति चिंन्त्य शिष्यान् ।
स्वर्गात्समेत्येह क्रियां ततान, तेषां स देवः श्रुतभक्तियुक्तः ॥ २ ॥
इत्युपधानसंज्ञस्य शुद्धाचारस्य वर्णनम् ।
श्रुत्वाऽमुमाद्रियध्वं भो यथागमं तपस्विनः ॥ ३ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तावष्टादशस्तम्भे द्विषष्ठ्यधिकद्विशततमं २६२ व्याख्यानम् ॥

---

१ अत्र ल्यप् चिन्त्यः ।

## त्रिषष्ट्यधिकद्विशततमं २६३ व्याख्यानम् ॥

अथानिह्नवाख्यपञ्चमाचारमाह—

श्रुताक्षरप्रदातृणां गुरूणां च श्रुतादीनाम् । अनिह्नवोऽयमाचारः पञ्चमः श्रीजिनैः स्तुतः ॥ १ ॥

स्पष्टः । नवरं गुरूणामनिह्नवो नापलपनं यस्य सकाशेऽधीतं स एवाप्रसिद्धोऽपि जातिश्रुतादिहीनोऽपि गुरुतया वाच्यः, न तु स्वस्य गौरवं पन्थकशिष्यवत्कर्तव्यं, गुरुबहुमानं कार्यं, न तु तद्दोषग्रहणं, अजस्रं गुरुतः शङ्कनीयं, न तु निःशङ्कत्वं विधेयं । मातङ्गस्त्रीस्पर्शनचिन्तने गुरुभिस्तद्वृत्तान्ते ज्ञाते श्रीआमनृपः स्वचेतसीति दध्यौ—"अहो ! मदयोग्यत्वं गुरुभिर्ज्ञातं, इदानीं मुखं कथं दर्शयिष्येऽहं ?"। ततस्तत्पापत्यागार्थं तप्तलोहपुत्रिकास्पर्शकरणोद्यतं तं नृपं श्रीगुरुः श्लोकान् प्रेष्यावोधयत् । अयं दृष्टान्तः प्राग्विस्तरेण लिखितोऽस्ति । अथवा कुमारपालः शुष्कघृतपूरचर्वणसमये मांसभक्षणस्वादं सस्मार, क्षणेन प्राप्तोपयोगो दध्यौ—"अहो ! एतदयोग्यचिन्तनं यदा गुरुर्ज्ञास्यति तदा मज्जीवितं धिक्" । ततः स्वदंष्ट्रापातनोद्यतो नृपः सचिवैः श्राद्धैः शिक्षितः । ततो गुरुदत्तप्रायश्चित्तपदे घृतपूरवर्णाकारं चतुर्दशाधिकैकसहस्रमितस्तम्भैर्युतं प्रासादं नृपोऽकारयत् । इत्यादिकं श्रुत्वा गुर्वाद्यपलापस्य महादोषत्वं ज्ञेयं । लोकेऽप्युक्तं—

एकाक्षरप्रदातारं यो गुरुं नाभिमन्यते । श्वानयोनिशतं गत्वा चाण्डालेष्वभिजायते ॥ १ ॥

तथा श्रुतादीनामपलापो न कार्यः यत्पार्श्वे यावच्छ्रुतमधीतं तावदेव वक्तव्यं, न त्वधिकमूनं वा, मृषा-

त्पापाचित्तकालुष्यज्ञानातिचाराद्यापत्तेः। कस्यचिद्गुरुश्रुतनिह्नवे सति सर्वगुणहानी रोहगुप्तस्येव स्यात्, तथाहि—अन्तरिकापुर्या उपवने श्रीगुप्ताचार्यः सगच्छः स्थितः। तस्यां पुर्यां बलश्री राजाऽस्ति। सुरीणां रोहगुप्तो नाम शिष्योऽन्यत्र ग्रामे स्थित आसीत्। ततोऽसौ गुरुवन्दनार्थं तत्र पुर्यामायातः। तत्र चैकः परिव्राजको लोहपट्टकेनोदरं बद्ध्वा जम्बूवृक्षशाखया च हस्तगृहीतया नगर्यां भ्राम्यति, किमेतदिति लोकेन पृष्टो वदति—"मदीयोदरमतिविज्ञानेन पूरितत्वात् स्फुटतीति लोहपट्टेन बद्धं, जम्बूद्वीपे मम प्रतिवादी नास्तीत्यस्यार्थस्य सूचनार्थं जम्बूवृक्षशाखा हस्ते गृहीता"। ततस्तेन पोट्टशालेन सर्वत्र पुर्यां "शून्याः सर्वेऽपि परप्रवादाः, नास्ति कश्चिन्मम प्रतिवादी" इत्युद्घोषणापूर्वकं पटहो दापितः। तत्पटहकः पुरीं प्रविशता रोहगुप्तेन दृष्टः, उद्घोषणा च श्रुता, ततः "अहं तेन सार्धं वादं दास्यामि" इत्यभिधाय पटहं निषिध्य गुरुसमीपे एत्यालोचनां च कृत्वा कथितोऽयं व्यतिकरस्तेषां। सूरिणोक्तं—"न युक्तं त्वया कृतं, यतः स भूरिविद्याढ्योऽस्ति, स च वादे पराभूतो मन्त्रविद्याभिः प्रतिवादिन उपद्रवति, यतः—

वृश्चिकान् पन्नगानाखून्मृगशूकरवायसान्। शकुनिकाश्च कुरुते स हि विद्याभिरुद्भटान्॥ १॥"

ततो रोहगुप्तेनोक्तं—"यद्येवं तत्किमिदानीं नष्टुं क्वापि शक्यते? निषिद्धस्तत्पटहकः, यद्भाव्यं तद्भवतु"। ततः सूरिभिः प्रोक्तं—यद्येवं तर्हि पाठसिद्धा एवैताः सप्त तत्प्रतिपक्षविद्या गृहाण"। काः पुनस्ताः? इत्याह—

केकिनो नकुला उंतुव्याघ्रसिंहाश्च कौशिकाः । श्येनाश्च याभिर्जायन्ते तद्विद्याबाधकाः क्रमात् ॥ १ ॥

ततो रजोहरणं चाभिमन्त्र्य सूरिभिस्तस्य दत्तं, अभिहितं च—"यद्यन्यदपि किञ्चित्तत्प्रणीतं क्षुद्रविद्याकृतमुपसर्गजातमुपतिष्ठते तदा तन्निवारणार्थमेतन्मस्तकोपरि भ्रमणीयं, तत इन्द्राणामप्यजय्यो भविष्यसि" । ततः स गतो राजसभां, तत्र तेन "किमेष द्रमकपरिव्राजको जानाति ? करोत्वयमेव यदृच्छया पूर्वपक्षं, येनाहं निराकरोमि" इत्युक्तं । ततस्तेन चिन्तितं—"निपुणाः खल्वमी भवन्ति, तदमीषामेव सम्मतं पक्षं गृह्णामि येन निराकर्तुं न शक्नोति" इति विचिन्त्य तेनेदमभ्यधायि—"इह जीवाश्चाजीवाश्चेति द्वावेव राशी, तथैवोपलभ्यमानत्वात् धर्माधर्मद्रव्यभावराशिद्वयवदित्यादि" । ततो रोहगुप्तेन तद्बुद्धिपरिभवनार्थं स्वसंमतोऽप्ययं पक्षो निराकृतः, कथमिति चेदुच्यते—असिद्धोऽयं हेतुरन्यथोपलम्भात् जीवा अजीवा नोजीवाश्चेति राशित्रयदर्शनात् । तत्र जीवा नारकतिर्यगादयः, अजीवास्तु परमाणुघटादयः, नोजीवास्तु गृहकोकिलापुच्छादयः, ततो जीवाजीवनोजीवरूपास्त्रयो राशयस्तथैवोपलभ्यमानत्वादधममध्यमोत्तमराशित्रयवदित्यादिभिर्युक्तिभिः प्रश्नव्याकरणं कृत्वा जितः परिव्राजकस्तेन । ततोऽसौ क्रुद्धो वृश्चिकविद्यया रोहविनाशार्थं वृश्चिकान्मुञ्चति । रोहगुप्तस्तत्प्रतिपक्षभूतान्मायूरविद्यया मयूरान्मुञ्चति । तैश्च वृश्चिकेषु हतेषु स सर्पान्मुञ्चति । रोहस्तु नकुलान् विसृजति । एवं मूषकान् प्रति बिडालान्, मृगान् प्रति व्याघ्रान्, शूकरान् प्रति सिंहान्, काकान् प्रति घूकान् मुञ्चति । ततः संन्यासी

अतिदुष्टाः शकुनिका अमुञ्चत्, ताश्च प्रति साधुः श्येनानमुञ्चत् । ततः सोऽतिरुषा रासभीं मुमोच, तामायान्तीं साधुर्वीक्ष्य तस्याः परितस्तद्रजोहरणं भ्रामं भ्रामं तेन तां जघान, तेन निष्प्रभावा सा परिव्राजकोपरि मूत्रपुरीषोत्सर्गं कृत्वा गता । ततः सभापतिना सभ्यैः समस्तलोकेन च निन्द्यमानः पुरीतो निर्वासितः परिव्राट् । ततः साधुर्गुरुपार्श्वं एत्य सर्वं वृत्तान्तमाह । तदा गुरुः स्माह—"सुष्ठु कृतं त्वया, यदसौ जितः, किंतु तत उत्तिष्ठता त्वया किमित्येतन्नाभिहितं ? यद्वादिनं विजेतुं राशित्रितयं स्थापितं मया, परं जगत्त्रये वास्तवं राशिद्वितयमेवास्ति । इदानीमपि तत्र गत्वा यथातथमाख्याहि" । एवं बहुशोऽनेकधा गुरुणा भण्यमानः स रोहगुप्तः प्रत्युत्तरयति—"हे सूरे ! किमयमपसिद्धान्तः ? यदि हि नोजीवलक्षणतृतीयराश्यभ्युपगमे कोऽपि दोषः स्यात्तदा स्यादयमपसिद्धान्तः नास्ति च दोषः, कुतः ? यदि नाम गृहकोकिलापुच्छादिजीवदेशो नोजीवो भवेत्तर्हि को दोषः स्यात् ? न कमप्यत्र दोषं पश्यामः । सूत्रे धर्मास्तिकायादीनां दशविधत्वभणनेन तद्देशस्य पृथग्वस्तुत्वमुक्तमेव, अन्यथा दशविधत्वानुपपत्तेः । तच्च गृहकोकिलाभिन्नपुच्छनरहस्तादिकं तज्जीवभिन्नत्वेन पृथग्भूतस्फुरणादिना चाजीवविलक्षणत्वाज्जीवाजीवात्पृथग्भूतं सुतरां वस्तु भवति" । ततो गुरुस्तेन सह राजसभायामेत्य सत्यमार्गं प्रोच्य शिष्यनिगदितप्रश्नानां यथागमं प्रतिविधानमाह—सूत्रे जीवाजीवौ द्वावेव राशी प्रोक्तौ । न च धर्मास्तिकायादीनां देशः प्रदेशो वा तेभ्यो भिन्नः कोऽप्यस्ति, विवक्षामात्रेणैव तस्य भिन्नवस्तुत्वकल्पनात्, एवं पुच्छादिकमपि गृहकोकिलादिजीवेभ्योऽभिन्नमेव तत्संबद्धत्वात्, अतो जीव एव तत्, न तु नोजीवः, यत उक्तं पञ्च-

माङ्गे—"अह जंते ! कुम्मे कुम्मावलिया गोहा गोहावलिया गोणे गोणावलिया मणुस्से महिस्से एए णं डुहा वा तिहा वा संखेज्जा वा छिन्नाणंते अंतरा ते वि णंतेहिं जीवपएसेहिं फूमा ? हंता फूमा। पुरिसेणं जंते अंतरे हत्थेण वा पाएण वा० कठेण वा० तिरकेण सत्थजाएण वा अछिंदमाणे वा० अगणिकाएणं समोरूहमाणे तेसिं जीवपएसाणं किंचि अवाबाहं वा विबाहं वा उप्पाएइ० ? । नो इणठे समठे, नो खलु तत्थ कमइ त्ति" । यदि चैवं सूत्रे जीवप्रदेशानां तदन्तराले संबन्धोऽजिहितस्तर्हि तदन्तराले ते जीवप्रदेशाः किमिति नोपलज्यन्ते ? गुरुः प्राह—अरूपित्वात्, यथा प्रदीपरश्मयो जूकुड्यव ( क ) रण्डकादिमूर्त्तवस्तुगता ग्राह्याः सन्ति, न तु केवल आकाशे प्रसृताः तथैव जीवो लक्ष्यते जाषणोच्छ्वासनिःश्वासधावनवल्गनस्फुरणादीनि देह एव लक्षणानि गृह्यन्ते, न तु तदन्तराले सूक्ष्मकार्मणदेहयुक्ता अपि प्रदेशा दृश्यन्ते । अथवा हे शिष्य ! नोजीवः स देशः किं जीवाद्भिन्नोऽजिन्नो वा ? जिन्नश्चेत्तदा तेन जीवेन सह पुनस्तत्सङ्गमः कथं ? जिन्नो हि देशोऽन्यत्रापि परमाणुवत्संमिलेत्, तस्य देशस्य चान्येन जीवेन सह सङ्गमे तयोः कर्मसङ्करात्सुखदुःखादिसाङ्कर्यं स्यात् । अथाजिन्नश्चेत्तदा तु जीवान्तर्गत एव स वाच्यः । तदा राशिद्वयमेव जातं, न तु त्रयं । अथाजिन्नोऽप्ययं देशः स्थानजेदविवक्षया नोजीवः कथ्यते कुम्जगृहाकाशवदिति तर्हि राशिर्नोअजीवनामापि प्रतिपद्यतां, व्योमादीनामजीवानामप्येवं देशसंजवात्, तथात्वे च राशिचतुष्कं जवेत् । यथा लक्षणैक्यान्नोजीवोऽपि जीवान्न जिद्यते तथा नोअजीवोऽपि लक्षणैक्यादजीवान्न जिद्यते । एवं तयोः षण्मासीं यावदन्वहं विवादोऽजूत् । अथ जूपो

गुरुं प्रोचे—"स्वामिन् ! वादः समाप्यतां, मम राज्यकार्यमनया व्यग्रतया सीदति"। ततः सूरिः प्राह—"इयत्कालं मयाऽयं लीलया धृतः, अथास्य निग्रहं प्रातरवश्यं करिष्ये"। ततो द्वितीयदिने गुरुरिति नृपं स्माह—"इह पृथिव्यां यत्किमपि विद्यमानं वस्तु तत्सर्वमपि कुत्रिकापणेऽस्तीति सर्वजनानां भवतां च प्रतीतमेव। तत्र कूनां स्वर्गमर्त्यपातालभूमीनां त्रिकं कुत्रिकं तन्नाम्ना हट्टं, अत्र हट्टे वणिजः कस्यापि मन्त्राद्याराधितः सिद्धो व्यन्तरसुरः क्रायकजनसमीहितं सर्वमपि वस्तु कुतोऽप्यानीय संपादयति, तन्मूल्यं द्रव्यं वणिगेव गृह्णाति। अन्ये तु वदन्ति—वणिग्गृहीतं सुराधिष्ठितमेवापणं भवति, ततो मूल्यद्रव्यं सुर एव स्वीकरोति"। अथ गुरुः सपरिकरस्तत्र गत्वा रोहगुप्तमापृच्छ्य कुत्रिकापणव्यन्तरसुरं जीवं देहीति याचितवान्। सुरो जीवं शुकसारिकादिकं दत्तवान्, अजीवं देहीति याचितस्त्वजीवमुपलखण्डादिकं दत्त्वा कृतार्थो जायते। नोजीवं याचितः पुनरप्यजीवमुपलखण्डादिकमेव ददाति, नोशब्दस्य सर्वनिषेधपरत्वात्। चरमे तु नोअजीवलक्षणे विकल्पे जीवमेव शुकादिकं ददाति, द्वयोर्नञोः प्रकृतार्थगमकत्वान्नोशब्दस्य च सर्वनिषेधकत्वादिति। न तु स कुत्रिकापणदेवो नोजीवं जीवखण्डरूपं क्वापि विकल्पे ददातीति जीवाजीवौ द्वावेव राशी, न तु तृतीयः, असत्त्वात्, खरविषाणवदिति। ततः सूरिः शिष्यमूचे—"कदाग्रहं मुञ्च, विश्वे नोजीवश्चेदस्ति तर्हि सुरः कथं नादात् ?"। इत्यादिभिश्चतुश्चत्वारिंशदधिकशतप्रश्नैः सूरिस्तं द्रुतं नृपसाक्षिकं निजग्राह। इह द्रव्यगुणकर्मसामान्यविशेषसमवायलक्षणाः षण्मूलपदार्थास्तेन षडुलूकेन कल्पिताः। तत्र द्रव्यं पञ्च महा-

भूतानि कालो दिगात्मा मनश्चेति नव द्रव्याणि । गुणा रूपरससङ्ख्याबुद्धिद्वेषादयः सप्तदश । कर्म पञ्चविधं उत्क्षेपणावक्षेपणादिकं । सामान्यं त्रिविधं । विशेषसमवायौ च । एवं सर्वे षट्त्रिंशज्जाताः । एते सर्वेऽपि प्रकृत्या १ अकारेण २ नोकारेण ३ उभयनिषेधत ४ श्चैतैश्चतुर्भिर्भेदैर्गुणिताश्चतुश्चत्वारिंशदधिकं शतं भवति । तत्पृष्टः कुत्रिकापणदेवः पृथ्वीं देहीति लेष्टुं ददाति प्रकृत्या जातं उपपदमुक्तं शुद्धं च १ । अपृथ्वीं देहीति देवो जलादिकं दत्ते २ । नोपृथ्वीं याचितो नोशब्दस्य देशनिषेधे लेष्टोरेव देशं तत्खण्डं दत्ते, सर्वथा निषेधार्थे नोशब्दे नोपृथ्वीं जलादिकमेव दत्ते ३ । नोअपृथ्वीं देहीत्युक्ते देवः पृथ्वीं दत्ते ४ आद्यद्व्यक्षरार्थं विभाव्य । एवं जलादिष्वपि चत्वारो भेदाः सर्वत्र यथायोगं योज्याः । निश्चयनयमते तु द्वावेव पदार्थाविति स्थितं । इत्यादिना बोधितोऽपि यदि स्वकदाग्रहं नामुञ्चत्तदा गुरुणा खेलमह्मस्स तन्मस्तके न्यस्य गणाद्बहिष्कृतः । नृपस्तच्छाठ्यदर्शनात्क्रुद्धः पुर्यामित्युद्घोषणामकारयत्—"गुरुप्रत्यनीकं रोहगुप्तं ये मान्यं करिष्यन्ति ते राजद्रोहिणो भाविनः" । ततः स वैशेषिकशास्त्रं स्वयं कदर्थयामासेति ।

चतुश्चत्वारिंशदाढ्यैर्वर्षाणां पञ्चभिः शतैः । श्रीवीरमुक्तेर्जातस्य ज्ञातं षष्ठस्य चोदितम् ॥ १ ॥

षड्द्रव्यपूर्णं जिनदृष्टविश्वं, चोत्थापयन् द्रव्यगुणादिषट्कम् ।
तथ्यं च तन्वँस्त्रिकराशिपक्षं, वैशेषिकः षष्ठमनिह्नवोऽभूत् ॥ २ ॥

१ मकाराधिक्यं चिन्त्यम् ।

षड्भुको देवगुरुश्रुतादि–नैह्नव्यभावादगमच्च हानिम् ।
आचारतः पञ्चमतः श्रुतार्थि–शिष्यैर्न भ्रष्टैर्भवितव्यमार्यैः ॥ ३ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तावष्टादश-
स्तम्भे त्रिषष्ट्यधिकद्विशततमं २६३ व्याख्यानम् ॥

## चतुःषष्ट्यधिकद्विशततमं २६४ व्याख्यानम् ॥

अथ व्यञ्जनानिह्नवाह्वषष्ठश्रुताचारमाह—

नाध्येतव्यं श्रुतं चोक्तवर्णैर्न्यूनाधिकादिभिः ।
व्यञ्जनानिह्नवाह्वोऽयमाचारः षष्ठमः स्तुतः ( षष्ठ ईरितः ) ॥ १ ॥
व्यञ्जनभेदतोऽर्थानां क्रियाणां भेदो जायते ।
तेनाभावश्च मुक्तेः स्यात् के के दोषा भवन्ति न ॥ २ ॥

स्पष्टौ । अत्रार्थ इयं भावना, तथाहि—व्यञ्जनान्यक्षराणि तेषां भेदोऽन्यथाकरणं तस्मादनेके दोषा भवन्ति । यतः श्रीप्रतिक्रमणावश्यके श्रुताशातनाः चतुर्दशविधाः प्रोक्ताः—“जं वाइद्धं वच्चमेलियं०” इत्यादि, व्याविद्धं विपर्यस्तरत्नमालावदनेन प्रकारेण याऽऽशातना तया योऽतिचारः कृतस्तस्य मिथ्याकु-

ष्कृतमिति सर्वत्र योज्यं १। आम्रेडितं द्विस्त्रिरुक्तं कोलिकपायसवत् २। हीनाक्षरमक्षरन्यूनं ३। अत्यक्षरमधिकाक्षरं ४। पदहीनं पदेनैवोनं ५। विनयहीनमकृतोचितविनयं ६। घोषहीनमुदात्तादिघोषरहितं ७ योगरहितं ८। सुष्ठु दत्तं गुरुणा दुष्ठु प्रतीच्छितं कलुषितान्तरात्मनेति १०। अकाले कृतः स्वाध्यायः ११। काले न कृतः स्वाध्यायः १२। अस्वाध्यायिके स्वाध्यायिकं १३। स्वाध्यायिकेऽस्वाध्यायिकमिति १४। तत्र व्यञ्जनान्यथाकरणं प्राकृतस्य सूत्रस्य संस्कृतीकरणं यथा संयोगाद्विप्रमुक्तस्य १। पदानां पश्चानुपूर्व्या व्युत्क्रमेण वा पठनं यथा विप्पमुक्कस्स संजोगा २। तथा पदानां सनामभिः परावर्तनं वा यथा संबंधा विवज्जिअस्स ३। वर्णान्तरकरणं वा यथा संजोगा इत्यत्र सकारस्य स्थाने यथेच्छं पठति ४। वर्णवैपरीत्यकरणं वा यथा संजोगा वि० इत्यस्य स्थाने वियोगादि भणति ५। एवमर्थस्य व्यञ्जनार्थोभयस्य चान्यथाकरणे न्यूनाधिकत्वे च दोषा विज्ञाव्याः। तत्र व्यञ्जनान्यथाकरणे चैत्यवन्दनादिसूत्राणि संस्कृतभाषया करोमीत्युक्त्वा पाराञ्चितप्रायश्चित्तं प्राप्तः श्रीसिद्धसेनदिवाकरः, तस्य ज्ञातं प्रागत्रैव निगदितमिति। तथा व्यञ्जनाधिक्ये ज्ञातमिदम्—

एकदा पत्तने कुमारनृपः सामन्तमन्त्रिसार्थवाहादिपरिवृतः श्रीजयसिंहदेववृद्धमन्त्रिणः पप्रच्छ यत् "अहं श्रीसिद्धनृपतेर्हीनः समानोऽधिको वा ?" मन्त्रिभिरछलप्रार्थनापूर्वं सिद्धराजनृपस्याष्टनवतिर्गुणा द्वौ च दोषौ, स्वामिनस्तु द्वौ गुणौ तत्सङ्ख्या एव च दोषाः। इति मन्त्रिवाक्यादनु दोषमय आत्मनि विरागं दधानो यावच्छुरिकायां चक्षुः क्षिपति तावत्तदाशयवेदिभिस्तैरेवं विज्ञप्तः—"स्वामिन् ! अस्माभि-

बहिर्वृत्त्याऽविचार्यैवमुक्तं, परं तत्त्ववृत्त्या तु देव एवाधिकः"। राजाह—"कथं ?"। मन्त्रिभिरुक्तं—"सिद्धनृपतेरष्टनवतिर्गुणाः सङ्ग्रामासुभटतास्त्रीलम्पटतादोषाभ्यां तिरोहिताः। कार्पण्यादयो देवदोषास्तु समरशूरतापरनारीसहोदरतागुणाभ्यामपह्नुता इति देव एव सर्वगुणशिरोमणिसत्त्वपरस्त्रीबान्धवतादिगुणाधारः"। इति मन्त्रिवचःश्रवणसंतुष्टान्तरात्मा जातो नृपः। तदैकेन विदुषा पठितः श्लोको भूपमुद्दिश्य, यथा—

पर्जन्य इव भूतानामाधारः पृथिवीपतिः। विकलेऽपि हि पर्जन्ये जीव्यते न तु भूपतौ ॥ १ ॥

वाक्यमिदमाकर्ण्य "अहो ! राज्ञे मेघोपम्या सुष्ठु दत्ता" इति कुमारभूपेन सर्वव्याकरणेषु अप्रशस्तप्रयोगेऽभिहिते सर्वेष्वपि सामाजिकेषु न्युञ्छनानि कुर्वाणेषु मन्त्रिकपर्दी महाविद्वत्त्वाल्लज्जयाऽधोमुखो जातः। राजा तं तथा ज्ञात्वा पृष्टवान्। तेन विज्ञप्तं—"देव ! उपम्याशब्दः शास्त्रविरुद्धः, तस्मिन् प्रयुक्ते श्रीदेवेनास्माकमधोमुखत्वमेव युक्तं, वरमराजकं भुवनं, न तु मूर्खो राजेति, प्रतीपभूपालमण्डलेऽप्यपकीर्तिः प्रसरति, अतोऽस्मिन्नर्थे उपमानं औपम्यं उपमा इत्याद्याः शब्दाः शुद्धाः" इति तद्वचनप्रेरितेन शब्दव्युत्पत्तिहेतवे पञ्चाशद्वर्षदेश्येन राज्ञा श्रीदेवगुरुपादान् पर्युपास्य तत्प्रसादासादितसिद्धसारस्वतमन्त्राराधनसारस्वतचूर्णसेवनादिभिः सुप्रसन्नश्रीभारतीप्रसादाद्वृत्तित्रयकाव्यानि द्व्याश्रयादीनि एकेन वर्षेणावगम्य श्रीचतुर्विंशतिजिनवर्णनद्वात्रिंशिका कृता, तस्या आद्यं काव्यमिदम्—

यत्राखिलश्रीश्रितपादपद्मं, युगादिदेवं स्मरता नवे ( रे ) न ।
सिद्धिर्मयाप्ता जिन तं भवन्तं, युगादिदेवं प्रणतोऽस्मि नित्यम् ॥ १ ॥

ततः शास्त्रविचारचतुर्मुख इति विरुदमर्जितमिति । अथवा व्यञ्जनाधिक्येऽन्यज्ज्ञातमिदं—पाटलिपुत्रपत्तने नवमं नन्दनृपं प्रतिज्ञापूर्वकमुत्थाप्य चाणक्येन मयूरपोषकग्रामे महत्तरदौहित्रश्चन्द्रगुप्तो राज्ये निवेशितः, तस्याङ्गभूर्बिन्दुसारभूपः, तत्सूनुः पुनरशोकश्रीनृपः । तेन स्वतनयाय कुणालाह्वयाय बाल्येऽपि भुक्त्यर्थमवन्तिपुरं दत्तं, यतोऽत्र स्थितस्यापरमातॄणामुपद्रवो भावीति । ततस्तत्र स्थितः स बालो राजनियुक्तानुजीविभिः रक्ष्यमाणो जीवितवत् । क्रमेण स साग्राष्टहायनोऽभूत् । ततो नृपेण स्वान्नियोगवचनैस्तद्वयो विद्याग्रहणयोग्यं मत्वा कुमाराय स्वयमिदं लेखे लिखितं—"हे कुमार ! त्वयाऽधीतव्यमिति मदाज्ञाऽचिरेण विधेया" इति कागलं लिपीकृत्य यदा नृपः किञ्चित्कार्यव्यग्रोऽभूत्तदाऽपरमाता तत्रागत्य तल्लेखं परिवाच्य दध्यौ—"कुणालपुत्रे सर्वाङ्गशुद्धे सति मत्पुत्राय राज्यं न दास्यति, अतः किञ्चित् पत्रमध्ये विरूपं लिखामि" । ततः अधीतव्यमित्यत्राद्याक्षरे निष्ठीवनार्द्रीकृतया नेत्राञ्जनशलाकया नेत्रात्कज्जलमाकृष्य बिन्दुकं ददौ, अनुस्वारो मस्तके कृतः तदा अंधीतव्यमिति जातं, अहो मात्राधिक्ये केवलमहितार्थो जातः । अथाशोकोऽपि प्रमादेनाननुवाचितमेव हि तं लेखं मुद्रयामास, उज्जयिन्यां प्राहिणोच्च । कुमारोऽपि तं लेखं पितृनामाङ्कमुद्रालङ्कृतमस्तकं द्वाभ्यां पाणिभ्यामाददे, मूर्ध्नि च न्यधात् । तदनु तल्लेखं वाचयित्वा भृशं विषण्ण उदश्रुनेत्रश्च लेखार्थं वक्तुमक्षमोऽभूत् । अन्येऽपि तं

वाचयित्वा विषण्णाः प्रोचुः—"हे कुमार ! किं खेदमुद्वहसि ? पुनरस्य निर्णयं करिष्यामः" । स प्राह—"मौर्यान्वये कोऽपि गुर्वाज्ञालङ्घकोऽद्यापि न जातः, यदि प्रथममेवाज्ञामहं लोप्स्यामि तदा मत्कृत एवाध्वाऽन्येषामपि भविष्यति" । ततः स नेत्रे स्वयं तप्तशलाकयाऽनक्ति स्म । नृपस्तद्व्यतिकरमवगम्य दध्यौ—"धिक् कूटलेखकं स्वात्मानं" इत्युच्चकैर्निनिन्द "धिङ्मां सम्यक् पुनरनालोक्य लेखप्रेषकं" । ततः परंपरया तदपरमातृनिष्पादितं कार्यं विज्ञाय स्त्रीजातिदुष्टत्वं निर्धार्य दध्यौ—"अधुनाऽयं पुत्रोऽन्धत्वाद्राज्यं मण्डलित्वं वा न ह्यर्हति, अहो ! मयि यस्येदृशी भक्तिस्तस्येदृशमागतं" । ततः कुणालायाशोकश्रीर्महर्द्धिकमेकं ग्रामं ददौ, तदपरमातुः पुत्रायोज्जयिनीं पुनर्ददौ । कुणालस्य क्रमेण परेद्यवि शरच्छ्रियां पत्न्यां सूनुः संपूर्णलक्षणो जातः । तत्पुत्रे महति संजाते कुणालो राज्यलिप्सया पाटलिपुत्रमागात् । ततो गीतविनोदेन स्वेच्छया स पुरे भ्रमन् सर्वलोकानां प्रियो बभूव । तत्पुत्रो यत्र यत्र विशन् जगौ तत्र तत्र गीताकृष्टाः पौराः कुरङ्गवद्ययुः । लोकमुखाज्ज्ञान्धर्वकलाकुशलं तं नरं श्रुत्वा गीतश्रवणोत्सुको नृपस्तमन्धं नरमाहूय जवनिकागुप्तं कृत्वा गातुं समादिशत् । सोऽपि यथास्थानमन्द्रमध्यतारैः सप्तभिः स्वरैः पद्यप्रबन्धमीदृशं रागं पोषयन् जगौ—

प्रपौत्रश्चन्द्रगुप्तस्य बिन्दुसारस्य नप्तृकः । एषोऽशोकश्रियः पुत्रः अन्धो मार्गति काकिणीम् ॥ १ ॥

पद्यप्रबन्धमन्धेन गीयमानं नृपः श्रुत्वा पप्रच्छ—"किंनामा त्वं हे गायक ! आख्याहि" ।

स उवाच तवैवास्मि कुणालो नाम नन्दनः । त्वदाज्ञालेखमीक्षित्वा योऽन्धः स्वयमजायत ॥ १ ॥

ततो जवनिकां जवादपसार्य नरेश्वरः स्वसूनुमुपलक्ष्योदश्रुः परिषस्वजे। राजोचे—"वत्स! किं तुभ्यं ददामि?"। स स्माह—"हे देव! अहं काकिणीं याचे"। तदा नृपो मन्त्रिणं पप्रच्छ—"एष किं याचते?"। मन्त्र्याह—"स्वामिन्! राजपुत्राणां काकिणीशब्देन राज्यमुच्यते"। राजा प्रोवाच—"हे वत्स! किं राज्येन करिष्यसि? दैवादपहृतचक्षुषस्तव तन्नार्हं"। ततः स नृपं व्यजिज्ञपत्—"तात! मम सुतो जातोऽस्ति, स राज्येऽभिषिच्यतां"। अशोकश्रीः पप्रच्छ—"कदा तव सुत उत्पेदे?"। स स्माह—"स्वामिन्! सम्प्रत्येव जातः"। ततो नृपस्तमर्भकं समानाययत्। तं पौत्रमुत्सङ्गे संस्थाप्य सम्प्रतिरिति तस्य नामाकरोत्, ततो निजे राज्ये न्यवीविशत्। ततः स सम्प्रतिर्वयसा विक्रमेण श्रिया च वृद्धिमासादयामास। तत आजन्म परमार्हतः स दक्षिणभरतार्धं साधयामास। इति ज्ञातं श्रुत्वा श्रीसिद्धान्तवाक्ये वर्णे च कदाचिदपि न व्यञ्जनाधिकत्वं विधेयं इति गुरुमन्त्रः। अथ कदाचिद्यथार्थकरणार्थं पादलिप्तसूरिवर्णितदृष्टान्ततो मात्राधिक्यकरणं श्रेयस्करं जातं, तच्चरित्रं पूर्वं लिखितमस्ति ततोऽत्र न प्रतन्यते।

अथ व्यञ्जनानां न्यूनत्वकरणेन महादोषः प्रभवति, विद्याधर इव चिन्तितफलं न प्राप्नोति, तथाहि—राजगृहे नगरे श्रीवीरवन्दनार्थं समागच्छता श्रेणिकेन मार्गे एको विद्याधरो व्योमत उत्पत्योत्पत्य पतन् दृष्टः। विस्मयं गतेन भूपेन श्रीजिनो विज्ञप्तः—"स्वामिन्! किमित्ययं खेचरो विधुरितपक्षः पतत्रीव व्योम्नि किञ्चिदुत्प्लुत्योत्प्लुत्य पुनर्भूमौ पतति?"। भगवतोक्तं—"विद्याक्षरविस्मरणात्"। तदन्वभयकुमारो विद्याभृदभ्यर्णं एत्य तं स्माह—"भो विद्याधर! यदि मां समानविद्यासिद्धिकं करोषि तदा त्वद्विद्या-

क्षरमुपलभ्य कथयामि"। प्रतिपन्नं च तथा तेन। अन्वयस्य चैकस्मादपि पदादनेकपदान्यूहनशक्तिरस्ति पदानुसारिप्रज्ञत्वादित्यन्वयेन तद्विस्मृतविद्याक्षराणि पूरितानि। तानि यथास्थितान्येव विज्ञाय हृष्टः स विद्याधरो विद्यासाधनोपायमुक्त्वा मैत्रीं दृढां विस्तार्य स्वस्थलं प्रापेति दृष्टान्तं श्रुत्वा न्यूनाक्षरपठनं यथार्थफलदं न स्यादिति।

अथवा सस्य स्थाने शकारपठनेन पाण्डित्यं न लभ्यते। यथैको विद्वान् काशीदेशत एकत्र ग्रामे समेतः। तत्र लोकमुखेभ्यस्तद्ग्रामिकविप्रवर्णनं श्रुत्वा स तद्गृहं गतो वादलिप्सया, सोऽप्याडम्बरं कृत्वा लोकमध्ये स्वपाण्डित्यं दर्शयति। तदा नवीनं विप्रं दृष्ट्वा स ग्रामिकविप्रो महता शब्देनोवाच—"भो विप्र! किमर्थमत्रागमनप्रयोजनं? यदि कोऽपि तव शंदेहोऽस्ति तर्हि पृच्छ"। तदा स महाविद्वान् दध्यौ—"अहो! अयं पण्डितात्मासः शब्दशुद्धिं विना पङ्कवदारटति, अतः शिक्षां ददामि।

शंदेहोऽस्ति त्वया प्रोक्ते संदेहा बहवोऽभवन्। ते सर्वे विलयं जग्मुः किमन्यद्वच्मि रे जड ॥ १ ॥

इति श्रुत्वा कण्ठोष्ठादिस्वस्थानविप्रमुक्तं व्यञ्जनं नोच्चार्यमिति स्थितम्।

न्यूनाधिकव्यञ्जनसूत्रपाठकः, अर्थक्रियाभेदमवाप्नुयाद्ध्रुवम्।
तस्मादवश्यं गुरुपार्श्वसेवनैः, सिद्धान्तपाठोच्चरणं सुशिक्षयेत् ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तावष्टादश-
स्तम्भे चतुःषष्ठ्यधिकद्विशततमं २६४ व्याख्यानम् ॥

## पञ्चषष्ठ्यधिकद्विशततमं २६५ व्याख्यानम् ॥

अथार्थानिह्नवाख्यसप्तमाचारमाह—

शब्दार्थानामलोपाख्य आचारः सप्तमः शुभः । तल्लोपेन महत्पापं पुण्यं वर्यं तदाश्रयात् ॥ १ ॥

स्पष्टः । नवरं शब्दार्थानामनिह्नवार्थे हेमसूरिसंबन्धो ज्ञेयः, तदाचारलोपे च महत्पापं वचनागोचरं । अत्रार्थे मातृकापाठकभरटकज्ञातमिति । तदाश्रयस्तदाचारसेवनं तस्माद्वर्यं श्रेष्ठं पुण्यं स्यात् । अत्रार्थे भरटकसंबन्ध एव भाव्यः इति । हेमाचार्यसंबन्धस्त्वयं—

अणहिल्लपुरपत्तने श्रीसिद्धराजजयसिंहे राज्यं कुर्वत्यन्यदा कलिकालसर्वज्ञैः श्रीहेमाचार्यैर्वाच्यमानं पाण्डवचरित्रमाकर्ण्य दुर्मुखैर्विज्ञप्तो नृपः—"हे देव ! पञ्चापि पाण्डवा हिमालये सिद्धिमगुरिति वेदव्यासवाणीमसौ हेमाचार्यः शत्रुञ्जये सिद्धास्त इति कथनेन दूषयतीत्यसमञ्जसं"। ततो राज्ञाऽऽहूताः श्रीहेमसूरयो नृपसभां प्रापुः । "हे भगवन् ! अधुना वणिजां पुरः किं व्याख्यायते ?" इति पृष्टाः "पाण्डवचरित्रं" इति प्रोचुः । "तत्र च पाण्डवाः कथं क सिद्धाः ?" इति पुनः पृष्टाः प्राहुर्गुरवः—"स्वीकृतजैनागमार्थमवलम्ब्य निर्मलसंयमतपोभिर्दुष्टाष्टकर्माणि क्षपयित्वाऽनशनेनानेकमुनिवृताः सिद्धाद्रौ सिद्धाः"। तदा नृपः प्राह—"हिमाचले हिमेन पाण्डवाः सिद्धा इतिव्यासवाक्यप्रामाण्याद्भवद्वाक्यमप्रमाणं" इतीरिताः सूरयः प्रोचिरे—"हे राजेन्द्र ! शृणु भारतभारतीं, तथाहि—समरभूमौ पार्श्व-

शरधोरणीविद्धं भूमिनिपतितमाजन्मशीलितदानशीलं श्रीकर्णनरेन्द्रं दातृत्वपरीक्षार्थं किञ्चिद्देहीति वदन्नुपागतः स्वीकृतविप्ररूपो विश्वेश्वरः। श्रीकर्णोऽप्यन्यत्किञ्चिन्नास्तीति विचिन्त्य यावत्स्वयमादत्तेन पाषाणेन स्वर्णरेखाञ्चितान् स्वदन्तान् पातयितुमुद्यतस्तावत्तुष्टोऽस्मीति वदन् प्रादुरासीत् पुरुषोत्तमः। "हे परमेश्वर! तव दर्शनेन सिद्धोऽस्मि, परं यदि तुष्टोऽसि तदा यत्र कोऽपि न दग्धस्तत्र मे दाहकर्म कुरु" इति वादिनं श्रीकर्णमादायान्यत्र तादृशं स्थानमलभमानो हरिः पयोधौ स्तम्भोपमस्य गिरेः शृङ्गं तादृशं मत्वा यावत्कर्णचितां कर्तुमुद्यतस्तावदिति नभोगीरभूत्—

अत्र द्रोणशतं दग्धं पाण्डवानां शतत्रयम्। दुर्योधनसहस्रं च कर्णसंख्या न विद्यते ॥ १ ॥

तेन यदि पाण्डवानां शतत्रयी तत्र दग्धा तदाऽस्माकमपि पञ्च पाण्डवाः शत्रुञ्जये सिद्धाः, श्रीमतामपि पाण्डवा हिमालये सिद्धा इति किमसमञ्जसं?" इत्युक्त्वा तुष्टेन राज्ञा विसृष्टाः प्रतिश्रयमगुः। इति दृष्टान्तं श्रुत्वा महति कष्ट उत्पन्नेऽपि बुद्धिमान् सिद्धान्तशब्दार्थान्न दूषयति इति परममुनिभिः परमरहस्यं निर्णीतं तदासेव्यं।

अथ मातृकापाठकभरटकज्ञातं निगद्यते—धनसारे ग्रामेऽतीव मूर्खा बहवो भरटका वसन्ति। आत्मनां मध्ये कोऽपि पण्डितो नास्तीति मत्वा तैरशेषैः संभूयैको भरटको नन्दनाख्यः कस्यापि पण्डितस्य पार्श्वे पठनार्थममोचि। जातिविशेषेण भृशं बालिशः सोऽपि नन्दको वर्षत्रयेण मातृकापाठमेवापाठीत्। "वेदमाताऽनेनाधीता" इति प्रतिपाद्य तेन विदुषा स तेषां भरटकानां प्रत्यर्पितः। महाजनैस्तैरपि

वेदमाताऽनेन पठितेति महापण्डितधिया स मेने। किं बहुना ? यदयं वक्ति तत्ते वितर्करहिताः सन्तः सृजन्ति। एकदा रात्रौ प्रदीपनेन समग्रेऽपि ग्रामे दग्धे क्वाप्येकस्य तरोरधो दग्धान् काकान् पतितान् विलोक्य तैरूचे—"हे नन्दक ! किममी दग्धाः काका भक्ष्या न वा ?" इति तदुक्तोऽसौ जगाद—"वेदमातरि क इति काकाः ख इति खाद्याः तेन सद्योऽमी भुज्यन्तां" इति तदुक्तास्ते सर्वेऽपि तथैव कर्तुमुद्यताः केनापि वैदेशिकेन पण्डितेनावलोकिताः पृष्टाश्च ते तस्मै नन्दकोक्तमूचिरे। "अहो ! महामूर्खा अमी" इति मत्वा तेनाभाणि—"भो भरटकाः ! किमिदमकार्यं कुरुथ ?"। ततः स प्राह वेदमातृकोक्तवाक्यार्थं स्वमतिकल्पितं—"क इति काकाः ख इति खाद्याः ग इति गणाः घ इति घनाः पुष्टीभूता" इत्याद्यर्थमनेकपापशब्दैर्दूषितं तदुक्तं वाक्यं श्रुत्वा स पण्डितः कृपार्द्रचेता इति युक्त्या तं प्रेरयामास—"भो नन्दक ! कृपाधर्मनिन्दक ! किमनर्थं तनोषि ? वेदमातृकायाः सम्यगर्थस्त्वया न निश्चितः, शृणु तत्त्वं—"तथ इति तथैव सत्यं यावत्परं दध इति दग्धाः काका न इति न भक्षणीयाः इत्यादिसम्यगर्थं परित्यज्य स्वकल्पनयाऽनल्पजल्पनं न योग्यं"। इत्यादियुक्तिभिर्बोधितास्तेऽकार्यनिवृत्ताः सर्वेऽपि तं परोपकारिणं पण्डितमपूजयन्।

यो यथाऽत्र समुपैति विबोधं, तं तथैव हि नयेत विबोधम्।
यत्कखेतिवचनाद्द्विकभक्षी, बोधितस्तथदधेतिनवाक्यात् ॥ १ ॥

अत्र दृष्टान्तमध्ये नन्दकभरटककृतोऽर्थो हेयः, पण्डितविततार्थस्तूपादेय इति सम्यग्दृष्टान्तो ज्ञेय इति भावार्थः । अथ दक्षनरो यथार्थग्रहणार्थं सम्यक् प्रयत्नं करोतीत्याह—

यथार्थं श्रोतुं समीहा भृशं कार्या दृढादरैः । श्रमणोपासकैर्नित्यं सुज्ञे गुरावुपागते ॥ १ ॥

स्पष्टः । अत्र श्लोकभावार्थस्तु कुणलिकश्राद्धज्ञातेन ज्ञेयः, तथाहि—एकस्मिन्नगरे श्रीरत्नाकरसूरिः सकलशास्त्रकोविदः स्वपरशास्त्ररहस्यवेदी बभूव । स सूरी राजसभायामजस्रमेति । तत्रानेके विद्वांसः साहित्यतर्कच्छन्दोव्याकरणान्तर्लापिकादिकुशलिनः सूरिणाऽनेकधा निर्जितास्ते सूरिनाम श्रुत्वा मौनं दधिरे । आचार्योऽप्येकं पदमात्रमादाय तदनेकार्थसंपृक्तं सृजति, तेन राजसंसदि राज्ञाऽनेकार्थवादीति विरुदं तस्मै दत्तं । नित्यं राजसंसदं सुखासनसंस्थितः समेति । क्रमेण हीयमानचरणगुणो जातः । नृपमन्त्रिसामन्तादिभिः प्रदत्तमशनं वसनं चादत्ते । राजादीन् प्रसन्नान् विधाय मणिमाणिक्यमुक्ताफलादिघनं धनमर्जितं । इत्यादिना गारवत्रययुक्तो बभूव, परं कदाचिदपि श्रीमत्परमात्मवचनसापेक्षतां न जहाति, प्रमादादिभिः श्रीमज्जगद्गुरुप्रणीतं यथार्थावलोकितवस्तुतत्त्वं न दूषयति, प्ररूपणापक्षस्त्वतिनिर्मलोऽस्ति तस्य । अथान्यदाऽन्यग्रामवास्येकः श्राद्धो जीवाजीवतत्त्वज्ञः साधूनां पितृ ( ता ) भ्रातृसमश्च घृतविक्रयार्थं तत्पुरे समागात्, अनेककुपिकाभृतं घृतं विक्रीणाति स्म, तेन लोके कुणलिकश्राद्ध इति नाम प्रथितं । अथैकदा स रत्नाकरसूरिमनेकद्विजवादिवृन्दैः परिवृतं सुखासनास्थितं नृपोपजीविभिः सेवितं वीक्ष्य दध्यौ—"अहो ! अयं शासनप्रभावकगुणयुक्तः सूरिः प्रमादमग्नो जातः, एतदग्रे

जल्पनं मम न योग्यं, यतो ब्रह्माणं कः पाठविधिं शिक्षयति ? तथाप्यवेक्षेऽयं किं सर्वथा भ्रष्टो जातोऽथवा देशतः ? " इति ध्यात्वा राजपथ एव विधिपूर्वकं गुरुं नत्वा स्तुतिं चकार—

गोयम सोहम जंबू पभवो सिज्जंभवो अ आयरिया ।
अन्नेऽवि जुगप्पहाणा तुह दिट्ठे सव्वेऽवि ते दिट्ठा ॥ १ ॥

इत्यादि श्रुत्वा गुरुर्न्यग्मुखं कृत्वा तं प्राह—"द्विकानां कलमरालोपमानं न विजानाति, यतस्तेषां महागुणिनामध्यवसायेष्वेकसमयगताध्यवसायः समग्रेऽपि मदीयभवमध्ये यदि समेति तेनाप्यहं निर्मलीभवामी"ति श्रुत्वा स दध्यौ—"अहो ! धन्योऽयं सूरिः, अनेकमिथ्यावादिसंपृक्तोऽपि श्रीत्रिभुवनैकशरणदवचनसापेक्षत्वं स्वल्पमपि न त्यजति अतः सर्वथा न प्रतिपातिः । ततो गुरावुपाश्रयं समागते स श्राद्धस्तत्रैत्य विधिना वन्दित्वा देशनां श्रुत्वा "दोससयमूलजालं०" इत्युपदेशमालायाः श्रीवीरशिष्यजिनदासगणिविरचितायाः गाथाया अर्थं पप्रच्छ । ततः स सूरिः स्वबुद्ध्या व्याकरणनाममालाद्यनुसारेण नवीनमर्थं पण्डितैरनुल्लङ्घ्यं व्यतनोत् । स श्राद्धः श्रुत्वा विनयेनावोचत्—"अहो ! स्वामिन् ! धन्या युष्मदीया बुद्धिः, ययाऽभिनवोऽर्थो विस्तारितः, परं कल्ये मूलार्थप्रकाशनेन मदात्मा निस्तारणीयः" इति विज्ञप्य वन्दित्वा स स्वकार्ये प्रवृत्तः । द्वितीयेऽपि दिने एत्य तथैवार्थं पप्रच्छ, तदा मुनीशो दध्यौ—"मूलार्थप्रवृत्तिव्यवहारो बाह्यतोऽपि शुद्धो नास्ति मदात्मनि, अन्तर्वृत्त्या तु नास्त्येव, अतः शुद्धां तदर्थप्रवृत्तिं विनाऽर्थकथनवर्णनं न विजानाति, तथा च तन्मूलार्थे दूषणमपि न कार्यं" इति ध्यात्वा पुनर्द्वि-

॥२२७॥

तीयोऽर्थः शब्दपर्यायाद्यनुसारेण कृतः । ततः श्राद्धोऽपि तथैव प्रशस्य गतः । तृतीयेऽपि दिने पृष्टः सूरिरश्रुतपूर्वमर्थं ततान, एवं षण्मासीं यावन्नवनवार्थनिष्पादनतत्परस्य सूरेरक्षयं ज्ञानकोशं मत्वा स व्यजिज्ञपत्—"स्वामिन् ! गङ्गासिकतागणगणनायामनन्तज्ञानिनं विना न कोऽपि क्षमस्तद्वद्भवदीयगुणकथने मत्सदृशो न कोऽपि समर्थः, घृतविक्रयत उपार्जितं धनं सर्वमद्यैव निष्ठां नीतं, अद्य यावत्कार्यमायातं, इदानीं तु स्वगृहे गमिष्यामि, परमिदं खाटूकरोति मानसे मे न भवादृशां गीतार्थानामन्यर्णे यदि तद्गाथाया मूलार्थः प्राप्तस्तर्हि कथं प्राप्स्यामि ? न कुत्रापीत्यर्थः" । ततः सूरिः प्राह—"प्रभातेऽवश्यमत्रागन्तव्यं त्वया" । ततः स हृष्टः स्वोत्तारके गतः । अथ स सूरिर्दध्यौ—"विपदा यथा यथा वर्धन्ते तथा तथाऽऽत्मानमधिकतरं लोभयन्ति, यतो "भुक्ताः श्रियः कामदुघास्ततः किं ?" इत्यादि भावयन् सर्वमुक्ताफलादिसमूहीकृतधनं परिहाय द्रव्यभावाभ्यां पूर्वसूरिसमानीभूय स्वात्मनिस्तारणार्थं रत्नत्रयमङ्गीकृत्य स्थितः । ततः प्रगे स श्राद्धस्तं सूरिं दूरीकृतसमस्तकिल्बिषपूरं संयमगुणपूर्णं च वीक्ष्य त्रिप्रदक्षिणापूर्वं प्रणम्य स्तुत्वा चाह—"हे स्वामिन् ! अहमद्य सद्यो युष्मद्दर्शनेनैव तद्गाथाया याथार्थ्यं गमितः, भवदीयसमस्ताङ्गावयवेषु तदर्थो दृश्यते, अहो ! तव योग्यता लोकोत्तरा, "मूलस्वरूपेणैव मूलार्थप्रकाशनं करिष्ये" इति प्रतिज्ञा सुष्ठु पालिता, मद्भवो युष्माभिः सफलीकृतः मनोरथपूरणेन, परं तव क्षमा तु अनाकलनीया, यत् कदापि कोपाङ्गत्वं न कृतं, अजस्रं प्रश्नसमयेऽपि प्रत्युत सुधादृष्टिवृष्ट्याऽहं पालितः" । इत्यादि स्तुत्वा सूरिमभिवन्द्य स्थितः । सूरिस्तद्गाथार्थं जगौ—

दोससयमूलजालं पुव्वरिसिविवज्जिअं जइ वंतं ।
अत्थं वहसि अणत्थं कीस अणत्थं तवं चरसि ॥ १ ॥

दोषा रागादयस्तेषां मूलं कारणं च तज्जालं च मत्स्यबन्धनजालवद्बन्धहेतुत्वात् अत एव पूर्वर्षिभिर्वैरस्वाम्यादिभिर्विवर्जितं तमर्थं यदि वहसि, किंभूतं तं ? अनर्थं नरकपाताद्यनर्थहेतुं, अतः किमित्यनर्थं निष्प्रयोजनं तपोऽनशनादिरूपं चरसि ? नेदं पौर्वापर्येण घटत इत्यर्थः । इत्यादि स यथार्थं श्रुत्वा हृष्टः स्वस्थानं गतः । अथ स सूरिः स्वपापालोचनार्थं श्रीसिद्धगिरौ गत्वा श्रीजिनान्तिके "श्रेयः श्रियां मङ्गलकेलिसद्म०" इत्यादिवैराग्यगर्भां स्तुतिं विधायासन्नमायुर्ज्ञात्वा भक्तप्रत्याख्यानानशनेन स्वर्गं जगाम । सूरिसंगृहीतद्रव्यैर्मुक्ताफलानि संगृह्य गृहस्थैर्घरट्टकेषु पिष्टं विधाय दूरमुत्सारितं क्वाप्यकल्प्यमानत्वादिति वृद्धमुखेभ्यो यथा श्रुतं तथेदं चरित्रं लिखितं मया, तत्त्वं तु बहुश्रुतवद्भिः संशोध्य स्थाप्यं ।

कृत्वाऽऽग्रहं योग्यगुरुमवाप्य स, गाथायथार्थश्रवणस्पृहां दधौ ।
नैद्रव्यमुक्तो मतिनाऽर्थगादनः[1], सूरिः कृतस्तेन सुसप्तशीलयुक् ॥ १ ॥

इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तावष्टादशस्तम्भे पञ्चषष्ट्यधिकद्विशततमं २६५ व्याख्यानम् ॥

१ इदं रूपं चिन्त्यम् ।

## षट्षष्ट्यधिकद्विशततमं २६६ व्याख्यानम् ॥

अथ सूत्रार्थोभयानिह्नवाह्वान्तिमश्रुतज्ञानाचारमाह—

सूत्रार्थयोर्द्वयोर्नैव निह्नवं कुरुते सुधीः । अष्टमः स्यात्तदाचारः श्रुतवद्भिः श्रुते स्तुतः ॥ १ ॥

स्पष्टः । श्लोकभावार्थस्तु अभयदेवसूरिज्ञातेन ज्ञेयः । तथाहि—श्रीअभयदेवगुरुर्बाल्यावस्थायामेव षोडशवर्षसमय एव समस्तस्वपरसमयागमवेत्तृत्वं प्राप । एकदा पञ्चमाङ्गवर्णितं रथकण्टकमुशलादिसङ्ग्रामवर्णनं करोति, रौद्रवीररसवर्णनं श्रुत्वा व्याख्यानश्रवणार्थं समायाताः केचिच्छस्त्रधारिणः क्षत्रियाः परस्परयुद्धार्थं तत्रैव सन्नद्धा बभूवुः । तदा गुरुः समयज्ञो झटिति नागनत्तुकवर्णनेन शान्तरसं व्यतनोत्, तेन पुनः सर्वे स्वस्थीभूता दध्युः—"अहो ! धिगस्मान्, अत्रावसरे प्रमादोन्मत्ता वयं जातास्तन्नास्माकं योग्यं, धन्योऽयं गुरुवर्णितनागनत्तुकश्राद्धः, यः सङ्ग्रामाङ्गणेऽपि स्वात्मधर्मं पुष्टीचकारेति" । तदा गुरुरभयदेवं प्रतीत्यशिक्षयत्—"हे शिष्य ! तव बुद्धिविस्तारो वागगोचरोऽस्ति, अतो लाभालाभौ विचार्य वर्णनं विधेयं सर्वत्र । अथैकदा प्रतिक्रमणानन्तरमेकेन शिष्येण श्रीसिद्धगिरौ प्रकटीकृतं श्रीनन्दिषेणर्षिणा श्रेणिकपुत्रेण नेमिगणधरेण वा श्रीअजितशान्तिस्तवनं, तन्मध्ये "अंबरंतरविआरणिआहिं०" इत्यादिचतुर्भिः कलापकार्थं पृष्टः श्रीअभयदेवः प्राह—"अनेकशुभनेपथ्यादिभिर्देवसुन्दरीभिर्यस्य क्रमौ वन्दितौ, न पुनर्मनागपि मनः क्षोभितं, तमजितं प्रणमामीति, तासामेव विशेषणानि

सन्ति, अत्र तदनुसारेण विस्तारतः शृङ्गाररसवर्णनं कृतमजयदेवेन, तच्च सर्वमासन्नं व्रजन्त्या राजपुत्र्या कुमार्या शृङ्गारशास्त्रज्ञया श्रुतं, कदाप्यश्रुतपूर्वमद्भुतं तच्छ्रुत्वा सा दध्यौ—"यद्ययं प्राज्ञशिरोमणिर्मम स्वामी स्यात्तदा मे जन्म जीवितं च सफलं जायते, हर्षभरेण लीलया शृङ्गारशास्त्रविनोदेन च दिनान्यतिवाहयामि, अहं तत्र गत्वा लोभयामि तं नरवरं प्रार्थयामि" । ततः सोपाश्रयद्वारमेत्य मञ्जुलया वाण्येति प्राह—"हे शृङ्गारशास्त्रज्ञ! मतिमतां वर! कपाटमपावृणु, अहं मदनमञ्जरी राजसुता गुणगोष्ठीविधानाय समेतास्मि" इत्याद्यकाले स्त्रीवाक्यं श्रुत्वा गुरुस्तमजयदेवमुपालम्भयत्—"प्राक् तव शिक्षा दत्ता, सा सर्वा विस्मृता, यत्र तत्र चातुर्यं तनोषि, किं न लज्जसे? अधुना किं करिष्यसि? त्वद्गुणाकृष्टा सीमन्तिनी सीमन्तप्रस्तटदायका समागताऽस्ति, वियोगार्ता पुनः पुना रटति" । ततः स प्राह—"हे पूज्य! मद्वचोभिः सा विभ्रमाशायुक्ता यथा जाता तथा युष्मत्कृपयैव पुनः ससंभ्रमा प्रणष्टाशाऽपि भविता, नात्र खेदावसरः" । ततः सोऽजयदेवो द्वारमुद्घाट्य तां स्माह—"हे राजसुते! वयं साधवः, अतो मुहूर्त्तमात्रमपि स्त्रीभिः सह वार्तां धर्मसंबन्धिनीमपि विजने न कुर्मः, तर्हि किमस्माकं गोष्ठीपुष्टीकरणं? वयं तु मुखदन्तधावनादिनिरीहास्त्यक्तबाह्यशौचसमीहा निर्दोषान्तप्रान्तरूक्षभैक्ष्यमुधावृत्त्या दत्तमात्राशनस्पृहा अजस्रं वसामः। किं सारं वपुष्यस्ति मलमूत्रपुरीषादिभिः पूरिते । महाबीभत्सं विषयसौख्यं कापुरुषा अभिलषन्ति । अस्मद्वपुःशुश्रूषा गृहे मात्रादिभिरेव कृताऽभविष्यत्, ईदृशमस्मद्वपुः, तत्स्पर्शस्तव राजपुत्र्याः स्वप्नेऽपि नासेवनीयः" । इत्यादिबीभत्सरसवर्णनं श्रुत्वा सा

सहसा प्रणष्टा । मुनिस्तु निरुपसर्गो गुर्वन्तिक आजगाम । ततो गुरुः प्राह—"तव बुद्धिकौशल्यमधिकतरं समुद्रपूरसन्निभं, वर्तमानकाले साम्यं विना नैतद्योग्यं, अतस्तन्निवारणार्थं युगन्धरीवुंवणकं तक्रयुतं च कलिङ्गव्यञ्जनमन्विष्य भक्षणीयं, येन बुद्धिर्न्यूना भवति ।

तरबूजं कलिङ्गं च भोज्यं शीतं च वातुलम् । कपित्थबदरीजम्बूफलानि घ्नन्ति धीषणाम् ॥ १ ॥

ततो गुरुवचसा तेन तत्स्वीकृतं, बहुधा तदेव भक्षयति । अथ गुरुस्तं महायोग्यं मत्वा सूरिपदं दत्तवान् । क्रमेण स्तम्भनकस्थाने प्राप्तः । तत्तुच्छाहाराहरणान्महाव्याधिकुष्ठरोगपीडितो हस्तमपि चालयितुं न शक्नोति । ततः सन्ध्यायां पाक्षिकप्रतिक्रमणं कृत्वा श्राद्धानामग्रे प्राह—"कल्येऽनशनं ग्रहीष्यते, देहपीडया क्षणमपि स्थातुं न शक्यते" । सर्वेऽपि महाखेदं दधुः । अत्रान्तरे रात्रौ शासनदेवी समेत्य प्राह—"प्रभो ! स्वपिषि जागर्षि वा ?" । गुरुणोक्तं—"जागर्मि" । देवी प्राह—"उत्तिष्ठ, नवैताः सूत्रकोकडिका उत्खेलय" । गुरुराह—"कथमेवंविधशरीरेणोत्खेलयामि ?" । देवी प्राह—"नवाङ्गवृत्त्युत्खेलनं तवाधीनं वर्तते, तस्याग्र इदं कियन्मात्रं, हस्ते गृहाण त्वं, चिरकालं जीविष्यसि" । गुरुराह—"कथमेवंविधदेहोऽहं श्रीमौनीन्द्रागमनवाङ्गटीकां विधास्यामि ?" । देवताऽवदत्—"षण्मासीं यावदाचाम्लतपः कुरु" । अथ श्रीशासनदेवतादेशात् षण्मासीं यावदाचाम्लानि निर्माय कठिनप्रयोगेण नवाङ्गवृत्तिं व्यदधात् । ततो वपुषि प्रादुर्भूते प्रभूते रोगे श्रीधरणेन्द्रः सितसर्परूपमास्थाय तद्वपुर्जिह्वयाऽऽलिह्य प्रसह्य निरामयीकृत्य "स्तम्भनपार्श्वप्रतिमां सेढीनदीतटे भूमौ छन्नां स्थितां प्रकटीकुरु, तत्र सहसा

समागता गौस्तत्प्रतिकृतिस्थलेऽवश्यं प्रस्नविष्यति, तच्चिह्नेन साधिष्ठायकं स्थलं निर्णेतव्यं" इति समादिदेश। प्रभाते श्रीसङ्घेन सह समागतास्तत्र ते सूरयः प्रस्नुवन्तीं सुरभीं विलोक्य गोपालबालैर्निवेदितायां भुवि नवं द्वात्रिंशिकास्तवं रचयामासुः, एवं कुर्वन्तस्त्रयस्त्रिंशत्तमवृत्ते न तत्र श्रीपार्श्वनाथबिम्बं प्रादुश्चक्रुः। देवतादेशेन तद्वृत्तं गोप्यमेव निर्ममे। तद्दर्शनात्सर्वेऽप्यामया मूलतः प्रणष्टाः। अथ तदा सङ्घैस्तदुत्पत्तिः पृष्टा, गुरुराह—पूर्वं श्रीवरुणदेव एकादशाब्दलक्षाणि एतां प्रतिमामपूजयत्। नवाहरधिकान् यावद्रामचन्द्रस्तामार्चयत्। अशीत्यब्दसहस्राणि तक्षकेणाप्ययं जिनः पूजितः। ततः सौधर्मसुरराजेन चिरं चर्चितः। ततो द्वारवत्यां श्रीवासुदेवेन श्रीनेमिप्रभुमुखान्महातिशयसंपन्नां तां प्रतिमां ज्ञात्वा सा महति प्रासादे संस्थाप्य पूजिता। द्वारवत्या दाहानन्तरं समुद्रेण प्लाविता सा तथैव समुद्रमध्ये स्थिता। कालेन कान्तिवासिनो धनपतिश्रेष्ठिनः सांयात्रिकस्य यानपात्रं देवतातिशयात् स्खलितं। "अत्र जिनबिम्बं तिष्ठति" इत्यदृष्टवाचा निश्चित्य नाविकाँस्तत्र निक्षिप्य सप्तशिरामतन्तुभिर्बद्ध्वोद्धृता प्रतिमा। कान्तिनगर्यां नीत्वा प्रासादे स्थापिता। तत्र विंशत्यब्दशतानि यावत्स्थिता। ततो ढङ्कनृपनन्दिनीं भोपलदेवीमद्भुतस्वरूपां वीक्ष्य तां सेवमानस्य वासुकेः सुतो नागार्जुनो नाम समजनि। स्नेहमत्या (बुद्ध्या) नागेन्द्रेण सर्वासामपि महौषधीनां फलानि दलानि मूलानि च भोजितः, तत्प्रभावात्सिद्धपुरुषः शातवाहनभूपस्य गुरुरिति प्रसिद्धिं प्राप्तः। श्रीपादलिप्तसूरिप्रसादाद्गगनगामिनीं विद्यां प्राप्य रससिद्धिकरणोत्सुकोऽनेकोपायाँश्चक्रे, परं रसस्तु स्थैर्यं न बध्नाति। ततः सूरीन् पप्रच्छ। गुरवः प्राहुः—"समहिम-

श्रीपार्श्वनाथप्रतिबिम्बस्य पुरः साध्यमानः सर्वलक्षणोपेतसुशीलस्त्रीमृद्यमानो रसः स्थिरीभूतः कोटिवेधिर्भवति"। तच्छ्रुत्वा नागार्जुनेन स्वपिता वासुकिर्ध्यात्वा पृष्टः, स प्राह—"कान्तिनगरे समहिमा प्राचीना जैनप्रतिमास्ति"। ततस्तद्बिम्बं तत्रत्यं तेनापहृतं। सेढीनदीतटे विजने न्यस्य तत्पुरतो रससाधनाय शातवाहनपत्नीं चन्द्रलेखाभिधां प्रतिनिशं सिद्धव्यन्तरसान्निध्यात्तत्रानीय रसमर्दनं कारयति स्म। षण्मास्यां व्यतीतायां रसः स्तम्भितः। तत्र स्तम्भनकाभिधानं श्रीपार्श्वनाथतीर्थं रसादप्यतिशायि सकललोकाभिलषितफलप्रदं जातं। ततः क्रमेण देववचसा मयाऽत्र विज्ञाय "जय तिहुअणवरकप्परुक्ख०" इत्यादिस्तुतिभिः स्तुतः प्रकटीबभूव। प्रागसौ प्रतिमा केन निर्मापितेति न श्रुतमतो नास्माभिर्लिख्यते। इत्यादि श्रीमदभयदेवसूरिनिगदितं दृष्टान्तं श्रुत्वा श्राद्धैः प्रासादः कारितः, स्तम्भनपुरं वासितं। तत्र लोका महामहोत्सवं कुर्वन्ति स्म। अथ

दुष्टैर्म्लेच्छैर्भटैर्देशे गुर्जराख्ये परिप्लुते। मङ्गलर्त्वग्निचन्द्राब्दे (१३६८) स्तम्भतीर्थमवातरत्॥ १॥

अधुना सा प्रतिमा स्तम्भतीर्थबिंदरे विद्यते। प्राक् शीलाचार्येणाद्याङ्गयोर्द्वयोर्वृत्तिर्विहिता। तदनु श्रीअभयदेवसूरिणा श्रीशासनसुरीवचसा नवाङ्गानां टीका स्वमतिकल्पनां विहाय निष्पादिता। ततः पञ्चत्रिंशदधिकैकादशशत ११३५ तमे वर्षे, केषाञ्चिन्मतेनैकोनचत्वारिंशदधिकैकादशशत ११३९ तमे वर्षे श्रीअभयदेवसूरिः स्वर्गभागभूत्॥

स्थानाङ्गसूत्रादिनवाङ्गटीका–कर्ता बभूवाभयदेवसूरिः ।
तस्मै नवाङ्गं प्रददौ हि पार्श्वः, श्रीस्तम्भनाख्योऽष्टमशीलभाजे ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तावष्टादशस्तम्भे षट्षष्ट्यधिकद्विशततमं २६६ व्याख्यानम् ॥

---

## सप्तषष्ट्यधिकद्विशततमं २६७ व्याख्यानम् ॥

अथ शुभाशुभं श्रुतं सम्यगर्थे नियोज्यमित्याह—

अप्रशस्तं प्रशस्तं वा शास्त्रं यत्समुपागतम् । प्रशस्तार्थे प्रयोक्तव्यं मौनीन्द्रागमवेत्तृभिः ॥ १ ॥

स्पष्टः । नवरं प्रशस्तं श्रुतं स्याद्वादपदलाञ्छितं, तस्माद्भिन्नमप्रशस्तं शृङ्गारादिकशास्त्रं, तत्सर्वं प्रशस्तार्थेऽनेकान्तपदार्थे वैराग्यार्थे च नियोज्यं । अत्र क्षुल्लकमुनिदृष्टान्तेन भावार्थो ज्ञेयः । तथाहि—चम्पायां सिंहसेनो राजा, तस्य राहुगुप्तो मन्त्री, स चार्हद्धर्मवासितः । एकदा नृप आस्थानस्थो धर्मविचारं प्रश्नयति, तदा यो यस्याभिमतः स तमुवाच । तत्र केचिदेकान्तहिंसया केचिदेकान्ताहिंसया केचिदात्मारामापीरूया यथेच्छभोगादिना केचिन्निःस्पृहभावेनेत्यादिस्वस्वमतिकल्पनादिना धर्मं स्थापयन्ति । तन्निशम्य मन्त्री तूष्णीभावं भजमानो राज्ञोक्तः—“भवान् किमिति धर्मनिर्णयवाक्यं न ब्रूते ?” । स

प्राह—"किमेभिः पक्षपातवचोभिः ? विमृश्य उक्तियुक्तिप्रश्नोत्तरं प्राप्य आत्मनैव परीक्षा कर्तुमुचिता"। ततो राजानुमत्या "सकुण्डलं वा वदनं न वेति" अयं गाथापादो नगरमध्ये आलंबे, संपूर्णगाथा ज्ञाण्डागारेऽस्ति, नगर्यां व्युद्घुष्टं यथा—य एनं गाथापादं पूरयिष्यति, तस्य राजा यथेप्सितं दानं दास्यति, तद्भक्तश्च भावी। तं गाथापादं सर्वेऽपि प्रवाजकाः पेठुः। पुनः सप्तमेऽहनि राजा सभायां स्थितः, तत्रादावेव परिव्राड् ब्रवीति—

भिक्खापविट्ठेण मएऽज्ज दिट्ठं, पमयामुहं कमलविसालनेत्तं।
वक्खित्तचित्तेण न सुट्ठु दिट्ठं, सकुंडलं वा वदनं न वेति ॥ १ ॥

एतच्छ्रुत्वा मन्त्री नृपं प्राह—"स्वामिन्! नायं पारमार्थिकधर्मज्ञायकः, यतोऽपरिज्ञाने व्याक्षेपकारणमुपन्यस्तं, न पुनर्वीतरागतेति अशनाप्राप्तौ तूपोषणफलं नाप्यते, मूलगाथातो विसंवादार्थसमन्वितोऽसाविति विज्ञाप्य तिरस्कृत्य नृपेण निर्घाटितः। पुनस्तापसाः पठन्ति—

फलोदगेणम्मि गिहे पविट्ठो, तत्थासणत्था पमया निरिक्खिया।
वक्खित्तचित्तेण न सुट्ठु दिट्ठं, सकुंडलं वा वदनं न वेति ॥ १ ॥

नृपमन्त्रिणौ तन्निशम्य दध्यतुः—"अत्राप्यनेन स्वकार्यव्यग्रत्वमज्ञानकारणं सूचितं, न पुनस्तत्त्वार्थः। तदनन्तरं शौद्धोदनिकशिष्य आह—

मालाविहारे मइ अज्ज दिठ्ठा, उवासिआ कंचणभूसिअंगी।
वक्खित्तचित्तेण न सुट्ठु नायं, सकुंडलं वा वदनं न वेति ॥ १ ॥

इति श्रुत्वा तौ दध्यतुः—"अत्रापि स्त्रीनेपथ्यनिरीक्षणव्यग्रत्वं ज्ञातं, न पुनर्ज्ञानतत्त्वं। अनया दिशा सर्वेऽपि तीर्थिका वाच्याः। आर्हतस्तु न कश्चिदागत इति राज्ञाऽज्ञायि। मन्त्रिणा चार्हतः क्षुल्लकोऽप्ये-वंभूतपरिणाम इति नृपस्य परिणामः स्यादित्यतो भिक्षार्थं प्रविष्टः क्षुल्लकः समानीतः। तेनापि गाथापादं गृहीत्वा गाथा बभाषे, तद्यथा—

खंतस्स दंतस्स जिइंदियस्स, अज्झप्पजोगे गयमाणसस्स।
किं मज्झ एएण विचिंतिएणं, सकुंडलं वा वदनं न वेति ॥ १ ॥

अत्र च क्षान्त्यादिकमपरिज्ञाने कारणमुपन्यस्तं, न पुनर्व्याक्षेपः, इत्यतो गाथासंवादने क्षान्तिदम-जितेन्द्रियत्वाध्यात्मयोगाधिगतेश्च कारणाद्राज्ञो धर्मपृच्छोल्लासोऽभूत्। क्षुल्लकेन धर्मप्रश्नोत्तरकाले पूर्व-गृहीतशुष्केतरगोलकद्वयं भित्तौ निक्षिप्य गमनमारेभे। पुनर्गच्छन् राज्ञोक्तः—"किमिति भगवन्! धर्मं पृष्टोऽपि न कथयसि?"। स चावोचत्—"हे मुग्ध! ननु कथित एव धर्मो ज्ञेयः शुष्केतरगोलकदृष्टा-न्तेन"। एतदेव गाथाद्वयेनाह—

उल्लो सुक्को अ दो छूढा गोलया मट्टिआ मया। दोवि आविसआ कुड्डे जो उल्लो तत्थ लग्गइ ॥ १ ॥

अयमत्र भावार्थः—आत्मपरमात्मरूपनिरीक्षणव्यासङ्गात् कामिनीनां बाह्यात्मनां मुखं न पश्यन्ति,

तदभावे तु पश्यन्ति, ये कामगृद्धास्ते सार्द्राः, सार्द्रतया च पङ्के कर्मकर्दमे वा लगन्ति, ये तु क्षान्त्यादिगुणोपेताः संसारसुखपराङ्मुखा मुनयस्ते शुष्कगोलकसन्निभा न कचिल्लगन्ति ।

एवं लगंति दुम्मेहा जे नरा कामलालसा । विरता उ न लग्गंति जहा से सुक्कगोलए ॥ १ ॥

जह खलु झुसिरं कट्ठं सुचिरं सुक्कं लहुं डहइ अग्गी । तह खलु खवंति कम्मं सम्मं चरणट्ठिया साहू ॥ २ ॥

इति श्रुत्वा नृपः प्रबुद्धो मन्त्रिणः पुरोऽजस्रं मुनिक्षुल्लकधर्मं शशंस । इत्यादियुक्त्या राहुगुप्तेन नृपो यथार्थधर्मरतः कृतः । तथाऽन्यैरपि विधेयमिति ॥

शृङ्गारपङ्कं निरवद्यवर्त्मनि, यः क्षुल्लकः साधुरवद्यनिर्गतः ।
अस्थापयच्चान्यकुवादिशासना-त्तथ्यं ततो जैनवचश्चकार सः ॥ १ ॥

अथैकान्तवादिसूत्रार्थैरनेकान्तागमो न कन्थीकार्यः इत्याह—

मिथ्यात्वशास्त्रयुक्त्याद्यैः कन्थीकार्या न सूत्रवाक् । सूत्रार्थोज्झयनैर्हव्यसमं पापं न भूतले ॥ १ ॥

स्पष्टः । नवरं कन्थीकरणस्वरूपं भेरीज्ञातेन ज्ञेयं, तथाहि—द्वारवत्यां नगर्यां वासुदेवस्य राज्यं पालयतो गोशीर्षश्रीखण्डमय्यो देवतापरिगृहीतास्तिस्रो भेर्य आसन् । तद्यथा—साङ्ग्रामिकी १ औद्भूतिकी २ कौमुदिकी ३ । तत्र प्रथमा सङ्ग्रामकाले समुपस्थिते सामन्तादीनां ज्ञापनार्थं वाद्यते । द्वितीया पुनरुद्भूते आगन्तुके कस्मिंश्चित्प्रयोजने सामन्तामात्यादिलोकस्यैव ज्ञापनार्थं वाद्यते । तृतीया तु कौमुदीमहोत्सवाद्युत्सवज्ञापनार्थं वाद्यते । चतुर्थ्यपि गोशीर्षश्रीखण्डमयी भेरी तस्यासीत् । इयं तु षण्मासपर्यन्ते

वाद्यते, यश्च तच्छब्दं शृणोति तस्यातीतमनागतं च प्रत्येकं षाण्मासिकमशिवमुपशाम्यति । इयं च प्रकृतोपयोगिनी चतुर्थी भेरी । तदुत्पत्तिर्लिख्यते—कदाचित्सौधर्मदेवलोके समस्तामरसभायाः पुरोऽभिहितं शक्रेण—"अहो ! हरिप्रमुखाः सत्पुरुषा लब्धदोषमध्येऽपि गुणानेव गृह्णन्ति तथा न नीचयुद्धेन युध्यन्ते" । तत्रैको देवोऽश्रद्दधानो दध्यौ—"कथमेतत्संभवति ? अगृहीतपरदोषः कोऽपि न तिष्ठति" इति विचिन्त्य मर्त्यलोके समागत्य देवेन बीभत्सं कृष्णमतिदुर्गन्धं श्वानमृतकं[1] विकृतं, तस्य च मुखे कुन्दोज्ज्वलप्रवरदशनपङ्क्ती रचिता । अत्रावसरे श्रीनेमिनाथवन्दनार्थं श्रीवासुदेवः सर्वर्द्ध्याऽऽकीर्णो निर्ययौ, तदा राजवर्त्मनि दूरात्तच्छ्वानदुर्गन्धमाघ्राय सैनिकाः पराङ्मुखा उत्पथेन गन्तुं प्रवृत्ताः, वासुदेवेन पृष्टाः, तैः श्वानमृतकं दर्शितं । ततो नृपः प्राह—"पुद्गलानां भावा नानाविधा विद्यन्ते, नात्र हर्षः शोकश्च, परं यूयं पश्यथ, अहो ! अस्य कृष्णस्य पाण्डुरा दन्ता मरकतभाजननिहितमुक्तावलिसन्निभा भान्ति" । तन्निशम्य देवो दध्यौ—"नूनमयं सत्यः परगुणग्राही दोषशतानि विहायेति" । ततो हरेरश्वरत्नमपहृत्य देवः प्रधावितः । जनार्दनोऽपि ससैन्यस्तत्पृष्ठेऽधावत् । देवेन समस्तसैन्यं निर्जितं । ततो हरिस्तं देवं स्माह—"कथं ममाश्वरत्नमपहरसि ?" । देवोऽवक्—"युद्धे जयं विधायामुमश्वं गृहाण" । कृष्णोऽवक्—"अहं रथारूढः, त्वं तु भूमौ स्थितः, अतस्त्वं रथं मदीयमङ्गीकुरु, येन समानं युद्धं स्यात्" देवोऽवक्—"अलं मे रथेन" । एवं हस्ती अश्वश्च प्रतिषिद्धः, बाहुयुद्धादिकमपि निषिद्धं । पुनः

१ श्वानशब्दोऽप्यकारान्तोऽस्ति.

कृष्णोऽवक्—"तव केन युद्धेन योधितव्यं ?"। देवः स्माह—"अधिष्ठानयुद्धेन[1] पूतघातैर्[2]युध्यावहे"। तदाऽर्धचक्री स्माह—"नाहं नीचयुद्धेन युध्ये, अश्वरत्नं यथासुखं गृहाण"। तत्साहसेन तुष्टः सुरो संजातप्रत्ययः प्रत्यक्षीभूयाख्यत्—"देवानां दर्शनममोघं, कमपि वरं वृणु"। केशवो व्याहरत्—"अशिवोपशमनीं भेरीं मे प्रयच्छ"। ततो देवेन चन्दनभेरी दत्ता, फलं च प्रोक्तं—"अस्याः शब्दं यः शृणोति तस्य ज्वरादिरोगाः प्रणश्यन्ति, सा पूर्णेषु षण्मासेषु पुनर्वाद्या, उत्पन्नाः सर्वे गदा गच्छन्ति"। अथान्यदा कदाचिदेको वणिगत्यन्तदाहज्वरेणाभिभूतो भेरीरक्षकं भणति—"दीनारलक्षं गृहाण, भेरीं छेदयित्वा एकं खण्डं मम प्रयच्छ, भेरीवादनसमयेऽहं नागतवान्, इदानीं तु षण्मासानन्तरं नृपाज्ञया सा वादयिष्यति तावत्कालमहं दुःखसहनेऽक्षमः, अतो मे एकं खण्डं देहि"। तेनापि लोभवशेनान्यचन्दनेन भेर्यास्थिग्गलकं दत्तं। एवमन्येषामपि लोभवशेन तादृशमन्यचन्दनखण्डं संयोज्य तस्याः खण्डं ददौ। एवं कन्थीकृतेयं भेरी। अथान्यदा षण्मास्यतिक्रमे हरिणा सा भेरी ताडिता, कन्थीकरणात्तस्याः शब्दो हरिसंसद्यपि न प्रसृतः। तदनु कन्थीकरणव्यतिकरः केशवेन विज्ञातः। भेरीरक्षको निर्घाटितः। पुनरष्टमं विधायान्या भेरी कृष्णेन देवपार्श्वे याचिता लब्धा च, अन्यो भेरीपालकः कृतः। अत्रास्योपनय एवं—यः शिष्यः सूत्रमर्थं वा परमतेन स्वकीयग्रन्थान्तरेण वा मिश्रयित्वा कन्थीकरोति अहंकारेण परमतादिभिरपि मिश्रयित्वा संपूर्णं विदधाति सोऽनुयोगश्रवणस्य न योग्यः। एवं कन्थीकृत-

१ अधिष्ठानयुद्धेन—लिंगयुद्धेन २ पूतघातैः—अपानघातैः।

सूत्रार्थौ गुरुरपि नानुयोगभाषणस्य योग्यः । "सुशिक्षितोऽहं स्वयमेव नान्यं पृच्छामि" इतिमानेन गलितं विस्मृतं संपूर्णं विदधातीति ॥



लोभेन मानेन कदाग्रहेण, हठेन शाठ्येन च सूत्रमर्थम् ।
कन्याविधानाद्द्वयनिह्नवः स्यात्, साध्वादिसुज्ञैर्न तथा विधेयम् ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ अष्टादशस्तम्भे सप्तषष्ट्यधिकद्विशततमं २६७ व्याख्यानम् ॥

## अष्टषष्ट्यधिकद्विशततमं २६८ व्याख्यानम् ॥

अथ दर्शनाद्याचारमाह—

ज्ञानाद्यनन्तसंपूर्णैः सर्वविद्भिर्यदाहि(दोदि)तम् । तत्तथ्यं दर्शनाचारो निःशङ्काख्योऽयमादिमः ॥ १ ॥
जिनोक्ततत्त्वसंदेहात्सा च शङ्काऽभिधीयते । शङ्कातो भिद्यते श्रद्धा दोपोऽयं स्यान्महाँस्ततः ॥ २ ॥

स्पष्टौ । नवरं शङ्कातः श्रद्धा—सम्यक्त्वं तत्त्वश्रद्धानं च भिद्यते । अत्रार्थे गङ्गाचार्यप्रबन्धः । तथाहि—महागिरिशिष्यो धनगुप्तो नाम, तस्यापि शिष्य आर्यगङ्गो नामाचार्यः । अयं चोल्लुकानद्याः पूर्वतटे चतुर्मासीमवस्थितः, तद्गुरवस्त्वपरतटे । अन्यदा शरत्समये सूरिवन्दनार्थम् उत् गङ्गो नदीमुत्तरति । स च खल्वाटः । तदा तस्य शीर्षे सूर्यांशुसङ्गमात्तापो बभूव, पानीयसङ्गात् पादयोः शैत्यं

चाभूत् । अत्रान्तरे कथमपि मिथ्यात्वमोहनीयोदयादसौ चिन्तितवान्—"अहो ! सिद्धान्ते युगपत्क्रियाद्वयानुभवः किल निषिद्धः । अहं तु एकस्मिन् समये शैत्यमुष्णं च वेदयामि, अतोऽनुभवविरुद्धत्वान्नैवमागमोक्तं शोभनमाभाती"ति शङ्कां विधाय गुरुभ्यो निवेदयामास । तदा गुरुभिरिति शिक्षितः—"भो वत्स ! एकसमये उपयोगद्वयं युगपच्छायातपवदन्योऽन्यं विरुद्धं, तन्नोपपद्यते, सदपि क्रमभवनमस्य त्वं न लक्ष्यसि, समयावलिकादेः कालस्य सूक्ष्मत्वान्मनसश्चातिचपलत्वेनातिसूक्ष्मत्वेन चाशुसंचारित्वाच्च । मनोऽतीन्द्रियसूक्ष्मपुद्गलस्कन्धनिष्पन्नं ज्ञेयं । तच्चित्तं स्पर्शनादिद्रव्येन्द्रियसंबन्धिदेशेन सह यस्मिन् काले संबध्यते तस्मिन् काल इन्द्रियस्य तन्मात्रज्ञानहेतुर्भवति, अन्यार्थोपयुक्तो देवदत्तादिर्हस्तिनमपि पुरतो व्यवस्थितं न लक्षयति, तस्मादेकस्मिन्नर्थ उपयुक्तं मनो न कदाचिदन्यार्थोपयोगं लभते । यथा कश्चित्साधुरेकाग्रध्यानमग्नः कायोत्सर्गेण स्थितः । इतश्चैकश्चक्रवर्ती तत्सैन्यं चतुःषष्टिसहस्रान्तःपुरीवर्ग आतोद्यादिकं च तन्मुनेः पुरतो व्रजति वाद्यति च । स मुनिश्चक्रिणा दृष्टः । चक्री दध्यौ—"अहो ! अस्योपयोगैकता ! मत्सैन्यं शब्दरूपरसगन्धस्पर्शादिपञ्चेन्द्रियसौख्योपकरणैर्युक्तमप्ययं मुनिर्न चित्तं दत्त्वा निरीक्षते" । ततः स चक्री ध्याने पूर्णे सति मुनिं नत्वा पप्रच्छ—"स्वामिन् ! मत्सैन्यं हस्त्यश्वरथातोद्यान्तःपुरपुरन्ध्रीप्रमुखैः पञ्चेन्द्रियग्राह्यवस्तुभिः सङ्कुलं युष्माकमग्रे भूत्वा व्रजितं तत्सर्वं भवद्भिर्निरीक्षितं न वा ?" । गुरुराह—"तवोपजीव्यादिभिरहं नतो भावी, परं मया परमात्मध्यानैकोपयोगमग्नेन न किञ्चिद्दृष्टं तूर्यादिकं च न श्रुतं" इति श्रुत्वा स चक्री पुनः पुनर्गुरूपयोगं स्तुत्वा प्रतिबोधं

प्राप, प्राह च—“नूनमात्मनः पुरः प्रवर्तमाना अनेक इन्द्रियग्राह्यविषयाः सन्ति, परं मनःप्रवृत्तिं विना नैकोऽपि ग्राह्यतामायातीति”। अतो हे शिष्य! यथेन्द्रोपयोगे वर्तमानो माणवकस्तन्मयोपयोग एव भवति नान्यार्थोपयुक्तः। अत्राह शिष्यः—“स्वामिन्! यदि समकमेव क्रियाद्वयोपयोगो न भवति तर्हि कथं तमहं संवेदयामि?” गुरुः प्राह—“समयावलिकादिकालकृतविभागस्य सूक्ष्मत्वाद्भिन्नकालमपि कालविभागेन प्रवृत्तमपि क्रियाद्वयसंवेदनमुत्पलपत्रशतवेधवद्युगपत्प्रवृत्तमिव मन्यसे त्वं, न ह्युत्पलपत्रशतमधोऽधः स्थापितं सुतीक्ष्णयाऽपि सूच्या समर्थेनापि वेधकर्त्रा समकालं वेध्यते, किंतु कालभेदेनासङ्ख्यातसमयैरेकैकपत्रस्य वेधो जायते, उपर्युपरितनेऽविद्धेऽधोवर्तिनः पत्रस्य वेधायोगात्, अथ वेधकर्ता युगपद्विहितमेव वेध्यं मन्यते, कालभेदस्याल्पत्वेन दुर्लक्ष्यत्वात्। अथवाऽलातचक्रं लोके उंबाडुं इति कथ्यते, तत्कालभेदेन दिक्षु भ्रमदपि भ्रमणकालभेदस्य सूक्ष्मत्वेन दुरधिगमत्वान्निरन्तरभ्रमणमेव लक्ष्यते, एवमिहापि शीतोष्णक्रियानुभवकालभेदस्य सूक्ष्मत्वेन दुरवसेयत्वाद्युगपदिव तदनुभवं मन्यते भवान्। चित्तमपि नेन्द्रियैः सह युगपत्संबध्यते, किं तु क्रमेणैवोपलक्षणत्वात्। नापि शिरःपादादिभिः स्पर्शनेन्द्रियदेशैर्युगपत्संबध्यते, अत्र दृष्टान्तो यथा—इह दीर्घां शुष्कां शष्कुलिकां लोके परदेशीमधुराम्लिकां कस्यचिद्भक्षयतस्तद्रूपं चक्षुषा वीक्षमाणस्य रूपज्ञानमुत्पद्यते, तद्गन्धं च घ्राणेनाजिघ्रतो गन्धज्ञानं, तद्रसं च रसनयाऽऽस्वादयतो रसज्ञानं, तत्स्पर्शं च स्पर्शेन वेदयतः स्पर्शज्ञानं, चर्वणोत्थं तच्छब्दं च शृण्वतः शब्दज्ञानमुपजायते, एतानि पञ्चापि ज्ञानानि क्रमेणैव जायन्ते, अन्यथा साङ्कर्यादिदोषप्रसङ्गात्,

मत्यादिज्ञानोपयोगकाले चावध्याद्युपयोगस्य प्राप्तेः। एवं च घटादिकमर्थं विकल्पयतोऽनन्तानामपि घटाद्यर्थविकल्पानां प्रवृत्तिप्रसङ्गात् । न चैतदस्ति । श्रीमज्जिनपरमात्मगुणस्मरणध्यानोपयोगप्रवृत्तिसमये युगपन्मिथ्यात्वतर्कासुरादिध्यानोपयोगाविर्भावः प्रसज्यते, इत्याद्यनेकदोषास्त्वन्मत्योत्पद्यन्ते, तदा न चिन्तितार्थो लभ्यते । अतः स उपयोग एकदैक एव भवति, न त्वनेके । तथा तेनैव प्रकारेण कर्मबन्धनिर्जरणादीनि घटन्ते । अत्रार्थे प्रसन्नचन्द्रदृष्टान्तभावना कार्या । श्रेणिकेन पृष्टं प्रसन्नचन्द्रर्षिस्वरूपं श्रीवीरजिनः प्राह तच्चित्तगतप्रशस्तोपयोगपरावर्तनानुसारेण गतिस्वरूपं पुनः पुनश्चेति । तत्र यदि युगपदनेकोपयोगभवनं भवेत् तर्हि जिनोऽपि युगपद्गतयोऽनेका ब्रूयात्, अत एकस्मिन् काले एक एवोपयोगपक्षस्तथ्यः। उक्तं च—

यदा स्यात्प्राणिनां शीतोपयोगव्यापृतं मनः । तदा नोष्णोपयोगे तद्व्याप्रियेत विरोधतः ॥ १ ॥

यौगपद्याभिमानस्तूपयोगयुगलस्य यः । स तु मानससंचारक्रमस्यानुपलक्षणात् ॥ २ ॥

पुनः शिष्यः स्माह—"ननु ३४० मतिज्ञानविशेषेण भेदवर्णनावसरे भवद्भिरेव बहुबहुविधक्षिप्रानिश्रितासंदिग्धध्रुवसेतरवस्तुग्रहणेऽवग्रहादीनामनुज्ञानेनैकस्मिन्नुपयोगबहुता श्रुतेऽभिहितैवेति" । अत्र गुरुराख्यत्—"तद्बहुबहुविधादिरूपवस्तुनोऽनेकपर्यायाणां सामान्यरूपतया ग्रहणमात्रमेव ज्ञाने उपयोगतामात्रव्यवस्थापनमेव । एकस्मिन् वस्तुन्येककालमुपयोगानेकता क्वापि नास्ति । अत्र दृष्टान्तः—समकं सैन्यमिति यत्सामान्यं एकमप्यनिर्देश्यं सैकोपयोगता भण्यते । यः पुनः प्रतिवस्त्वेते हस्तिनोऽमी अश्वा एते पदातयो ध्वजा ढक्काः करभादयश्चेत्यादिको विभागो भेदाध्यवसायस्ते नैकोपयोगाः, तथा हे शिष्य ! एक-

स्मिन् काले बहूनि विशेषज्ञानानि भवन्ति, कुतः ? लक्षणभिन्नत्वात् सर्वेषां लक्षणं शीतोष्णादिविशेषाणां स्वरूपं तस्य परस्परं भेदाद्भिन्नतद्ग्राहकाणि ज्ञानानि समकं भवन्ति, यस्माच्चानेकविषयमनेकाधारं सामान्यमित्यतस्तदगृहीत्वा न विशेषज्ञानसंभूतिरस्तीत्यतोऽपि न युगपद्विशेषज्ञानानि, इदमुक्तं भवति—पूर्वं वेदनासामान्यं गृहीत्वा तत ईहां प्रविश्य शीतेयं पादयोर्वेदनेति वेदनाविशेषं निश्चिनोति, शिरस्यपि प्रथमं वेदनासामान्यं गृहीत्वा तत ईहां प्रविश्य उष्णेयमिह वेदना इत्यध्यवस्यति । न हि घटविशेषज्ञानादनन्तरमेव पटाश्रये सामान्यग्रहरूपेऽगृहीते पटविशेषज्ञानमुपजायत इति" । पुनः शिष्यं स आह—"एकस्मिन् काले क्रियास्तु बहव एकेन जीवेन युगपद्भाव्यन्ते नर्तकीवत्, यथा नर्तकी अभ्यासपाटवेन मुखात् हाहादिशब्दान् पठति सा विलोचनयुगं नमयन्ती हस्तपादाद्याकुञ्चनप्रसारणाङ्गुलिचालनाङ्गमोटनादिहावभावादिकान् युगपद्वितनोति, परममुपयोगस्त्वेकदाकाले एकस्यामेव क्रियायां भवतीति । अन्यो वा कश्चिज्जिनभक्तिकारक एकेन हस्तेन चामरं वीजयति, एकेन हस्तेन धूपधूमावलिं जिनाङ्गे वितनोति हस्तवाहनेन, मुखेन सद्भूतरचनाभिः स्तुतिभिर्जिनगुणगणनां तनोति, दृग्भ्यां परमेश्वरप्रतिकृतिमवेक्ष्य मस्तकं धूनयति, भूमौ युक्त्या चरणौ स्थापयति इत्यादि स्वबुद्ध्याऽभ्यूह्यं । इत्यादियुक्तिभिः प्रज्ञापितोऽसौ यदा स्वाग्रहग्रस्तबुद्धित्वान्न किञ्चित्प्रतिपद्यते तदा गणाद्बहिष्कृतो विहरन् राजगृहे नगरे समागतः तेनासन्मतेनान्यान्मुनीन् स व्युदग्राहयत्, यत आग्रही हि अन्यं स्वसमानं कर्तुमलर्कवदिच्छति । अथ तत्र च महातपस्तीरप्रभावाह्रदपार्श्वे मणिनागनाम्नो नागस्य चैत्यमस्ति ।

तत्समीपे च स्थितो गङ्गः पर्षत्पुरो युगपत्क्रियाद्वयवेदनं प्ररूपयति स्म । तच्च श्रुत्वा प्रकुपितो मणिनागस्तमवादीत्—"अरे दुष्ट! किमेवं प्रज्ञापयसि? अनेकजीवमनांसि संशययुक्तानि करोषि? यतोऽत्रैव प्रदेशे समवसृतेन श्रीवर्धमानस्वामिना एकस्मिन् समये एकस्या एव क्रियाया वेदनं प्ररूपितं, तच्चैत्यस्थितेन मयाऽपि श्रुतं । केवलिनामपि प्रथमसमये ज्ञानं विशेषात्मकोपयोगो द्वितीयसमये दर्शनं सामान्यात्मकोपयोगश्चेति, तत्किं त्वमधिकज्ञानो जातो वीरप्रभोरपि? यत्तस्य वचोऽन्यथा कुरुषे? इमां दुर्वासनां मुञ्च, विभोर्वचः स्वीकुरु, नो चेत्त्वामधुनाऽमुना मुद्गरेण शिक्षयिष्यामि, अध्यक्षसिद्धमप्यर्थं गोपयसि तन्न युक्तं, यथाऽष्टावधानादिसाधकः कश्चिद्विज्ञः श्लोकरचनासमये श्लोकं नूतनं विदधाति, वाद्यतालानि गणयति, वार्तां शृणोति, पृष्टिलिखिताक्षरं कथयति इत्याद्यष्टाधिकावधानं साधयति, तत्सर्वमाशुसंचारिमनोविज्ञानानुसारेणेति प्राकृतजना बाला आश्चर्यं वीक्ष्य जल्पन्ति—अहो! अनेन समकाले एतत्सर्वं साधितं, तन्नार्हं, क्रमेणैव तूर्णं सर्वं गृहीत्वा वदति" । इत्यादियुक्त्या तेन नागनाकिना शिक्षितः सोऽङ्गीकृतवान्, "मिथ्यादुष्कृतं मेऽस्तु" इत्यवोचत् । पुनर्गुरुपार्श्वं एत्य तत्पापमालोच्य प्रतिक्रान्तः । यत उक्तं महाभाष्ये—

अट्ठावीसा दोवाससया सिद्धिं गयस्स वीरस्स । दो किरियाणं दिट्ठी उल्लुगतीरे समुप्पन्ना ॥ १ ॥
मणिनागेणारद्धो भयोववत्ति पडिवोहिओ वोत्तुं । इच्छामो गुरुमूलं गंतूण तओ पडिक्कंतो ॥ २ ॥

गङ्गसाधुरिति तेन योगिना, संशयादिगतदोषबोधितः ।
निह्नवत्वमपहाय दर्शनं, गाङ्गवारिविमलं दधौ पुनः ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तावष्टादशस्तम्भेऽष्टषष्ट्यधिकद्विशततमं २६८ ॥ व्याख्यानम् ॥

## एकोनसप्तत्यधिकद्विशततमं २६९ व्याख्यानम् ॥

अथ निष्कांक्षिताह्वद्वितीयाचारमाह—

निष्काङ्क्षत्वमनेकेषु दर्शनेष्वन्यवादिषु । द्वितीयोऽयं दर्शनाचारोऽङ्गीकार्यः शुद्धात्मभिः ॥ १ ॥
हित्वा स्याद्वादपदं यः काङ्क्षति परशासनम् । काङ्क्षादोषान्वितः स स्यादन्यान्यदर्शनोत्सुकः ॥ २ ॥

स्पष्टौ । नवरं अन्यान्यदर्शनोत्सुकः अत्रार्थे क्षुल्लकशिष्यज्ञातेन भावार्थो वाच्यः—वसन्तपुरे देवप्रियः श्रेष्ठी, यौवने तस्य भार्या मृता, ततो वैराग्यं प्राप्तः पुत्रेणाष्टवार्षिकेण समं प्रव्रजितः । स क्षुल्लकः परीषहमसहमानो वक्ति—"तात न शक्नोमि उपानहौ विना हिण्डितुं, द्विजानां दर्शनं श्रेष्ठं, यत्रोपानहो रक्षणं" । इति श्रुत्वा गुरुर्दध्यौ—"अयं बालबुद्धिः कदाचिदाभ्यां विना सर्वथा धर्महीनो मा भूयात्" इति विचिन्त्य मोहेन पिता गृहिणं याचित्वा पुत्रस्योपानहौ कारयामास । ततोऽवक्

पुत्रः—"आतपः शीर्षं तपति, तेन हिण्डितुं न शक्यते मया, अतश्छत्रं बिभ्रतां तापसानां दर्शनं वर्यं" इति श्रुत्वा "मा धर्मपराङ्मुखः सर्वथाऽभूत्" इति ध्यात्वा छत्रिकामातपवारणायानुजानाति स्म। ततः क्षुल्लकोऽवक्—"तात! भिक्षाटनं कर्तुं न शक्नोमि, अतः पञ्चाग्निसाधकानामाचारः प्रशस्यः, यतो लोकास्तेषां प्रत्युताभिमुखमानीयाशनादिकं प्रयच्छन्ति"। गुरुस्तु पूर्ववद्विचिन्त्य स्वयं भिक्षां समानीय सूनवे दत्ते। एवं भूमौ संस्तारयितुमशक्तेन पुत्रेण "मृद्वी शय्या प्रातरुत्थाय पेया०" इत्यादिना शाक्यसिंहमतं वर्णितं। ततः पिता काष्ठफलकमनुजानाति स्म। अङ्गक्षालनाशक्तपुत्रेण शौचमूलदर्शनं वर्णितं तदा पिता प्रासुकपयोभिः स्नानमनुजानाति। एवं लोचस्थाने क्षौरं कारयति। पुनर्वक्ति सः—"तात! ब्रह्मव्रतं पालयितुं न शक्नोमि"। गोपीगोपालश्रीकृष्णलीलामवर्णयत्। एतच्छ्रुत्वा पित्रा ध्यातं—"नूनमयमयोग्योऽपरमार्थज्ञः, एतानि मया मोहात्कारितानि, परमेवं कारयन् पुत्रेण सहाहमपि नरके पतिष्यामि। संसारे जीवानामनन्ताः पुत्रा जाताः, अस्य (स्मिन्) को मोहः?"। ततो निष्कासितो गणात्। मृत्वा स सुतो महिषोऽभूत्। पिता तु स्वर्गे देवोऽजनि। अवधिज्ञानेन पुत्रं महिषं जातं ज्ञात्वा सार्थवाहरूपं विधाय तमेव महिषं पानीयानयनाय ललौ। तस्य पृष्ठे बहु नीरं संस्थाप्य निम्नोन्नतभूमौ चालयन् कशादिभिः प्रहारैरुच्चैरारटन्तं तं स्माह—"किमारटसि? पूर्वभवकृतकर्मफलं समायातं" "तात! न शक्नोमि" इत्यादिपूर्वभवोक्तानि वचांसि सुरेण पुनः पुनः प्रोक्तानि। तानि वचांसि शृण्वन्महिषो जातिस्मरणं प्राप। पश्चाद्भवं स्मृत्वा पुनः पुनरश्रुप्रवाहं मुञ्चन् दध्यौ—"मया तु पित्रोक्तं चारित्रं न

पालितं, तेन मृत्वाऽहं महिषो जातः" ततो देवेनोक्तं—"अहं तव पिता, त्वां पश्चात्तवं स्मारयितुमागां, यद्यग्रे शुभगतिस्पृहाऽस्ति तदाऽनशनं लाहि" । ततो महिषोऽनशनं गृहीत्वा वैमानिकः सूरो बभूव । अतः शुद्धं व्रतं पालनीयं ।

अन्यान्यदर्शनाचारो न काङ्क्ष्यः क्षुल्लकर्षिवत् । तदेव सत्यं विज्ञेयं यज्जिनैश्च प्रवेदितम् ॥ १ ॥

इति । अथात्रार्थेऽन्योऽपि संबन्धः प्रतन्यते—मिथिलापुर्यां लक्ष्मीचैत्ये श्रीमहागिरिसूरयः समवासार्षुः तेषां शिष्यः कौण्डिन्यो नाम, तस्यापि शिष्योऽश्वमित्रः, स दशमपूर्वं पठति स्म, तन्मध्ये नैपुणिकं वस्तु पठतस्तस्यायमर्थ आगमत्—"पडुप्पन्नसमयनेरइया सवे वोच्छिज्जिस्संति, एवं जाव वेमाणिए त्ति, एवं बीआइसमएसु वि वत्तवं" । अत्र संशयः समुत्पन्नः—उत्पादानन्तरमेव सर्वं वस्तु सर्वथा विनश्वररूपं इत्येवं बोधो जातः, तेनान्यान् व्युदग्राहयत्, ऊचे च—"सर्वथा सर्ववस्तु प्रतिक्षणमुत्पन्नं नाशं याति, यथा शक्रचापविद्युद्घनादयः" । अत्रोत्तरं गुरुः स्माह—"ननु प्रतिसमयविनाशित्वं वस्तूनामित्येतदेकस्यैव बोधवादिन ऋजुसूत्रनयस्य मतं, अत्र स्वपरापरपर्यायोत्पत्तिनाशाद्यपेक्षया केनचिदेव प्रकारेण वस्तूनां नाशोऽनुक्षणमिष्यते । यस्मिन्नेव समये तन्नारकवस्तु प्रथमसमयनारकत्वेन समुच्छिद्यते तस्मिन्नेव समये द्वितीयसमयनारकत्वेनोत्पद्यते, जीवद्रव्यतया त्ववतिष्ठत एव, अतो यदि नामाद्यपर्यायमात्रमुत्सन्नं ततः सर्वस्यापि वस्तुनः समुच्छेदः कथं घटते ? अनन्तपर्यायात्मकस्य वस्तुन एकपर्यायमात्रच्छेदे सति सर्वच्छेदस्यातिविरुद्धत्वादिति । अथ सूत्रालापकमवगम्य भ्रान्तस्तर्हि सूत्रस्यैव वाक्यं

शृणु—"नेरइया णं भंते किं सासया वा असासया वा? गोयमा! सिय सासया सिय असासया। से केणट्ठेणं? गोयमा! दव्वट्ठयाए सासया भावट्ठयाए असासय त्ति"। अपि चात्रापि सूत्रे न सर्वथा नाशोऽभिहितः, किंतु प्रथमसमयनारकत्वेन विनश्यन्ति, न तु सर्वथा द्रव्यार्थतया शाश्वतत्वादिति। यदि तु सर्वथा नाशस्तर्हि प्रथमसमयोत्पन्ननारकस्य निरन्वयनाशेन नष्टत्वाद्द्वितीयसमयोत्पन्ननारक इति विशेषेण व्यपदेष्टुं कथं युज्यते? अथवा पर्यनुयुज्यते भवान्—ननु सर्वं वस्तु क्षणिकमित्येतत्कथं भवता ज्ञातं? इति वक्तव्यं, श्रुतादिति चेन्ननु ततः श्रुतादर्थविज्ञानमसङ्ख्येयसमयैर्निष्पन्नो यः सूत्रार्थग्रहणपरिणामस्तस्मादेव युक्तं, न तु प्रतिसमयविनाशो, इदमुक्तं भवति—असङ्ख्येयानेव समयान् यावच्चित्तस्यावस्थानं न सर्वं क्षणिकं, कुतः?; यस्मात्पदस्य सावयवत्वात् तत्सम्बन्धि एकैकमप्यक्षरं सङ्ख्यातीतसामयिकं, असङ्ख्यातैः समयैर्निष्पद्यत इत्यर्थः। अन्यानपि क्षणभङ्गवादे दोषान् शृणु—प्रतिकवलभोक्ता देवदत्तः क्षणिकत्वादन्यश्च भवति, भोजनक्रियायाश्चान्ते सोऽपि भोक्ता सर्वथा न भवति, क्षणिकत्वात्तस्य। ततश्चैकस्मिन्नन्त्ये कवलक्षेपे का तृप्तिः? भोक्तुश्चाभावात्कस्यासौ तृप्तिः? एवमुक्तानुसारेण गन्त्रादीनामपि श्रमाद्यभावः स्वबुद्ध्याऽभ्यूह्यः, इत्येवं समस्तलोकव्यवहारोच्छेदप्रसक्तिः। उक्तं च—

भुक्तिप्रारम्भकोऽन्यः स्यात्तृप्तिरन्यस्य जायते। अन्यो गच्छति पन्थानमन्योऽनुभवति श्रमम् ॥ १ ॥
पश्यत्यन्यो घटाद्यर्थान् ज्ञानमन्यस्य जायते। अन्यः प्रारभते कार्यं कर्ता चान्यो भवेज्जनः ॥ २ ॥
अन्यः करोति दुष्कर्म नरके याति चापरः। चारित्रं पालयत्यन्यो मुक्तिमन्योऽधिगच्छति ॥ ३ ॥

किंच सर्वथा प्रतिक्षणं वस्तुनाशे मूलस्वरूपेण क्षणान्तरे पदार्थः कथं दृश्यते ? वासनासंतानेनेति चेत्तर्हि वासनासंतानं तु क्षणिकधर्मेण मज्जितं । अनेकक्षणविनाशेऽपि तदवस्थानं चेत्तर्हि भवन्मते महती हानिः प्रसज्यते, हृदये मिथ्यात्ववृद्धिः, कुत इति ? यस्मान्नैकान्तेन पर्यायमयं नाप्येकान्तेन द्रव्यरूपं, किं त्वनेकपर्यायमुत्पादव्ययध्रौव्यरूपत्वाद्भुवनविमानद्वीपसमुद्रादिसर्वमपि वस्तु नित्यानित्यादिरूपतया विचित्रपरिणाममनेकस्वरूपं भगवताऽभिहितं । क्वचिद्व्यवहारमुद्दिश्य वाक्यमुद्दिष्टं, क्वचिन्निश्चयमुद्दिश्य वाक्यं निगदितं, क्वचिदुभयात्मकं च जिनैः प्रोक्तं, तत्सर्वं यथार्थबुद्ध्या स्वीकार्यं, न जिनवचनेषु स्वमतकल्पना विधेयेति । एकस्मिन्नेव पर्यायनयेऽङ्गीक्रियमाणे सुखदुःखबन्धमोक्षादयो न घटन्ते, उत्पत्त्यनन्तरं सर्वथा नाशादिति हेतुः, मृतस्येवेति दृष्टान्तः । न च द्रव्यार्थिकनयपक्षे केवले समाश्रीयमाणे सुखादि घटते, एकान्तनित्यत्वेनाविचलरूपत्वान्नभस इवेति, तस्मादुभयपक्ष एव सर्वमिदमुपपद्यते, एकान्तपक्षस्तु दोषलक्षकक्षीकृतत्वात्त्याज्य एवेति । इत्यादियुक्त्या बोधितोऽपि स्थविरैः स मुनिर्यदा न मेने तदा निह्नवोऽयमिति ज्ञात्वा स्वगच्छतो बहिष्कृतः । ततो व्युद्ग्राहितैः साधुभिः सार्धं भूतले भ्रमन् राजगृहेऽगात् । तत्र राज्ञः शुल्काध्यक्षाः श्रावकोत्तमा बभूवुः, ते च तान्निह्नवानागतान् ज्ञात्वा "कर्कशेनापि कर्मणा एतान् बोधयाम" इति दध्युः । ततस्ते कशादिभिस्तेषां ताडनमारेभिरे । ततस्ते भयभ्रान्ता मुनय ऊचुः—"पुरा यूयं जनश्रुत्या श्रावका अस्माभिः श्रुताः, तत्किमस्माकं व्रतिनां विध्वंसं विधत्थ ?" । श्राद्धाः प्रोचुः—"भवन्मते यैर्व्रतमात्तं ते सर्वे व्युच्छिन्नाः, यूयं चान्ये केचनोत्पन्नाः । किं च

प्रतिक्षणं युष्मान् स्वयमेव विनश्वरानन्यो विनाशयति, अन्यो विनश्यति, युष्मन्मते वयमप्यपरे, न तु श्राद्धाः । अथ चेत् स्वामिसिद्धान्तमुत्तमं प्रमाणीकुरुत तदा तु युष्मांस्तानेव श्रमणोत्तमान् श्रद्दध्मः, न च युष्मान्नाशयामः । यतः स्वामिनो मते कालादिसामग्र्या तदेव वस्त्वेकसामयिकत्वेन व्युच्छिद्यते, अपरं पुनः द्विसामयिकभावेनोत्पद्यते, क्षणान्तरे द्विसामयिकतां परित्यज्य त्रिसामयिकं भवेत् । एवं पुनः पुनश्चतुरादिक्षणेष्वपि वाच्यं । नारकाद्या अनेनाशयेन क्षणिका मताः" । इति श्रुत्वा प्रबुद्धास्ते क्षणक्षयकदाग्रहं हित्वा विभोर्वाणीं तथेति प्रतिपेदिरे । ततस्तैर्मुदितैः श्राद्धैः क्षमयित्वा वन्दितास्ते स्वदर्शनं निर्मलीचक्रुः । असौ निह्नवस्तुर्यः स्वामिमोक्षाज्जाते विंशत्यधिकेऽब्दशतद्वये समुत्पन्नः ।

बौद्धे पदार्थाः क्षणभङ्गुराः स्युः, स्वीकृत्य तद्भासनमश्वमित्रः ।
सर्वत्र हानिं महतीं ललौ स, निष्काङ्क्षताऽतोऽन्यमतेषु धार्या ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तावष्टादश-
स्तम्भ एकोनसप्तत्यधिकद्विशततमं २६९ व्याख्यानम् ॥

## सप्तत्यधिकद्विशततमं २७० व्याख्यानं ॥

अथ विचिकित्सेति तृतीयदर्शनाचारमाह—

विचिकित्सा ससंदेहा धर्मक्रियाफलं प्रति । तद्दोषः सर्वथा त्याज्यो दर्शनाचारचारिभिः ॥ १ ॥

स्पष्टः । भावार्थस्तु भोगसारसंबन्धेन ज्ञेयः—काम्पिल्यपुरे भोगसारेभ्येन द्वादशव्रतधारकेण श्रीशान्तिनाथप्रासादः कारितः । प्रत्यहं त्रिसन्ध्यं भक्त्या निराशीभावेन स पूजयति श्रीपरमेष्ठिनं । एकदा कालान्तरे मृतायां पत्न्यां गृहनिर्वाहाभावं मत्वाऽन्यां प्रियामङ्गीचकार । सा तु नित्यचपला प्रच्छन्नं धनं हृत्वा ग्रन्थिं कुर्वती स्वेच्छया भुङ्क्ते स्म । क्रमात्सर्वं धनं क्षीणं । ततो ग्रामान्तरे श्रेष्ठी वासमकार्षीत्, परं जिनपूजां द्विधा न मुञ्चति, भावपूजां तु कदाचिदपि त्रिकालं न त्यजति । एकदा स्त्रीप्रमुखजना इत्थं प्रोचुः—"किमर्थं निग्रहानुग्रहपरिपाकादर्शिनं वीतरागं देवं भजसि ? इह त्वध्यक्षफलं दारिद्र्यं समागतं, प्रत्यक्षदेवान् हनुमद्विनायकचण्डीक्षेत्रपालादीन् भज, ये संतुष्टा झटितीप्सितं पूरयन्ति" । इति श्रुत्वा श्रेष्ठी दध्यौ—"अहो ! इमे परमार्थाज्ञा मोहमद्यपाः किं किं न जल्पन्ति ? प्राग्भवादौ न्यूनपुण्यानि विधायाधुना संपूर्णपुण्यं भोक्तुं स्पृहयन्ति तन्मिथ्यात्वमूढचेष्टितं । अत्र हनुमच्चण्डेशाद्याः किं वितन्वन्ति ? यादृशमात्मनोप्तं तादृशं लूयते, अत्र न कस्यापि दोष उद्भाव्यः, परं परमात्मनः स्मरणं तु अहर्निशं संसारध्यानविस्मृत्यर्थं विधीयते, वीतरागगुणगणनां विना संसाररागहानिः कथं स्यात् ? धिग्मिथ्यात्वमग्नान् मूढान् ये परमात्मानं संसारक्रियानिष्पादनार्थं निष्पत्त्यनन्तरं वा स्तुतिवाक्यैः स्तुवन्ति—अहो सत्योऽयं परमेश्वरः, मत्कार्यमनेन शीघ्रं कृतं, मत्पुत्रपुत्रीणां विवाहादिसंबन्धः सहसा कुतोऽप्यानीय मेलितः । केचिदित्थं वदन्ति—परमेश्वरेणात्र युद्धे सङ्ग्रामे मम महद्यशो दत्तं इत्यादिस्वस्वप्राकृतकार्येषु प्रयत्नसमन्वितं प्रभुं मुधा मुग्धा विदधति" । इत्यादि स्वबुद्ध्या

शुभं वर्यं विचिन्त्य स श्रेष्ठी न मनाग्मनसि विचिकित्सां दधौ। अथ धनाभावाच्छ्रेष्ठी कृषिकर्म विधत्ते स्म। सा स्त्री पक्वान्नादि भक्षयन्ती भर्तुश्चपलादि कदन्नं दत्ते। श्रेष्ठी नाम्नैव भोगसारोऽभूत्, पत्नी तु भोगवती जाता, क्रमात्कुटिलाशया परनरेण सह भोगान् भुनक्ति स्म। एकदा शान्तिजिनस्याधिष्ठाता सुरो दध्यौ—"प्रभोः कथमधुनोदारा धूपादिद्रव्यपूजाऽनेकजनमनोह्लादका न जायते?"। ततोऽवधिना सुरो भोगसागरे दारिद्र्योत्पत्तिं विज्ञाय "अयं जिनेन्द्रभक्तः श्रेष्ठी चपलक्षेत्रलूनकोऽभूत्, भार्या कुटिला पत्यभक्ता इति मया भोगसागरस्य सांनिध्यं कार्यं" इति निश्चित्य श्रेष्ठिनो भागिनेयस्वरूपं कृत्वा मातुलगृहे गत्वा च मातुल्या जोत्कारः कृतः, पृष्टं च—"क मे मातुलोऽस्ति?"। मातुल्योक्तं—"क्षेत्रे तव मातुलः क्षेत्रं खेटयन्नस्ति"। ततः क्षेत्रे गत्वा मातुलस्यांह्री प्रणम्य स्थितोऽयं यदा तदा मातुलोऽवक्—"किमर्थमागाः"। भागिनेयसुरो जगौ—"तव साहाय्यकरणार्थं"। ततो मातुलोऽवक्—"गृहे गत्वा भुङ्क्ष्व"। भागिनेयोऽवक्—"आवाभ्यां सार्धमेव जेमिष्यते"। श्रेष्ठी स्माह—"क्षेत्रे लवनकरणेन महती वेला भविष्यति, एतावत्कालं त्वं बालः कथं क्षुधां सहिष्यसे?" स आह—"अहमपि लवनक्रियां विधास्ये"। इत्युक्त्वा दैवतशक्त्या लवनं कृत्वैकत्र स्थापितं सर्वं। मातुलोऽवक्—"अथ चपलाः कथं गृहे लास्यन्ते?"। ततः स सर्वं चपलादि क्षेत्रसत्कमुत्पाट्य गृहं प्रति चचाल। इतः सा स्त्री स्वपतिभागिनेयावागच्छन्तौ ज्ञात्वा स्वपार्श्वस्थं जारं गोमाणिमध्ये छन्नं ररक्ष, लपनश्र्यादिरसवर्ती च कोष्ठिकाया-

१ भाषायां चोला. २ गोबन्धनस्थानं लोके "गमाण" इति ख्यातम्.

मदीप्सीत् । तदा भागिनेयोऽभ्येत्य मातुल्या जोत्कारं कृत्वाऽऽह—"मातुलः समायातः, आगतस्वागतादि क्रियतां" । ततः सद्यो गोमाणिकाया उपरि चपलकभारं मुक्त्वा कणीकर्तुं चपलान् कुट्टयितुं लग्नो भागिनेयः । तदा जारो जर्जरीभूतः स्वं मृतप्रायं मेने । तदा भोगवती स्वस्योपपतिं मृतप्रायं ज्ञात्वा प्राह—"अधुना भुङ्क्ष्व त्वं, श्रान्तोऽभूः" । ततो द्वावपि जेमितुमुपविष्टौ, तदा चपलादिकदन्नं परिवेषितुमारेभे तया, तदा भागिनेयो जगौ—"अहं कदन्नं न भोक्ष्ये" । तयोक्तं—"वर्यमन्नं कुतो दीयते ?" । भागिनेयोऽवक्—"अहमत्र स्थितः कोष्ठिकामध्यस्थां लपनश्रियमध्यक्षं पश्यामि, कथं त्वं न परिवेषयसि ? स्वामितोऽधिकं किमपि नास्तीति ध्येयं" । ततः सा चकिता लपनश्रियं परिवेष्य दध्यौ—"अहो ! महदाश्चर्यं ! मद्गुह्यं कथं वेत्त्यसौ ? नूनमस्य भूतप्रेतव्यन्तरडाकिनीत्वं विद्यते, नो चेदन्नं स्थापितं कथं जानाति ?" । ततस्तौ भुक्त्वा सुप्तौ । तदाऽवसरं प्राप्य स जारो निःसृतः । देवस्तु सर्वं जानन्नपि मौनं विधाय स्थितः । अथ स मातुलं प्राह—"कथं शामलसूनोर्विवाहो न क्रियते ?" । श्रेष्ठी स्माह—"हे भागिनेय ! कथं धनं विना मनोरथाः पूर्यन्ते ?" । सुरो भणति—"मामक ! त्वमुत्तिष्ठ, भूमिगतनिधानं त्वत्सत्कं दर्शयामि" । ततस्तस्याः पश्यन्त्या भूमितो द्रव्यं निष्कास्य दत्तं । सा विलक्षा दध्यौ—"मया चौर्यं विधाय गुप्तीकृतमपि सर्वं धनमनेन प्रकटीकृतं, अयं ननान्दृपुत्रो डाकिन एव कुतः समागतः ? अस्यानुनयं संपूर्णं करोमि, अन्यथा कुपितः सर्वं गुह्यं प्रकाशयिष्यति" । ततोऽन्तः कलुषितगात्रा सा तमश्लाघत—"अहो ! भागिनेय ! धन्या तव प्रज्ञा, अस्मद्दारिद्र्यं त्वयोन्मूलितं" ।

अथ शुभदिने श्रेष्ठिना विवाहोत्सवः प्रारब्धः । तदा तयाऽभीष्टस्योपपतेर्निमन्त्रणं कृतं "यत्त्वया स्त्रीवेषधारिणा स्त्रीमध्ये भूत्वा भोजनायागन्तव्यं" । ततो विवाहदिने भोजनावसरे स्त्रीवेषभृत्स उपपतिर्जेमितुमागात् । यदा भोजनार्थं स्त्रीवृन्दमध्ये स्थितस्तदा स क्षुरो जगौ—"मयाऽद्य परिवेषणं करिष्यते" । मातुलोऽवक्—"त्वमेव कुरु" । यदा भागिनेयः परिवेषयन् तस्य स्त्रीरूपधारिणो भाजने परिवेषयितुं याति तदा स तन्नं वक्ति—"त्वं गोमाणिमध्ये जर्जराङ्गोऽभूः ?" । स आचष्ट—"नाहं सः" एवं त्रिस्त्रिः प्रोक्तं । तदा सर्वे तं क्षुरं पप्रच्छुः—"किममूं बालां मुग्धां पृच्छसि ?" । स जगौ—"एषा स्त्री सर्वपक्वान्नादेर्निषेधं करोति, हे बाले ! अल्पमपि त्वं न जेमसि तर्हि स्त्रीवृन्दमध्ये तवोपवेशनं नार्हं, त्वमल्पक्षुधावत्यसि" । एवं प्रोच्य प्रोच्य यदा तस्याः किमपि न परिवेषितं तदा भोगवत्या अतिचिन्ता जाता । ततो मिषं किमपि कृत्वा तन्नं मोदकानानीय तस्य पात्रे मोदकाः परिवेषितास्तया । तेन तु कियन्तो भुक्ताः, चत्वारश्च कुक्षौ क्षिप्ताः । ततः सर्वासु स्त्रीषु भुक्तोत्थितासु भागिनेयोऽवक्—"प्रत्येकं मम मातुलमण्डरूपमङ्गलैर्वर्धाप्यतां" । सर्वाभिः स्त्रीभिः मङ्गलार्थं प्रत्येकं मण्डरूपे वर्धापिते यदा सा मण्डरूपं न वर्धापयति तदा भागिनेयो जगौ—"मातः ! त्वं किं न वर्धापयसि ? पङ्क्तौ भोक्तुमुपविष्टा, अधुना पङ्क्तितः पृथग्भवनं तव न योग्यं" । ततो यदा सा वर्धापयितुं लग्ना तदा कुक्षितो मोदकाः क्षितौ पेतुः, सा त्वतीव लज्जिता शीघ्रमन्यत्र ययौ । अत्र मातुलेनोक्तं—"मोदकाः कुत आयाताः ?" । स जगौ—"तव पुत्रविवाहोत्सवे मण्डरूपो मोदकान् वर्षति साम्प्रतं" । मातुलो जगौ—"भागिनेय ! त्वं कथं ज्ञानी जातोऽसि ?" । स प्राह—"विजने सर्वं

कथयिष्ये" । ततो विवाहानन्तरं स्वरूपं प्रकटीकृत्य सर्वं वृत्तान्तमुक्त्वा श्रेष्ठिपत्नीमिति जगौ—"हे स्त्रि ! तव स्वामी कीदृशः परमात्मभक्तितत्परोऽस्ति ? तादृशी त्वं भव, किममुकेनोपपतिना सह रमसे ? तव चेष्टितं सर्वमहं वेद्मि, परं श्रीत्रिभुवनैकशरणदवीतरागभक्तभोगसारभार्यात्वेन तवोपेक्षा कृता । अथ हे स्त्रि ! त्वं समस्तदम्भं विहाय धर्मकार्ये मनो विधेहि । भूयो भूयोऽनन्तशो भोगेष्ववाप्तेष्वपि प्रमादज्ञानाच्च ध्यायति—मया भोगाः कदापि न लब्धाः । अतो मूढानां कामभोगेषु समीहा नोपशाम्यति । तेषां वैराग्यमपि दुर्लभं । यतोऽध्यात्मसारे—

सौम्यत्वमिव सिंहानां पन्नगानामिव क्षमा । विषयेषु प्रवृत्तानां वैराग्यं खलु दुर्लभम् ॥ १ ॥

अतः स्वात्मनि वैराग्यं धृत्वा सर्वभवपापसंचितकर्मक्षयकरणार्थमनादिभ्रान्तिवान्तिकरणार्थं चानेकशुभोत्तमधर्मकार्येषु महोद्यमं सर्वद्रव्यभावभेदजं दम्भं त्यक्त्वा कुरु । दम्भस्तु सर्वपापनिबन्धनं अनेकशुभगुणहानिकृज्ज्ञेयः । यतः—

सुत्यजं रसलाम्पट्यं सुत्यजं देहभूषणम् । सुत्यजाः कामभोगाश्च दुस्त्यजं दम्भसेवनम् ॥ १ ॥
किं व्रतेन तपोभिर्वा दम्भश्चेन्न निराकृतः । किमादर्शेन किं दीपैर्यद्यान्ध्यं न दृशोर्गतम् ॥ २ ॥
अहो मोहस्य माहात्म्यं दीक्षां भागवतीमपि । दम्भेन यद्विलुम्पन्ति कज्जलेनेव रूपकम् ॥ ३ ॥
अध्यात्मरतचित्तानां दम्भः स्वल्पोऽपि नोचितः । छिद्रलेशोऽपि पोतस्य सिन्धुं लङ्घयतामिव ॥४॥
दम्भलेशोऽपि मल्ल्यादेः स्त्रीत्वानर्थनिवन्धनम् । अतस्तत्परिहाराय यतितव्यं महात्मना ॥ ५ ॥

इत्यादिशिक्षां श्रुत्वा सा प्रबुद्धा द्वादशव्रतानि जग्राह । ततो देवो लक्षटङ्कान् दत्त्वा तिरोदधे। अथ स श्रेष्ठी पत्नीसहितः श्राद्धधर्मं प्रपाल्य देवभूमिं प्राप । क्रमेण श्रेष्ठ्यचिरेण मुक्तिसौख्यं प्रकटीचकारेति ॥

विचिकित्सा धर्मकृते त्याज्या श्रीभोगसारवत् । तस्य देवोऽपि सान्निध्यं वितनोत्युपजीविवत् ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तावष्टादशस्तम्भे सप्तत्यधिकद्विशततमं २७० व्याख्यानम् ॥

## ॥ समाप्तोऽयमष्टादशः स्तम्भः ॥

## આચાર્ય શ્રીરામસૂરીશ્વરજી જૈનગ્રંથમાળાના પુષ્પો.

| | | કિંમત |
|---|---|---|
| 卐 | (૧) શ્રીજૈન ધર્મ પ્રકરણરત્નાકર આવૃત્તિ પહેલી | અમૂલ્ય |
| 卐 | (૨) ,, ,, ,, ,, બીજી | ૩—૫૦ |
| | (૩) ,, ,, ,, ,, ત્રીજી | ૧૦—૦૦ |
| 卐 | (૪) સ્વાધ્યાય સૌરભ | ૧—૦૦ |
| | (૫) જ્ઞાનપદ પુજા | સદુપયોગ |
| | (૬) પચ્ચખ્ખાણ સમય દર્શિકા—ગુજરાતી | ,, |
| | (૭) ,, ,, ,, હિન્દી (કલકત્તામુજબ) | ,, |
| | (૮) યતિશ્રાદ્ધ વ્રતવિધિ સંગ્રહ પ્રતાકારે | ૪—૭૦ |
| | (૯) કથા મૌતિકમાલાં આવૃત્તિ પહેલી | ૨—૦૦ |
| 卐 | (૧૦) ,, ,, ,, ,, બીજી | ૩—૦૦ |
| | (૧૧) મૈં સાધુ બન જાઉગા હિન્દીકથા સંગ્રહ | ૩—૦૦ |
| 卐 | (૧૨) ચમત્કારના ચમકારા (કથા સંગ્રહ) | ૩—૫૦ |
| | (૧૩) પંચપ્રતિક્રમણ સુત્ર (હિન્દી) | પઠન-પાઠન |
| | (૧૪) અભય ગીત ગુંજન (નૂતન ગીત ગહુંલી) | ભક્તિ |
| | (૧૫) સમ્યગ્ દર્શન (પ્રવચન સંગ્રહ) | ૨—૦૦ |
| | (૧૬) એક રાતની ચોક (કથા સંગ્રહ) | ૫—૦૦ |
| | (૧૭) સુવર્ણાક્ષરીય શ્રી કલ્પસુત્ર સચિત્ર | ૨૫૦—૦૦ |
| | (૧૮) શ્રુતજ્ઞાન અમિધારા | ૧૫—૦૦ |
| | (૧૯) પ્રમાણનય તત્વલોકાલંકાર | ૫—૦૦ |
| | (૨૦) ક્રિયારત્ન સમુચ્ચય | ૬૦—૦૦ |
| | (૨૧) મધુર કથા માળા | ૧૨—૦૦ |
| | (૨૨) શારદાપૂજન વિધિ (જૈન વિધિ મુજબ) | ૧—૦૦ |
| | (૨૩) સ્વાધ્યાય રત્નાકર | ૨૫—૦૦ |
| | (૨૪) પ્રારબ્ધ (કથા સંગ્રહ) | ૧૨—૦૦ |
| | (૨૫) શ્રીભક્તામર સ્તોત્ર પ્રાચિન યંત્રો સહિત | નિત્યપાઠ |
| | (૨૬) ઉપદેશપ્રસાદ ગ્રંથ ભાગ ૧ થી ૪ | ૧૭૫—૦૦ |

( 卐 આ ચિન્હવાળા પુસ્તકો અપ્રાપ્ય છે )